## ॥ परिभाषासूचिका ॥

॥ श्रीः ॥

# ॥ परिभाषेन्दुशेखरः ॥



नत्वा साम्बशिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥

प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ज्ञापकन्यायसि-

---

॥ श्रीः ॥

## परिभाषेन्दुशेखरव्याख्या

# गदा

वैद्यनाथः पायगुण्डो नत्वा नागेश्वरं गुरुम् ।
विवृतिं परिभाषेन्दुशेखरे तनुते गदाम् ॥

प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानतिरूपं मङ्गलमाचरन्, शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति— नत्वेति । निर्गुणमूर्तेर्नतेरसम्भवादाह— साम्बेति । रूपकमिदम् । बालानां भाष्यादितः परिभाषार्थनिर्णयासमर्थानाम् । परिभाषा एवेन्दुः अर्थप्रकाशकत्वात् स शेखरो यस्येति ग्रन्थपक्षे; तत्र तासामेव व्याख्येयत्वेन ग्रन्थस्य मस्तकभूतत्वमारोप्यते । यद्वा स शेखरो भूषणं यस्य । यद्वा तस्य शेखर आश्रयः । यद्वा तासां प्रकाशकोऽलङ्कारस्तम् । शिवपक्षे तु परिभाषा इवेन्दुरित्यादि स्पष्टमेव ॥

ननु कास्ता परिभाषा अत आह— प्राचीनेति । इन्द्रादीन्यर्थं । वाचनि-

द्धानि भाष्यवार्तिकयोर्निबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ।

ननु लण्‌अइउण्सूत्रयोर्णकारस्यैवोपादानेन अणिण्ग्रहणेषु संदेहादनिर्णय ; अत आह—

**व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् ॥ १ ॥**

विशेषस्य अन्यतरार्थरूपस्य व्याख्यानात् शिष्टकृतात् प्रतिपत्ति निश्चय , हि यत संदेहात् शास्त्रम् अलक्षणम् अननुष्ठापक लक्षणम्, तथा न,

---

क्तानि सूत्ररूपेण पठितानि । अत्र अस्मिन् । एवमग्रेऽपि । ज्ञापकेति । अस्य प्राणेत्यादि । तथा च वाचनिकानामपि तत्साहचरिताना संग्रह । न्यायसिद्धात् ज्ञापकसिद्धस्याभ्यर्हितत्वात् ज्ञापकशब्दस्य द्वन्द्वे पूर्वनिपात । तत्र एतच्छास्त्रीयलिङ्गं ज्ञापकम्, एतच्छास्त्रलोकनन्यान्तरप्रसिद्धयुक्तिर्न्याय । सूत्रपाठस्थपरिभाषाणामत्र व्याख्यानाय प्राचीनोक्तानां वाक्यानांचित्प्रामाण्याय चाह— भाष्येति । अनेन स्वप्रयुक्तताग्रच्छेदकमुक्तम् । तथा च शुद्धरूढमिदं परिभाषापदम् । यद्वा योगरूढमस्तु, 'परितो भाष्यते या सा' इति योगसम्भवात्, अत एव 'परितो व्यापृता भाषा परिभाषा प्रचक्षते' इत्यभियुक्तोक्ति, 'परिभाषा पुनरेकदेशस्था' इत्यादिभाष्यं च सङ्गच्छते । एतेन शुद्धयौगिकमिदमिति भ्रान्तोक्तिरपास्ता, सञ्ज्ञादिष्वतिप्रसङ्गादिति भाव । पुन प्रतिज्ञा तु स्पष्टार्था, यथा तथा प्रतीते ॥

तत्र भाष्ये सर्वत्र पूर्वम् 'व्याख्यानत —' इत्यस्या उक्तत्वेन सर्वशास्त्रोपकारकत्वेन च तां तावदुक्तु शङ्कते— नन्विति । विशेषेति । 'कर्तृकर्मणो —' इति कर्मषष्ठ्यन्तेन समास । 'उभयप्राप्तौ—' इत्यस्यानित्यत्वेन एव प्रवृत्तेः प्रवृत्त्या 'कर्मणि—' इति निषेधाप्रवृत्त , शेषषष्ठ्या वा समास , तद् ध्वनयन्नाह— विशेषस्येति । षष्ठ्यन्तं अन्यतमस्यादिना परामर्श । व्याख्यानादिति । 'पदच्छेद पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्' इत्युक्तपदच्छेदाद्यन्यतमादित्यर्थ । ननु तदन्यतमप्रमत्तस्याप्याह— शिष्टेति । भाष्यकारादीनाम् । प्रस्तुतसंवादाह— शास्त्रमिति । प्रकृतत्वादित्यर्थ । ननु तत्र लक्षणस्य तत्र च विरोध इत्यत आह— अननुष्ठेति । तदनुष्ठानजनकत्वाभावादित्याह ।

तत्परिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः। देशश्च उच्चारणकाल एवात्र शास्त्रे व्यवह्रियते। तत्तद्वाक्यार्थबोधे जाते भविष्यति किंचिदनेन प्रयोजनमिति ज्ञानमात्रेणमंतुप्यचयाश्रुतग्राहिप्रतिपत्त्रपेक्षोऽयं पक्ष इति ईदूत्सूत्रे कैयटः। केचित्तु परिभाषाविषये 'तस्मिन्—' इत्यादिवाक्यार्थबोधे सप्तमीनिर्देशादि क्वेति पर्यालोचनायां सकलतद्विध्युपस्थितौ सकलतत्संस्काराय गुणभेदं परिकल्प्य एकवाक्यतयैव नियमः। कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः। एतदेवाभिप्रेत्य 'अधिकारो नाम त्रिप्रकार—कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वल-

---

च। तथा चोपदेश एवोद्देशोऽर्थः। अयम् उद्देशशब्द। व्युत्पत्तिं सूचयितुमत्र पक्षे निर्वाहमाह— यत्रेति। एतेन विधिदेशव्यावृत्तिः। संज्ञास्थले आह— गृहीतेति। परिभाषास्थले आह— गृहीतपरीति। उभयत्र कर्म ग्राह्य। सर्वत्र अष्टाध्याय्याम्। ननु कोऽसावत्र देशः, यत्र वाक्यार्थबोधः; प्रसिद्धदेशस्त्वत्र न सम्भवतीत्यत आह— देशश्चेति। यस्तर्णे। व्यवह्रियत इति। तथा च न मुख्य तत्त्वम्, किं तु आरोपितमिति भावः। नन्वेवं तदानीं विधिवाक्यार्थाज्ञानेन किमस्य फलमित्याकाङ्क्षाशान्त्यभावेन दुष्ट एवाय पक्षोऽत आह— तत्तदिति। संज्ञापरिभाषावाक्यार्थेत्यर्थः। अनेन शास्त्रग्रहेण परिभाषार्थग्रहेण च। मात्रपदेन विशेषज्ञानव्यावृत्तिः। नन्वत्र पक्षे अभी इत्यादौ प्लुतस्यासिद्धत्वेन ततः प्रागेव प्लुताभावपक्षे अनुनासिकप्रतिबन्धेन फलवत्या प्रवृत्तसंज्ञाया ततः प्लुते त द्विमात्रत्वेन पर्यवन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाभावादनिर्विधित्वेन स्थानित्वाभावाच्चाप्रगृह्यत्वेनानुनासिकः स्यादिति चेत्; न, संज्ञाया कार्यार्थतया पुनः प्रवृत्तौ कार्यसिद्धिरूपबीजसत्त्वेन पुनस्तस्याः सुलभत्वात्, स्पष्टं चेदं तत्रैव भाष्ये। दुष्टत्वाशङ्का नेति सूचयितुम्, कैयट इति सूचितामरुचिमुक्तपक्षे ध्वनयितुं च सिद्धान्तभाष्यमतमाह— केचिदित्यादिना। केचिदिति। भाष्यतत्त्वविद इत्यर्थः। परीति। संज्ञायां विशेषस्य वक्ष्यमाणत्वादिति भावः। बोधे सतीति शेषः। आदिन्यासमभिव्याहृततद्विषयार्थग्रहणम्। सकलतद्विधीति। सप्तमीनिर्देशादियदितसर्वविधीन्यर्थः। एवमग्रेऽपि। संस्कारः विशिष्टवाक्यार्थनिश्चयः। गुणभेदं परिभाषाभेदम्। एतेन भिन्नवाक्यताव्यावृत्तिः। नियमः इतरव्यावृत्तिः। ननु यथोद्देशेऽप्येव पदैकवाक्यतायां को भेदः कार्यकालपक्षादत आह— कार्येति। अपि सपाद-सप्ताध्यायीस्थसुधाकरः। तथा च तत्र पक्षे सर्वैकवाक्यता, अत्र तु त्रिपादीभिन्नैवेति भेदः; वाक्यार्थबोधस्तु स्पष्टं उभयथाप्यस्त्येवेति भावः। अत्र प्रमाणमाह— एतदेवेति।

यति, यथा प्रदीपः सुप्रज्वालितः सर्वं वेश्माभिज्वलयति—' इति 'षष्ठी स्थाने—' इति सूत्रे भाष्य उक्तम्। अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते। कश्चित् परिभाषारूप इति कैयटः। दीपो यथा स्वप्रभाद्वारा सर्वगृहप्रकाशकः, एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। एतच्च पक्षद्वयसाधारणं भाष्यम्, पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः। तत्रैतावान्विशेषः— यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम्। तदुक्तम् 'क्क्ङिति च' इति सूत्रे कैयटेन — 'यथोद्देशे प्रधानान्यात्मसंस्काराय संनिधीयमानानि गुणभेदं प्रयुञ्जते' इति। कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यता— इति। अत्र 'एकदेशस्थः' इत्यनेन तत्र तत्र तत्तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति। यथा व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः, किं स्वाभिजनदेशीयत्वव्यवहार एव, तद्वत्। निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति

---

पक्षद्वयेऽपि पदैकवाक्यतयैव नियम इत्येतदेवेत्यर्थः। नामेति निश्चये। ननु परिभाषाप्रसङ्गे अधिकार इत्युक्तिरयुक्ता, तत्राह— अधीति। तदुभयाशयमाह— दीप इति। 'एतदेशाभिप्रेत्य' इत्युक्तमभिप्रायमाह— एतच्चेति। पक्षद्वयेति। यथोद्देशकार्यकालेत्यर्थः। प्रदेशाः विधि.। इतः उक्तभाष्यात्। तत्र द्वयोः पक्षयोरेकवाक्यतायाम्। आत्मभेदं परिभाषाभेदम्। तैः विधिसूत्रैः। प्रधानानि विधिसूत्राणि; अनेन तत्तद्विषयकनिषेधापक्षे बीजं दर्शितम्। गुणभेदं निषेधभेदम्। तत्तदित्यनेन यौगपद्य निरस्तम्। एवं च यथोद्देशे एकदेशस्थत्व स्पष्टमेव। कार्यकाले तु स्वविषयसर्वशास्त्रैकवाक्यत्वात्तत्त्वम्, पठितदेशस्थेनैव तत्र तत्र स्वबुद्धिजननादिति भावः। तदाह— अत्रेति। उक्तभाष्य इत्यर्थः; कार्यकाल इति भावः। एवं स्पष्टार्थं। पठितदेशस्थत्वमेव सर्वथा बोधयितुम् 'एकदेशस्थ' इत्युक्तमिति तात्पर्यम्। ननु कार्यकालपक्षेण समाप्युक्तिस्तत्र भाष्ये अयुक्ता; न हि निषेधस्य परिभाषात्वव्यवहारोऽस्त आह— निषेधेति। अभिमुख्यमुख्यकः; तत्त्वेन व्यवहारे अन्वयः। निषेध्येति। अनुवृत्तगुणवृद्धिश्रुत्या तद्विशेषरूपनिषेध्याकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्रोपस्थितौ तत्र तत्तद्विषयकनिषेधवाक्यानां व्यतिरेके विनिगमनाविरहादुपस्थितेन एकवाक्यतयैवान्वय इत्यर्थः। इतीति। तथान्वितत्वरूपं

परिभाषाप्रामाद्दस्यात्परिभाषात्वेन व्यवहारः 'क्ङिति च' इत्यत्र भाष्ये । तत्रैकवाक्यता तयोः पर्युदासन्यायेन । प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहारः । संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः, किं तु प्रदेशवाक्यार्थेन सह । अत एव 'अणोऽप्रगृह्यस्य' इत्येतदेकवाक्यतापन्नम् 'अदसो मात्' इत्येतत्प्रति न मुत्वासिद्धम्, असिद्धत्वस्य बाधार्थतया कार्यज्ञानोत्तरमेव प्रवृत्तिः कार्यज्ञानं च प्रदेशदेश एवेति तद्देशाभ्यासिद्धत्वापूर्वग्रहणेनाग्रहणात् । एवं तद्बोधोत्तरमेव विरोधप्रतिसंधानं चेति तत्रत्यसामग्रयेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम् । अत एव कार्यकालपक्षे अयादिभ्यः पूर्व प्रवृत्त

संज्ञेति 'अदसो मात्' इति सूत्रे भाष्य उक्तम् । आकडारादिकारस्थभपद-संज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्रत्यपरत्वेनैव बाध्यबाधकभावः । पदादि-संज्ञानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः । अत एव 'पूर्वत्रासिद्धम्' इति सूत्रे भाष्ये परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्यकालपक्षाश्रयणेन समाहितमित्याहुः । यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये ॥ २ ॥

कार्यकालमित्यस्य च कार्येण काल्यते स्वसंनिधिं प्राप्यत इत्यर्थः; कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत् । अत एव 'पूर्वत्रासिद्धम्' इति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य 'यद्यपीदं तत्रासिद्धम्, तस्त्विह सिद्धम्' इत्युक्त्वा, तावताप्यसिद्धिरित्यभिप्रायके 'कथम्' इति प्रश्ने 'कार्यकालं संज्ञा-

---

तत्तात्पर्यमित्यनुपदमेव स्फुटीभविष्यति मूले । नन्वेवं भपदसंज्ञादीविशेषे बाध्यबाधकभावो न स्यादत आह— **आकडारेति** । **भपदसंज्ञादीति** । संज्ञाद्वयमुपदेशेन यत्र प्राप्त तत्रेत्यर्थः ; तेन न पूर्वापरविरोध, न वा भाष्यस्वरसत्वादिविरोध इति भावः । **तत्रत्येति** । स्वदेशस्थेत्यर्थः । नन्वेवं तद्दृष्ट्या त्रिपाद्या असिद्धत्वात्तत्र प्रवृत्तिर्न स्यादत आह— **पदादीति** । तत्र स्वगृहे । एवकारेण विधिप्रदेशे शक्तिग्रहनिरासः । आपि: सपादसप्ताध्यायीसमुच्चायक. ; 'ष्यङ संप्रसारणम्—' इति सूत्रस्थं भसंज्ञायाः कार्यकालत्वपरं भाष्यं त्वेकदेशयुक्तिरिति भावः । तत्र मानमाह—**अत एवेति** । तत्र यथोद्देशाङ्गीकारे तया निर्वाहादित्यर्थः । एवेन संज्ञान्यावृत्तिः । आशङ्क्य यथोद्देशे तदसिद्धत्वात्; अन्यथा शङ्कासमाध्यो. संज्ञायामपि तुल्यत्वेन विशिष्य तत्रैव तदुक्त्यसागत्य स्पष्टमेवेति भाव । यथोद्देशस्य दुर्बलत्वात्तत्सत्त्वे मानमाह— **यथोद्देशेति** ॥

एवमाद्यपरिभाषार्थमुक्त्वा द्वितीयार्थमाह— **कार्येति** । चस्त्वर्थे । नन्वचेतनत्वादुभयो: कथं परिभाषायाः सान्निध्यप्राप्तिः । किं च सर्वत्र सर्वासां तदापत्ति । किं च असिद्धे तस्मिन्कथं तदुपस्थितिरत आह— **कार्येणेति** । तथा चारोपितयाकाङ्क्षया नोक्तदूषणत्रयमिति भाव । तत्र तृतीयदोषोद्धारं स्पष्टयितुमुक्तस्याक्षेपस्य परिभाषार्थत्वे मानमाह— **अत एवेति** । अस्यास्तदाक्षेपार्थत्वादेवेत्यर्थः । तत्र त्रिपाद्याम् । **परिभाषाणामिति** । मनाग्ध्यंसं गानिम्नवृत्तेवेति भाव. । इदं त्रिपादीस्थम् । तत्र तस्मिन्नपि-

परिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्' इत्युक्तम् । न च कार्यकालपक्षे 'ङमो ह्रस्वात्—' इत्यादौ 'तस्मादित्युत्तरस्य' 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषाद्वयोपस्थितौ परत्वादुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति 'तस्मिन्—' इति सूत्रस्थभाष्यासंगतिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासंगत्यापत्तेः; स्पष्टं चेदम् 'इको गुण—' इत्यत्र कैयट इति वाच्यम्, विप्रतिषेधसूत्रे अष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात् । न हि कार्यकालपक्ष इत्येतावता तदपैति, पक्षद्वयेऽपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात् । न हि तत्पक्षेऽप्यनेनान्यस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं संभवति, नाप्य-

स्मदादिबुद्धिजननेन स्वदेशत्यागो भवति । अत एव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम् । अत एव 'तस्मिन्—' इति सूत्रे कैयट — 'सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वम्' इति । 'इको गुण—' इति-सूत्रस्थकैयटस्तु चिन्त्य एव । अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात् । किं च 'क्ङिति च' इतिसूत्रस्थकैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशे संनिधानेन तेषां परत्वं व्याहन्येत । एवं च वृक्षेभ्य इत्यत्र 'सुपि च' इत्यतः परत्वात् 'बहुवचने झल्येत्' इत्येत्वमित्याद्युच्छिद्येतेत्यलम् ॥ ३ ॥

---

तत्र च वैपरीत्य बोध्यम् । घुर्ष्विति । तद्विपर्येत्यादि । इदं च परिभाषाफलम् । समाद्यलं सूत्रभाष्यवलात्तथाङ्गीकृतमिति भावः । अत एव स्वदेशत्यागादेव । तथ भाष्यमुक्तमाह । कैयटस्यापीत्यमेवेष्टमित्याह— अत एवेति । इत एवार्थः । नन्वेवमुक्तभाष्यविरोधास्त्वविरोधाय तत्कैयटस्य का गतिरत आह— इको गुणेतीति । विपक्षे बाधकमप्याह— अन्यथेति । पूर्वपक्षीयकैयटोक्तयुक्त्याकार इत्यपि । प्रयोगार्थत्वेन प्रयोगसाधनफलकत्वेन । देशस्थत्वेन तत्र मिलनात् । न स्यादिति । तथा च परत्वस्योच्छेद एव स्यादिति भावः । नन्वत एव तादृशदेशो न गृह्यतेऽत आह— किं चेति । कैयटेति । स च प्रागुक्तः । संनिधानेन पाठेन । तेषामिति । तेषामपीत्यर्थः । इष्टापत्तौ बाधकमाह— एवं चेति । तत्परत्वव्याघाते चेत्यर्थः । न चैवं कार्यकालपक्षमादाय त्रिपाद्यां परिभाषाशास्त्राणां प्रवृत्तिः यथोद्देशे तु पूर्वाण्येतानि प्रति त्रिपाद्या असिद्धत्वेनाप्रवृत्तिरेव स्यादिति भाष्याद्युक्तमत्र प्रागुक्तं विरुध्यतेति वाच्यम्, परिभाषाणां सिद्धत्वेन अत्र पक्षे असिद्धेनापि कार्येण स्वार्थे स्वमात्राकाङ्क्षया तदाक्षेपसम्भवस्योक्तत्वात् । वस्तुतः सर्वत्र पाठकृतपरत्वमत्र तन्नियामकम् । 'परेव प्रगृह्यसंज्ञा' इत्यत्र संज्ञापदेन तत्कार्यं प्रकृतिभाव उच्यते । आद्यायाभिहितसामे प्रश्न— कथमिति । एकदेशिन उत्तरम्— कार्यकालमित्यादि । एवं च न तद्विरोध इत्येकरूपता संज्ञापरिभाषयोः सिद्धा । एवं चानाशि स्वसूत्रं वाक्यार्थबोधः, पूर्वमङ्क्यासत्कारकरत्वमपि तत्र तुल्यम् । एतेन कार्यकालेऽपि पाठकृतपरत्वमत्यादीनामेव; अन्यथा 'ढमो ह्रस्वात्—' इत्यादौ त्रिपादीस्थे कार्यकालपक्ष एव परिभाषयोः प्रवृत्त्या परत्वात्तत्र 'तस्मात्—' इत्येवेति सिद्धान्तासङ्गतिः, उभयोरेकदेशस्थत्वेन परत्वासम्भवादित्यपास्तम् । अत एव एतावदंशस्य दुष्टत्वेन तत्राहचिसूचनाय 'केचित्' इत्युक्तम्; अन्यथा एतदन्तस्य सर्वस्य सिद्धान्तत्वेन 'परे तु' इति सङ्गतमुचितम् । अत एवंनदृश्यस्य

इत्संज्ञका अनुबन्धाः, तेष्ववयवानवयवत्वसंदेहे आह—

## अनेकान्ता अनुबन्धाः ॥ ४ ॥

अनेकान्ता अनवयवा इत्यर्थः । यो ह्यवयवः [illegible] कदाचित्तत्रोपलभ्यत एव; अयं तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात् । शित्किदित्यादौ समीपे अवयवत्वारोपेण समासो बोध्यः । 'वुञ्छण्कठच्' इत्यादौ णित्त्वप्रयुक्तं कार्यं पूर्वस्यैवेत्यादि तु व्याख्यानतो निर्णेयम् । 'हलन्त्यम्' इत्यत्र अन्त्यशब्दः परसमीपबोधकः ॥ ४ ॥

वस्तुतस्तु—

## एकान्ताः ॥ ५ ॥

---

*'अदसो मात्' इत्यत्रत्योद्योतविरोधो नेति दिक् । तदेतद्ध्वनयन्नाह— अलमिति ॥*

अथेत्संज्ञायाः संज्ञाप्रसङ्गेन स्मृतायास्तद्विशेषभूताया शास्त्रमूलत्वात्तच्छास्त्रलादौ-सुखेलवत् तद्विषयक परिभाषाद्वयमादौ वक्तु जीर्णोद्धतत्वात्तद्ग्रन्थे न्यूनता ध्वनयितु च पूर्वसङ्गतिमाह— इत्संज्ञकेति । संज्ञायाः पूर्वमुपस्थितत्वात्तद्विशेषे तादृशे विचार इति भावः । इत्संज्ञाप्रयुक्तस्वलोपान्यकार्यजनकत्वविशिष्टमिदमनुबन्धसामान्यलक्षणम् । अव-यवेति । अस्य प्रकृतेत्यादिः । **अनेकान्ता इति** । इत्यस्येति शेषः । तत्र व्यतिरेकमु-खेनोपपादयति— **यो हीति** । शाखादिरित्यर्थः । छेदने तथानुपलम्भादाह— **कदा-चिदिति** । **अयं तु** अनुबन्धत्वावच्छिन्नस्तु । **न तथा** न अवयवः । **तदर्थेति** । तद्विधि-तार्थेत्यर्थः ; तथा चानुपलम्भकयत्नं विना तत्रान्यत्र चोपलभ्यमानोऽवयवः, न विना तत्रैवोपलभ्यमान एव यः, सोऽवयव इति फलितम्; अन्यथा शाखाया अपि च्छेदनोत्तर-मन्यत्रोपलम्भात्तत्रोपलम्भाभावेनानवयवत्वं स्यादिति भावः । नन्वनवयवत्वे वृत्तिर्न स्यात् सबन्धाभावात्; सामीप्ये [illegible] वृत्तिर्नेति स्पष्टमेवात आह— **शिदिति** । **समासः** बहु-व्रीहिः । *नन्वेवमपि पूर्वत्वपरत्वविशेषोऽपि इत्कार्यप्रसङ्गः कथमित्यत आह— **वुञिति*** पूर्वस्यैवेत्यस्य पूर्वसम्बन्धिन एवेत्यर्थः । नन्वेवमपीत्सर्वसंज्ञाभावे मूले कुठार एवात आह— **हलन्त्यमिति** । एवमेकदेशिमतमनुक्त्वा सिद्धान्तमाह— **वस्तुत इति** । **एकान्ताः**

इत्येव न्याय्यम्, शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च । अनवयवो हि काकादिरेकजातीयसंबन्धेन गृहवृक्षादिषूपलभ्यते; नैवमयम् । एवं हि बहुव्रीहिरपि न्याय्यत एवोपपन्नः, अन्यशब्दे लक्षणा च न । किं च अनवयवत्वे णशक्प्रत्ययादौ णादेरित्त्वानापत्तिः, प्रत्ययादित्वाभावात् । दशन्थकारस्य वैयर्थ्यापत्तिश्च । इदं च 'तस्य लोपः' इत्यत्र भाष्ये स्पष्टम् । तत्र युक्तम्— 'एकान्ता अनुबन्धा इत्येव न्याय्यम्' इति दिक् ॥ ६ ॥

नन्वेकान्तत्वे अनेकाल्त्वादेव औणादीनां सर्वादेशत्वासिद्ध्या अनेकाल्सूत्रे

---

अवयवा । ननु तदभावसाधकहेतोरुक्तत्वात्कथं तत्त्वमत आह— शास्त्र इति । तत्र विधेयबोधके । एतेन विधेयेऽनुपलम्भोऽपि हेतुत्वेन सूचितः, अवयविनि दर्शनस्यैवापेक्षितत्वेन तस्यात्र सत्त्वात् । अन्वयमुखेन व्यतिरेकमाह— अन्यत्रेति । इदमपि व्यतिरेकमुखेनैवोपपादयति— अनवेति । एकजातीयसंबन्धेन सर्वसादिना । नैवमयमिति । अनुबन्धो न तादृशसंबन्धेन सर्वत्रोपलभ्यत इत्यर्थः । एवं तद्धेतुनिरासेन साधिते अवयवत्वे साधकान्तरमप्याह— एवं हीति । यतोऽवयवत्व इत्यर्थः । अत्रोभयत्रान्वयः । न्याय्यत औचित्येन, आरोपं विनेति यावत् । १ नन्वनयोः पूर्वोक्तगतिसाम्येऽपि निर्णयोऽस्त्वत आह— किंचेति । णकादिशब्दोऽप्यन्त्यतया दशनुशासनं व्याख्यानानुमतमाह— दशनञ्च इति । ननु पूर्वमुक्त एव व्याख्यानतो निर्णय इति न तस्य वैयर्थ्यमत आह— इदं चेति । पूर्वोक्तं सर्वं वैयर्थ्यं; तदेवाह— तत्र युक्तमिति । एकान्त वानेकान्तत्वोक्तयुक्तिमिदयुक्तः तत्र भाष्ये, तस्यायं भावः —एकान्तत्वे एकोऽवयवो द्वयोर्न संभवतीति व्याख्यानेन निर्णयेऽपि नानेकान्तत्वे तथा, आनन्तर्यस्योभयापेक्षत्वेऽेकत्र विशेषाभावात्संदेहाभावाद्व्याख्यानाप्रवृत्ते विरुद्धानेककोटिविषयकज्ञानस्यैव संदेहत्वात् । तथा च वैयर्थ्यं सम्यगेव । किं चोक्तरीत्या व्याख्यानाप्रवृत्तौ बुभुक्षणादिविहितकादिविषये चित्त्वादिप्रयुक्तदूषणापत्तिः । लक्षणादोषाभावप्रयुक्तं लाघवं च । पूर्वोक्तहेतुना तस्यैव सिद्धवेक्ति, तद्ध्वनयन्नाह— दिगिति ॥

एतत्पक्षे भाष्याद्युक्तं दोषत्रयं तदुक्तरीत्यैव तत्क्रमेणोद्धर्तुं पूर्वमगतिमाह— नन्वेकान्तत्व इत्यादि । अनुबन्धकृतमनेकाल्त्वं नाश्रयणीयमिति परिभाषाया । एवमग्रेऽपि । अत्रा

---

१ नन्वनयोर्विनिगमनाविरहात्पूर्वोक्त मतिरेवगम्यतेऽत आह— किंचेति ।

शित्ग्रहणं व्यर्थमत आह—

## नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

शिद्ग्रहणमेव एतज्ज्ञापकम्। तेन 'अर्वणस्तृ—' इत्यादेर्न सर्वादेशत्वम्। डादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेन आनुपूर्व्यात्सिद्धम् ॥ ६ ॥

ननु एवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्त्वे कृते 'अदाप्' इति घुसंज्ञाप्रतिषेधो न स्यात्, दैप पकारसत्त्वेऽनेजन्तत्वादात्त्वाप्राप्त्या पलोपोत्तर पकाराभावेन अस्य दाब्रूपत्वाभावादत आह—

## नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

---

ज्ञापकमाह— शिदिति। उक्तरीत्येति भावः। 'ग्लसोरिद्वौ—' इत्यत्र निर्वाहस्तु भाष्यादौ स्पष्ट इति तात्पर्यम्। चारितार्थ्ये स्वस्मिन्स्वस्थत्वादुपेक्ष्य ज्ञापितपरिभाषाफलमाह— तेनेति। ज्ञापितवचनेनेत्यर्थः। एवमग्रे सर्वत्र बोध्यम्। ननु णल' प्रत्ययाधिकारपाठादौपदेशिकप्रत्यय-त्वेनानुबन्धत्वेनानया प्राप्तदोषस्य प्रक्षेपेण निवारणेऽपि डादिरनया सर्वादेशो न प्राप्नोति, गत्यन्तरसम्भवेन पूर्ववत्प्रक्षेपो नात आह— डादीति। आदिना 'जस शी' 'सुपाम्—' इतिसूत्रोक्त ड्यादिसङ्ग्रह, औपदेशिकप्रत्ययत्वस्यात्र सर्वत्राभावात्। तथा च सर्वादेशता आदौ, तत आतिदेशिक प्रत्ययत्वम्, तत इत्संज्ञेति पूर्वं तदभाव एव। अनुबन्धत्व च विधारण न तु उपलक्षणमिति भाव, तदाह— आनुपूर्व्यादिति। उक्तक्रमादित्यर्थः। एतेनात्र णलुक्तिस्व कुर्वन्शीरदेशादि' परास्त, उक्तहेतो। इद च प्राचीनरीत्या। अत एवाटविशेषकस्तु प्रयुक्त। वस्तुतो णल्युक्तप्रकार एव डादौ। 'जस शी' इत्यादौ शित्वादेव सर्वादेश इति बोध्यमित्यन्यत्र निरूपित गुरुभि। स्पष्ट चेद ज्ञापकम् 'तस्य लोप' इत्यत्रैव भाष्ये ॥

एवमपि उक्तदोषस्यात्र मते उद्धारोऽपि। पलोपोत्तरमात्त्व इति। अन्यथा अनेजन्तत्वान्न स्यादिति भाव। न स्यादिति। तथा च 'अच उपसर्गात्त' इति स्यादिति भाव। ननु पकारसत्त्व एव निषेधोऽत आह— दैप इति। आत्त्वाप्राप्त्येति। अस्य दाप्त्वाभावेऽन्वय। नन्वेव तल्लोपोत्तरं स्यादत आह— पलोपोत्तरमिति।

'उदीचां माङः—' इति निर्देशोऽस्या ज्ञापकः । 'आदेच उपदेशे—' इति सूत्रेणोपदिश्यमानैजन्तस्यात्त्वं क्रियते; ङकारसत्त्वे एजन्तत्वाभावादात्त्वाप्राप्तेस्तस्यासंगतिः । न चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्त्वम्, तत्र धातोरित्यस्य निवृत्तेरित्यन्यत्र विस्तरः । स्पष्टं चेदम् 'दाधा घ्वदाप्' इति सूत्रे भाष्ये ॥ ७ ॥

नन्वेवमपि 'वासरूप—' इति सूत्रेण क्वविषयेऽणोऽप्यापत्तिरित्यत आह—

## नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

---

**अस्य** उक्तप्रयोगस्यस्य । **इति निर्देश इति** । इत्यत्रत्यो मेङः सानुबन्धस्यात्त्वभूतस्य माङ इति निर्देश इत्यर्थः । तस्य तत्त्वमुपपादयति— **आदेच इति** । उपदेश इति कर्मणि घञ्, षष्ठ्यर्थे सप्तमी, विशेष्यत्वं च तस्य; तदाह— **उपदीति** । **तस्यासंगतिरिति** । माङ इति निर्देशस्यासंगतिरित्यर्थः । 'तस्य तदर्थज्ञापकतासंगतिः' क्वचित्पाठः । तत्र निर्देशस्य परिभाषार्थज्ञापकत्वसंगतिरित्यर्थः । **अस्यां** मेङ इत्यस्याम् । **तस्य** मे इत्यस्य, अनुबन्धलोपे जात एव धातुत्वमित्यर्थस्य 'न धातुलोपे—' इति सूत्रे भाष्यकैयटयोः स्पष्टत्वादिति भावः । **तत्र** 'आदेचः—' इत्यत्र । **निवृत्तेरिति** । गवादिशब्दानां दीक्षितेत्याद्येकदेशाना धातूपदेशाभावात्वम् । इणप्रभृतीनामुपदेशेऽप्याशित्परत्वाभावान्न तत् । प्रसज्यप्रतिषेधेऽपि प्रत्यासत्त्या शिदन्ययपरत्वयोग्यानामेव ग्रहणान्न दोषः । उच्चारणसामर्थ्यादपि तत्रादोषः; 'यावता विना—' इति सिद्धान्तादिदमपि तज्ज्ञाप्यम् । एतेन तदादेशाना टेरनेत्वज्ञापनेन चरितार्थं तदित्यपास्तम् । अत एव 'अथापि निवृत्तम्' इति 'आदेचः—' इत्यत्र 'तदेतद्धातुग्रहणं तिष्ठतु तावत्सान्यासिकम्' इति 'लिटि धातोः—' इत्यत्र च भाष्ये उक्तम् । अन्तरङ्गत्वात् व्यतीहारनियमबद्धस्य मेङ एव सूत्रे ग्रहणम्; न माङः, तस्य पदान्तरसंनिधानेन प्रतीयमानबहिरङ्गव्यतीहारवृत्तित्वादिति कैयटः । अन्ये तु माङोऽनभिधानात् क्वोऽनुत्पत्तिरिति न तस्य तत्र ग्रहणमित्याहुः । तदाह— **इत्यन्यत्रेति** । उद्योतादावित्यर्थः । अत्र सम्मतिमाह— **स्पष्टं चेदमिति** । उक्तज्ञापकमित्यर्थः । दाधाधित्युपलक्षणम् 'तस्य लोपः' इति सूत्रस्यापि ॥

'ददातिदधात्योर्विभाषा' इति णबाधकशास्त्रस्य विकल्पविधायकमस्या ज्ञापकम् । तेन गोद इत्यादौ नाणीति वासरूपसूत्रे भाष्ये स्पष्टम् ॥ ८ ॥

ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्, प्रकरणस्याभिधानियामकत्वसिद्धात् 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति न्यायात् । अस्ति च प्रकृते बह्वादीनां संख्यासंज्ञा कृतेति ज्ञानरूपं प्रकरणम् । न तु लोकप्रसिद्धैकद्व्यादीनामित्यत आह—

## उभयगतिरिह भवति ॥ ९ ॥

इह शास्त्रे । 'संख्याया अतिशदन्तायाः' इति निषेधोऽस्या ज्ञापकः; न हि कृत्रिमा संख्या त्यन्ता शदन्ता वास्ति । तेन 'कर्तरि कर्मव्यतीहारे' 'कृणमेथेभ्यः करणे' 'विप्रतिषिद्धं चानधिकरण—' इत्यादौ लौकिकक्रियाद्यन्यायावगतिः । तत्र

---

**प्रथममपीति** । प्राप्तम् । **इति णेति** । इत्यत्र 'श्याद्व्यधा—' इति प्राप्तणस्य बाधकशास्त्र 'ददाति—' इति सूत्रविहितस्य विकल्पविधायक विभाषाग्रहणमित्यर्थः । तत्कृतासाध्याधिकारे तु तेनैव सूत्रेण स्पष्टप्रसिद्धौ तदानर्थक्यं स्पष्टमेव । शङ्कोक्त वारयति— **तेनेति** । बाधकेऽप्युपलक्षणम् 'तस्य लोपः' इति सूत्रस्यापि ॥

अपेक्षसाधकशास्त्रावरोधे विचार इति पूर्वसंगतिं ध्वनयन्नाह— **ननु संख्येति** । **प्रकरणेति** । इदं च दध्याद्यन्वये स्पष्टम् । ननु सैन्धवमानयेत्यादौ भोजनादिप्रकरणे किं तत्प्रकरणम्? येन तद्वदत्रापि शक्तिसंकोचो भवेत् । न च पूर्वोपक्रान्तत्वेन तत्त्वम्, अव्यवहितस्य तस्याभावादत आह— **अस्ति चेति** । **कृतेतीति** । शास्त्र इति भावः । एव यत्पदच्छेदं स्पष्टार्थमाह— **नन्वियति** । एकशब्दस्यानेकार्थत्वेन संख्यापदग्रहणायाह— **इत्यादीति** । परिभाषापाठनिरासायाह— **शास्त्र इति** । **अतिशदन्ताया इति** । इत्यत्र अतातिनिषेध इत्यर्थः । ज्ञापकमुपपादयति— **न हीति** । ननु अनर्थकत्वेऽपि तेः सामर्थ्यात्स्तीति कृत्रिमसंख्यामादाय स निषेधः सफलोऽस्त आह— **शदन्ता चेति** । **लौकिकेति** । तस्य चात्र वेदाभिप्रायविदितत्वम्; अत एव तत्र सामर्थ्यात्तन्त्रान्तरप्रसिद्धसंख्याग्रहणेऽपि न क्षतिः । यद्यपि अकृत्रिमस्यैव ग्रहणमितिमात्रज्ञापनेऽपि अस्य साफल्यम्, तथाप्यत्रिदितादौ दोषापत्ते सखाकरणार्थंसंख्यायामस्य अकृत्रिमस्यापात्येन ज्ञाप्यते; एवं च संख्याग्रहणे न दोषः

## कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते ॥ १० ॥

'स्थण्डिलाच्छयितरि—' इति निर्देशश्चास्यां ज्ञापकः । ऊर्णुनविषनीत्यादिसिद्धये— कार्यमनुभवन्निति । अत्र हि 'द्विर्वचनेऽचि' इति नुशब्दस्य द्वित्वम्; अन्यथा 'सन्यङोः' इत्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेन इसो द्वित्वनिमित्तत्वाभावात्तत्प्रवृत्तिर्न स्यात् । वस्तुतः समवायिकारणनिमित्तकारणयोर्भेदस्य सकललोकशास्त्रप्रसिद्धतया तस्य तत्त्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या । अत एव हिः प्रयुक्तः; स हि तत्त्वेनाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति तत्त्वम् । 'द्विर्वचनेऽचि' इत्यत्र भाष्ये ध्वनितैषा ॥ १० ॥

---

संग्रहः । शयितेति हलन्तपाठस्तु सुगम एव । निषेधः स्यादिति । विवडतीति सत्सममीति भाव' । न चैवम् 'निष्ठा शीङ्—' इति व्यर्थम्, तेन तावन्मात्रवारणापेक्षया परिभाषाज्ञापनस्यैवौचित्यादिति वाच्यम् । यत्तु— अस्या ज्ञापकः दीधीवेव्योर्गुणप्रतिषेधः कुटादौ कुङः पाठो वेति सीरदेवादयः; तन्न, 'दीधीवेवीटाम्' इत्यस्य प्रत्याख्यानात् प्रत्याख्यानपक्षे इष्टफलाभावेन भाष्यरीत्या तदसम्भवात् आदीध्यक इत्यादावनिग्लक्षणायोर्कणतीति वृद्धिनिषेधेन साफल्येन सूत्रीयापि तत्रासम्भवात् पाठस्याशोषतनिकान्यायेन चरितार्थत्वाच्च; अत आह— स्थण्डिलादिति । न च निर्देशः सौत्रः, तथा सति अन्यत्र प्रयोगो न स्यादिति भावः । येन 'निष्ठा शीङ्—' इति निषेधस्य दीधीवेव्योः प्रकारान्तरेण प्रत्याख्यानपरभाष्यस्य च समुच्चयः; अन्यथा तयोर्क्वित्वात् 'विवडति च' इत्यनेनैव निषेधे सिद्धे प्रकारान्तरानुसरणं व्यर्थमिति वाच्यम् । तथा च अध्येता शयितः अरिरिषतीत्यादिसिद्धिः । नैवमूर्णुनविषतीत्यादावतिव्याप्तिरित्याह— ऊर्णुनेति । हि यतः । द्वित्वमिति । न तु पूर्वस्यैवेति भावः । अन्यथा तद्विशेषणाभावे । निमित्तत्वाभावात् तत्प्राप्तेः । तत्प्रवृत्तिः 'द्विर्वचनेऽचि' इत्यस्य प्रवृत्तिः । एतेन परिभाषाद्वयमिति सीरदेवाद्युक्तम्, सुध्युपास्य इत्यादावनया प्राप्तदोषस्य ज्ञापकाद्वारणमिति भ्रान्तोक्तम्, एकपरिभाषापक्षेऽपि प्रायिकमितलक्ष्यानुशासकाचिदाश्रीयते क्वचिन्नेत्याद्योक्तम्, उक्तज्ञापकसिद्ध परिभाषान्तरमित्यन्योक्तं चापास्तम्; उक्तयुक्तेर्भाष्येऽस्यानुक्तेश्च व्याकरणेऽपि कार्येणोपश्लिष्टस्यैव निमित्तत्वव्यवहाराच्च । न चारिरिषतीत्यादावपि तथा, उपश्लेषस्य समीपसम्बन्धरूपस्य भेदनिबन्धनत्वात्, तद्ध्वनयन् सिद्धान्तमाह— वस्तुत इति । अस्य तस्याभिन्नप्रत्ययः । तत्त्वेनेति । न्यायभाष्यादीत्यर्थः । तस्य समवायिकारणस्य । तत्त्वेन निमित्तकारणत्वेन । अत एव

नतु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह—

**यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥**

यमुद्दिश्यागमो विहित, स तद्गुणीभूत शास्त्रेण तदवयवत्वेन बोधित, अतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते बोध्यत इत्यर्थ । तत्र तद्गुणीभूता इत्यशो बीजकथनम् । लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहण दृश्यते । यमुद्दिश्य विहित इत्युक्ते प्रनिदापयतीत्यादौ

---

अज्ञापकसाध्यत्वादेव । इतो सकललोकतन्त्रप्रसिद्धमहत्त्वस्य । ध्वनितैवेति । तत्र हि जेघ्रीयते देध्मीयते इत्येतद्वाक्याजग्रहणस्य ज्ञापकतोक्ता तत्र यथा ध्वनिता, तथा स्पष्टमुक्ष्यते ॥

अथ सज्ञाप्रसङ्गादेव सज्ञाकर्मके सज्ञिविशेषादृश्यर्के विधा विचार इति ध्वनयन्नाह— **ननु प्रणीति । दापेर्न स्यादिति ।** तत्र 'स्व रूपम्—' इति तद्ग्रहणेन समुदायस्य अदारूपत्वादेकदेशस्य चानर्थकत्वात्, तथा च णत्व न स्यादिति भाव । इद च मुख्यका र्यकालपक्षे । द्वितीयस्तु दुर्बल एवेत्युक्तम् । सज्ञाहकवाक्यऽत्र बहुवचनसत्त्वेऽपि लक्ष्य सस्कारकवाक्ये तदनुपयोगादाह— **यमिति ।** एतत्परिभाषाप्रवृत्तिविषयसूत्रे कार्यित्वेन निर्दिष्टमित्यर्थ । अस्य तत्पदार्थद्वयेनान्वय । तस्य तत्राद्देश्यता च यथाकथञ्चित्, न तु तत्सूत्रोपात्ततावच्छेदकरूपेणैवेत्याग्रह इति भाव । **आगम इति ।** अस्य य इत्यादि । **तद्गुणीभूत इति ।** अस्य यत इत्यादि । अस्यैव व्याख्या— **शास्त्रेणेति ।** 'आद्यन्तौ टकितौ' इत्यादिनेत्यर्थ । ननु ग्रहणम् उच्चारण ज्ञान वा न हि तेन तस्य ग्रहण सम्भ तीयत आह— **तद्ग्राहेति ।** ननु तद्ग्राहकेण श्रावण तद्ग्रहणेऽपि प्रकृतदामात्रस्य आह— **तद्बोधेति ।** नन्वेवमपि तेन उच्चारणासम्भवोऽत आह— **बोध्यत इति ।** समुदाय इति शेष । इदमेव ध्वनयितुमस्या लोकन्यायसिद्धत्व प्रतिपादयितु तद्गुण तया विशेषण सफलयति— **तत्रेति ।** तेन तद्बाधन इत्यर्थ । परिभाषाशरीर कथित् । तद्गुणीभूत इति पाठे तत्रेत्यस्य व्याख्यान इत्यर्थ । अनेन परिभाष तदुक्तप्रायम्, तदेवाह— **लोकेऽपीति ।** अपि शास्त्रसमुच्चायक । तद्विशिष्ट सिद्धि । एवन तद्विशिष्टव्यावृत्ति । ननु यदागमा—' इत्यत्र यथार्थ

इति सूत्रे भाष्ये अकारस्याङ्गावयवस्य गुणित्यर्थे पचमान इत्यत्र 'ताम्यनुदात्तेत्—' इति स्वरो न स्यादित्याशङ्क्य 'अदुपदेशभक्तस्तद्ग्रहणेन ग्राहिष्यते' इत्युक्तेरसांगत्यापत्ते । किं च ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थे कुर्वन्नास्त इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य 'यदागमा —' इति न्यायेन आद्यन्तस्यापि पदान्तग्रहणेन ग्रहणात् 'पदान्तस्य' इति निषेध इति अनया च

---

ज्ञापकस्य सामान्यापेक्षत्वात्, अत एव द्वितीय इत्यादौ न दोष इति भाव । **अर्थे** सिद्धान्तभूते । इत्यत्र इत्यादौ । **तास्येति** । चित्स्वर बाधित्वा परत्वादिडित्यादि । **अदुपदेशेति** । अकारान्तोपदिश्यमानेत्यर्थ, स्वरविधौ तथैव सिद्धान्तितत्वात्, अत एव हतो हथ इत्यादौ नानुदात्तत्वम् । शुद्धाकारे तु व्यपदेशिवद्भावो बोध्य । तन्मत्यैरित्यस्तु चिन्त्य एवेति स्पष्टमुक्तोते तत्रैव । अत्र यतस्तद्भक्तोऽतस्तद्ग्राहकशब्देन समुदायो गृहीष्यत इत्यर्थो बोध्य । ग्राहिष्यत इति तु चिन्त्यद्वारे रूपम् । एवं वर्णस्य विशेषणत्वेनाश्रयणे एतदप्रवृत्तौ दोषमुक्त्वा विशेष्यत्वेनाश्रयणे तत्र तमाह— **किं च ङमन्तेति** । **अर्थे** अनिष्ठान्तभूते । आदिना कुर्वन्नास्ते इत्यादिपरिग्रह । **ङमुडागमे णत्वेति** । नुडागमनकारे णत्वापत्य, तस्य पूर्वत्रेन अपदान्तत्वेन निषेधाप्रवृत्तेरिति भाव । **आद्यन्तस्यापि** आगमनकारस्यापि । 'निषेध इति' इत्यस्य भाष्येऽन्वयेनान्वय । ननु भाष्ये पदान्तभक्त पदान्तग्रहणेन ग्राहिष्यत इत्युक्तम्, तदयुक्तम्, 'यदागमा —' इत्यनेनातदीयस्य समुदायस्य पदान्तत्वातिदेशेऽपि केवलागमनकारस्य तत्त्वाभावात् । नत्र तु तत्साध्यस्यैवेत्यत आह— **अनया चेति** । चस्त्वर्थे, वाक्यालङ्कारे वा । क्वचिन्निश्च पाठ । अविभिन्नक्रम, आगमानामित्यत्र योज्य । तेन समुदायसमुच्चय । अयं भाव — परिभाषायां गृह्यन्त इति पाठ । 'यदागमा' इत्यत्र अपीति शेष । तद्ग्रहणेन आगमिग्राहकधर्मेण गृह्यन्ते विपर्ययस्तु न क्रियन्ते । तथा च आगमी येन धर्मेण गृह्यते तद्ग्रहणेन ग्राहकधर्मेण यमुद्दिश्य विहिता आगमा यतस्तद्गुणीभूता अतस्तेऽपि गृह्यन्ते । अपिना तद्विशिष्टा अपीत्यक्षरार्थ । यमुद्दिश्येत्यस्यार्थस्तु प्रागुक्त एव । आगमी यद्यद्धर्मविशिष्टेन भासते परिभाषाप्रवृत्तिविषय आगमविधिविषये तद्रूपेणागमस्यापि तद्धर्मविशिष्टेन ग्रहणमिति यावत् । आगमी येन येन शब्देन बोध्यते, तेन तेन शब्देन आगमस्य समुदायस्य च कार्यानुरोधेन बोधनमिति फलितार्थ । स च प्रागुक्त मूल । तत्र समुदायस्य तेन बोधनं लोकन्यायसिद्धमित्युक्तम् । आगमस्य तेन बोधनमपि लोकन्यायसिद्धम्, अङ्गुल्यादिभेदेऽपि अङ्गुल्यादिव्यवहारदर्शनात् । इदं भाष्यमप्यत्र गमकमिति । इत्याशयक'

परिभाषया आगमानामागमिधर्मवैशिष्ट्यमपि बोध्यत , इत्याशयकउमुद्सूत्रस्य
प्यासंगतेः । किं च गुणादे रपरत्वे रेफविशिष्टे गुणत्वादि एष्टव्यम्; अन्य
ऋकारस्य गुणवृद्धी अरारावेवेति नियमो न स्यात् । तच्च वर्णग्रहणे एतद
न संगच्छते । अत एव 'रदाभ्याम्—' इति सूत्रे, भाष्यम्— 'गुणो भवति
वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते' इति । अत एव '
'णेरनिटि' इत्यादि चरितार्थम् । 'अनागमकानां सागमका आदेशाः' इत्य
स्यमर्थः—आर्धधातुकस्येडागम इत्यर्थे ज्ञाते नित्येषु शब्देष्वागमविधानानु
अर्थापत्तिमूलकवाक्यान्तरकल्पनेन इड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति ।
घं आदेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः । स्थानिवत्

---

इत्यपि भाष्यविशेषणम् । 'असंगतेः' इति मिश्र पाठः । ननु हलादपरपदावयवकम
आदेः पदस्येति व्याख्यानस्यैव सिद्धान्तत्वेन अस्वीकरेऽप्युक्तमतावलम्बनकत्वेनानित्
त्वाभाय इत्योऽत आह— किं च गुणादेरिति । अन्यथेति । विशिष्टे
इत्यर्थः; सर्वान्तगतन्याभावस्य तुल्यत्वादिति भावः । तच्चेति । विशिष्टे तद्रूपण
यत इत्यादिः । विशिष्टे तस्त्रे सम्मतिमप्याह— अत एवेति । विशिष्टस्य तत्संज्ञे
भाष्यमिति । अस्य सगच्छत इति शेषः, तदेवाह— गुण इति । यत्तु भ्रान्ता
'नेटि' इत्यादिज्ञापकमात्रमाश्रेयमिति, तन्न, लोकन्यायसिद्धत्वस्योक्तत्वात्; तद् अन्यथा
अत एवेति । तथा परिभाषाऽभावादित्यर्थः, अन्यथा अपटीत्कारयितव्यमित्यादि
व्यवहितत्वादिव वृद्धिणिलोपयोरप्राप्त्या किं निषेधाभ्यामिति भावः । तथा च आद्ये
द्वितीये अनाद्यमनिटीति निषेधः चरितार्थमित्यर्थो बोध्यः । आदिना अथाणि
निर्देशपरिग्रहः । नन्वनागमकाना सागमका आदेशा इति सिद्धान्तात् स्थानिवद्भाव
वृद्धयादिनिषेधार्थतया 'नेटि' इत्यादेः सार्थक्यमिति कथमेतज्ज्ञापकत्वं तयो ?
समुदायस्य तत्त्वमित्यनल्पा व्यर्थेयम्, तेनैव मतार्थत्यादत आह— अनागमेति ।
मर्थ इति । अस्य कर्तव्यतेत्यत्रान्वयः । यथाश्रुतार्थयोगे बीजप्रतिपादनपूर्वकमत्र
माह— आर्धधातुकस्यादिकल्पनेनेत्यन्तेन । तथा च सा हेतौ तृतीया । अ
पत्त्येति । अर्थेद तृतीया; तदभिन्ना या अर्थापत्तिस्तन्मूलकेत्यर्थः । तुपपत्त्यर्था
पाठस्तु सुगमः । यदा यन्नाशो तस्य हेतुरिति नान्वय इति यथाश्रुतं साधु । अर्था
कल्पकप्रमाणान्याम: । वाक्यान्तरेति । 'इड्रहितार्धधातुकस्य सेडार्धधातुकमिदादि
इत्यादिः । एवं चेति । बुद्धिविपरिणामसाम्यं चेत्यर्थः । यत्रापि आगमे

आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इति 'अच: परस्मिन्—' इत्यादेर्नासंगतिः । एतेन 'यदागमा—' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् । एतत्सर्वम् 'दाधा घ्वदाप्' इति सूत्रे भाष्ये स्पष्टम् ॥ ११ ॥

नन्वेवमुदस्थादित्यादौ 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णापत्तिरत आह—

## निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

---

इत्यादीनामसंगतिश्च श्रौतावयवावयविभावस्याप्यत्र त्यागात् 'यदागमा —' इत्यस्यासंगति-रेवात आह— आनुमानिकेति । 'यथा' इत्यादि । भाष्यसंमतिरिति । 'तथात्रापि श्रौतावयवावयविभावस्य न त्याग इति यदागमा इत्येतस्यप्रवृत्तिरप्यावश्यकत्वैवेति प्रणिदापयतीत्यादौ न दोष' इति शेषः; अन्यथा आनुमानिकेत्यादिग्रन्थस्य प्रकृतासंगतत्वं स्पष्टमेव । प्रासङ्गिकत्वकल्पनापेक्षया इत्थमेवोचितमिति बोध्यम् । यत्तु— अत्र पक्षे आगमत्वं नास्त्येवेति, तन्न, अनागमकानामित्यादिग्रन्थस्यासंगतेः किं च निरवयवकबुद्धिनिर्गमन-सापेक्षकबुद्ध्युन्मज्जनेन आगमस्यावयवत्वांशस्यापि निर्बाधत्वात् । किं च निरवयवरक्षणाय 'एङ:' इत्यादाविव अत्रापि बुद्धिविपरिणाममात्रस्वीकारेण समुदाये गौणादेशत्वव्यवहारेण अवयवे तदागमो न युक्तः, भिन्ननिष्ठत्वस्य बाधावहत्वादिति दिक्, तदुपपादयन्नाह— एतेनेति । उक्तरीत्या अनर्थकत्वाभिप्रायकत्वेनेत्यर्थः । इदं सर्वं समूलयति— एतत्सर्वमिति । परिभाषा तद्व्याख्यानम् अनागमकानामित्यादि सर्वं चेत्यर्थः । तत्र हि प्रणिदापयतीत्यादौ तद्भावाय कृतम् 'समानशब्दप्रतिषेध' इति वार्तिकम् अर्थवद्ग्रहणपरिभाषया खण्डयित्वा, प्रणिदापयतीत्यत्र तदभावमाशङ्क्य, 'न वा अर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते' इत्यादि उक्त्वा, निर्दिष्टानामागमशासनमयुक्तमित्याशङ्क्य, निर्दिष्टादेशानाऽऽसन यथा बुद्धिविपरि-णामेन तथाप्यभिप्रायेण 'आदेशास्तर्हीमे भविष्यन्ति— अनागमकानां सागमकाः । तत्कथम्? सर्वे सर्वपद—' इत्याद्युक्तम् । आदेशा इत्यादेः, इमे आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि आदेशा आदेशत्वधर्मा भविष्यन्तीत्यर्थ इति बोध्यम् ॥

एवम् यदागमा इत्यादौ वारे । अनेन पूर्वसंगतिरुक्ता । नेम इत्यस्य चेतत्समानतरत्व-

'षष्ठी स्थानेयोगा' इति सूत्रमावर्तते । तत्र द्वितीयस्यायमर्थः—षष्ठ्यन्तं निर्दिश्यमानम् उच्चार्यमाणम् उच्चार्यमाणसजातीयमेव निर्दिश्यमानावयवरूपमेव [illegible] स्थानेन स्थाननिरूपितसंबन्धेन युज्यते, न प्रतीयमानमिति; तेनेदं सिद्धम् । न च 'अस्य च्वौ' इत्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्, जातिपक्षे दोषाभावात् । किं च 'न भूसुधियोः' इति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः । इयङुवङोर्ङित्त्वं श्निवर्णोवर्णान्तधातु-

---

न्यायसिद्धा, किं तु सूत्रार्थभूतेत्याह— **षष्ठीति** । यद्यपि 'षष्ठी स्थाने—' इति सूत्रप्रसिद्धार्थकं नापेक्षितम्, तद्भिन्नेनान्तरतम्यादिना अत्र शास्त्रे तादृशस्थले सर्वत्र स्थानसम्बन्धलाभात् । तथा चानर्थक्यात्तदीयायमर्थ इति भाष्ये उक्तम्, सीरदेवादिभिरपि तथैवोक्तम्; तथापि अबुधबोधनाय सूत्रमतावलम्बेनाह— **आवर्तत इति** । तत्र एतस्य प्रसिद्धार्थकत्वादाह— **तत्रेति** । तयोर्मध्य इत्यर्थः । अयं वक्ष्यमाणः । तमेवाह— **षष्ठ्यन्तमित्यादिना इतीत्यन्तेन** । 'प्रत्ययग्रहणे—' इति परिभाषया तदन्तग्रहणादाह— **षष्ठ्यन्तमिति** । निर्दिश्यमानपदाध्याहारादाह— **निर्दिश्येति** । तदर्थमाह— **उच्चार्येति** । ननु सूत्रोच्चार्यमाणस्य न तत्संबन्धः, किं तु प्रयोगस्थस्यात आह— **उच्चार्येति** । नन्वेवं 'सर्वं वाक्यम्—' इति न्यायात्सामर्थ्यात्परिभाषायाः फलवतीत्वादाह— **पदेति** । नन्वेवं सुपद उदस्थादित्यादिसिद्धावपि अतिस्थ इत्यादौ दोषोऽत आह— **निर्दिश्येति** । उच्चार्यमाणसजातीयावयवरूपमेव वेत्यर्थः । इदमप्यध्याहारलभ्यम् । सुपद उदस्थादित्यादौ तु व्यपदेशिवद्भावेन सिद्धिरिति भावः । स्थानसंबन्धस्यान्यत्र प्रतिपादितत्वादाह— **स्थाननिरूपितेति** । निरूप्यनिरूपकभावेनेत्यर्थः । योगेति कर्मणि घञित्याह— **युज्यत इति** । एतव्द्यावर्त्यमाह— **नेति** । **प्रतीयमानं** प्रतीयमानसजातीयं प्रतीयमानसजातीयावयवरूपं [illegible] । 'इति तेनेदम्' इति पाठः । **तेनेदमिति** । उक्तार्थकतन्त्रेणोक्तवचनमूलमित्यर्थः । यद्वा उभयत्र अयं इत्येव पाठः । अयमित्यस्य उक्तवचनस्य इत्यर्थः । तदेवाह— **षष्ठ्यन्तमित्यादिसिद्धमित्यन्तेन** । **इत्ययं इति** । द्वितीयसूत्रस्यैव भावः । अन्यत्सर्वं प्राग्वत् । एवं साधितपरिभाषायां व्यक्तिपक्षे शङ्कते— **न चेति** । इत्यादौ इत्यादिविषये मालीभवतीत्यादौ । **दोषाभावादिति** । जातेः स्वतो निर्दिश्यमानत्वाभावेऽपि नान्तरीयकतया तत्तत्पर्योच्चारित व्यक्तिद्वारक तदस्त्येव । जातिश्च सर्वत्रापि निर्दिष्टेति भावः । मन्वेवमपि व्यक्तिपक्षे दोषस्तदवस्थ एवात आह— **किं चेति** । 'यत' इति शेषः । **ग्रहणकशास्त्रेति** । ग्राहकाणुदित्सूत्रेत्यर्थः । **कार्यबोधनात्** कार्यप्रवर्तनात् ।

आनुमानिकस्यान्यादेशभाक्कल्पनेऽपि श्रौतस्यान्यादेशभावस्य न त्याग इति 'अच परस्मिन्—' इत्यादेर्नासंगतिः । एतेन 'यदागमा—' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् । एतत्सर्वम् 'दाधा घ्वदाप्' इति सूत्रे भाष्ये स्पष्टम् ॥ ११ ॥

नन्वेवमुदस्थादित्यादौ 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णापत्तिरत आह—

## निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

---

इत्यादीनामसंगतिरत श्रौतावयवावयविभावस्याप्यत्र त्यागात् 'यदागमा—' इत्यस्यासंगतिरेवात आह— आनुमानिकेति । 'यथा' इत्यादि । नासंगतिरिति । 'तथापि श्रौतावयवावयविभावस्य न त्याग इति यदागमा इत्येतत्प्रवृत्तिरप्याहृतैवेति प्रणिदापयतीत्यादौ न दोष' इति शेषः, अन्यथा आनुमानिकेत्यादिग्रन्थस्य प्रकृतानुपयुक्तत्वं स्पष्टमेव । प्रासङ्गिकत्वकल्पनापेक्षया इत्थमत्रोचितमिति बोध्यम् । यत्तु— अत्र पक्षे आगमत्वं नास्त्येवेति, तन्न, अनागमकानामित्यादिव्यवहारासंगतेः किं च निरवयवत्वबुद्धिनिमज्जनसावयवत्वबुद्ध्युन्मज्जनेन आगमत्वव्यवहारस्यापि निर्बाधत्वात् । किं च नित्यत्वरक्षणाय 'एङ' इत्यादाविव अत्रापि बुद्धिविपरिणाममात्रस्वीकारेण समुदाये गौणादेशत्वव्यवहारेण अवयवे तदनागमो न युक्त, भिन्नभिन्नत्वनानाविरोधादिति दिक्, तद्ध्वनयन्नाह—एतेनेति । उक्तरीत्या अनयोर्भिन्नाश्रयत्वेनेत्यर्थः । इद सर्व समूलयति— एतत्सर्वमिति । परिभाषा तदुपाख्यानम् अनागमकानामित्यादि सर्वं चेत्यर्थः । तत्र हि प्रणिदापयतीत्यादौ इष्टासिद्धये कृतम् 'समासशब्दप्रतिषेध' इति वार्त्तिकम् अर्थवद्ग्रहणपरिभाषया प्रत्याख्याय, निदापयतीत्यत्र तदर्थवत्त्वमाशङ्क्य, 'न वा अर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते' इत्यादि उक्त्वा, निःपूर्वस्यागमशासनमयुक्तमित्याशङ्क्य, निर्दिष्टोपदेशासन यथा बुद्धिविपरिणामेन तथात्रापीत्याशयेन 'आदेशास्तर्हीमे भविष्यन्ति— अनागमकानां सागमकाः । तत्कथम्? सर्वे सर्वपद—' इत्याद्युक्तम् । आदेशा इत्यादि । इष आगमत्वेन व्यवहारे परिभाषाऽपि तथा शिष्यमाणा अपि आदेशा सन्तस्तदेशा भविष्यन्तीत्यर्थ इति बोध्यम् ॥

प्रथम 'यदागमा' इत्यादौ ... । अनेन पूर्वसंगतिरुक्ता । नेष ...त्यान्तरस्य-

'षष्ठी स्थानेयोगा' इति सूत्रमारभ्यते । तत्र द्वितीयस्यायमर्थः—षष्ठ्यन्तं निर्दिश्यमानम् उच्चार्यमाणम् उच्चार्यमाणसजातीयमेव निर्दिश्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपितसंबन्धेन युज्यते, न प्रतीयमानमिति; तेनेदं सिद्धम् । न च 'अस्य च्वौ' इत्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्, जातिपक्षे दोषाभावात् । किं च 'न भूसुधियोः' इति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानत्वसंबोधनान्न दोषः । इयङुवङोर्ङित्त्वं त्विवर्णोवर्णान्तधातु-

---

न्यायसिद्धा, किं तु सूत्रार्थभूतेत्याह— षष्ठीति । यद्यपि 'षष्ठी स्थाने—' इति सूत्रं प्रसिद्धार्थकं नापेक्षितम्, तद्विनैवान्तरतमत्वादिना अत्र शास्त्रे तादृशस्थले सर्वत्र स्थानसंबन्धलाभात् । तथा चानर्थक्यात्संबन्धमयं इति भाष्ये उक्तम्, सीरदेवादिभिरपि तथैवोक्तम्; तथापि अबुधबोधनाय सूत्रमतावलम्बेनाह— आरभ्यत इति । तत्र एतस्य प्रसिद्धार्थकत्वादाह— तत्रेति । तयोर्मध्य इत्यर्थः । अयं वक्ष्यमाणः । तमेवाह— षष्ठ्यन्तमित्यादिना इतीत्यन्तेन । 'प्रत्ययग्रहणे—' इति परिभाषया तदन्तग्रहणादाह— षष्ठ्यन्तमिति । निर्दिश्यमानपदाध्याहारादाह— निर्दिश्येति । तदर्थमाह— उच्चार्येति । ननु सूत्रोच्चार्यमाणस्य न तत्संबन्धः, किं तु प्रयोगस्थस्येत्यत आह— उच्चार्येति । 'सर्वं वाक्यम्—' इति न्यायसामर्थ्यात्परिभाषायाः फलवत्त्वादाह— पदेति । नन्वेवं सुपद उदस्यादित्यादिसिद्धावपि अतिस्य इत्यादौ दोषोऽत आह— निर्दिश्येति । उच्चार्यमाणसजातीयावयवरूपमेव वेत्यर्थः । इदमप्यध्याहारलभ्यम् । सुपद उदस्यादित्यादौ तु व्यपदेशिवद्भावेन सिद्धिरिति भावः । स्थानसंबन्धस्यान्यत्र प्रतिपादितत्वादाह— स्थाननिरूपितेति । निवर्त्यनिवर्तकभावेनेत्यर्थः । योगेति कर्मणि घञित्याह— युज्यत इति । एतद्व्यावर्त्यमाह— नेति । प्रतीयमानं प्रतीयमानसजातीयं प्रतीयमानावयवरूपं वा । 'इति तेनेदम्' इति पाठः । तेनेदमिति । उक्तार्थकतत्सूत्रस्वीकारेणेत्यर्थः । समूलमित्यर्थः । यद्वा उभयत्र अर्थ इत्येव पाठः । अस्मिन्पक्षे उक्तवचनस्य इत्यर्थः । तदेवाह— षष्ठ्यन्तमित्यादिसिद्धमित्यन्तेन । इत्ययं इति । द्वितीयसूत्रस्येति भावः । अन्यत्सर्वं प्राग्वत् । एवं साधितपरिभाषायां व्यक्तिपक्षे गह्वरे— न चेति । इत्यादौ इत्यादिविषये मालीमतीत्यादौ । दोषाभावादिति । जातेः स्वतो निर्दिश्यमानत्वाभावेऽपि नान्तरीयकतया तत्तत्सर्वोपस्थितिरित्यभिप्रायेण तदस्त्येव । जातिश्च सर्वत्रापि सिद्धैवेति भावः । नन्वेवमपि व्यक्तिपक्षे दोषस्तदवस्थ एवात आह— किं चेति । 'सत' इति शेषः । ग्रहणकशास्त्रेति । ग्राहकाणुदित्सूत्रेणेत्यर्थः । कार्यबोधनात् कार्यभजनीयत्वात् ।

श्नुधातुभ्रुवामित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय । रिङ्ङीङोर्ङित्त्वं तु स्पष्टार्थमेव । एतेन इयङ ङित्त्वं वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकमित्यपास्तम्' हयवरट्सूत्रस्थेन 'अयोगवाहानामुपदेशो अलोऽन्त्यविधि प्रयोजनम्–वृक्षस्तत्र । नैतदस्ति प्रयोजनम् । निर्दिश्यमानस्येत्येव सिद्धम्' इति भाष्येण

---

अन्यथा 'एरनेकाच —' 'ओः सुपि' इत्यादौ तेषां ग्रहणेऽप्यनिर्दिश्यमानत्वाद् भ्रूधियोर्यण प्राप्तिरेव नेति निषेधवैयर्थ्यं स्पष्टमेव । धातोरनुवृत्त्या निर्दिष्टत्वेऽपि इस्थेकारान्तादेव तस्य तत्त्वम्, न तु दीर्घेकारान्तादे । नियञ्चुरित्यादौ 'एरनेकाच —' इत्यस्य, पटुमन्तमाचष्टे णिच् मतुपो लोप । ततः क्विप् पटु ⁾) पट्वावित्यादौ 'ओः सुपि' इत्यस्य च चारितार्थ्यमिति भाव । नन्वेवमपि इयङुवङोर्ङित्त्वं व्यर्थम्, श्वोरित्युक्त्या अनया तयोरेव भवनादत आह— इयङिति । इह श्वोरिति 'सम्भवति—' इति न्यायेन धात्वोरेव समानाधिकरणं विशेषणम्, नान्ययो, असम्भवाद् व्यभिचाराच्च, तदाह— इयणोर्धिर्णान्तेति । धातुश्नुभ्रुवामिति पाठ । मर्यभूतत्वेन अभ्यर्हितत्वात्ता पूर्वनिपात । अत एवाग्रे धात्वादीनामित्युक्ति । सूत्रे तु सौत्रत्वात्तदविवक्षया अल्पाच्तरत्वेन तथा प्रयोग इति बोध्यम् । इत्यर्थेन 'अचिश्नुधात्वित्यस्य' इति शेष । अणिवर्णसमुदायक । निर्दिष्टत्वात्[1] 'तस्य पदे साक्षात्' इति शेष, एव च तस्याविशेषेऽपि प्राधान्यात् श्नुभ्रुवोरसंयुक्तयसम्बन्धे तेषामेव स्यादिति नानया वारणमिति, ङित्त्वमावश्यकमिति भाव । नन्वेवमपि रीङ्ङीङोर्ङित्त्वं व्यर्थम्, तद्विधौ वर्णत्वसमुदायस्यानिर्दिष्टत्वादनयैव निर्वाहात् । न च 'अङ्गस्य' इति अधिकारप्राप्तमिति तदपि निर्दिष्टमेवेति वाच्यम्, तावतापि अतिप्रसक्तया तस्य स्वातन्त्र्येण अस्थानित्वेन तदन्तविधिं विना तन्नादेशाप्राप्त्या अवश्यवाच्यतदन्तविधौ तत्र स्थानित्वनिवारकत्वेनाश्रयास्तस्य विद्यमानस्यापि निर्दिष्टत्वस्याप्रयोजकत्वात् । अत एव प्राक् धात्वादीत्यादिपदानि, 'एरनेकाच —' इत्यादावाक्यास्तस्य च । एव चानुवृत्त्या तत्तदधिकारसूत्रान्यमवस्थपदस्यैवेति न वक्ष्यमाणातिव्याप्त्यादि प्रत्याख्यातिरत आह— रिङिति । एवन फलान्तराभ्यवच्छेद, तमेवाह— एतेनेति । वक्ष्यमाणदोषगत्यर्थं । इयङ ङित्त्व रिङादेशाङिस्त्वम्, तमत्र दोषमाह— हयवेति । अस्य भाष्येणेत्यत्रान्वय । उपदेशे इति । प्रयोजनविशेषनिर्देश विनोपदेश इत्यर्थ । वृक्षस्त-

---

1. निर्दिष्टत्वात् प्रत्युक्तरीत्या यथासम्भव निर्दिष्टत्वात् । एवं च

विरोधात् । अनया परिभाषया 'येन विधि—' इति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनम्, 'यदागमा—' इति लब्धस्य च । तेन सुपद उदस्थादित्यादिसिद्धिः । अनया च स्वस्वनिमित्तसंनिधापितानाम् 'अलोऽन्त्यस्य' इत्यादीनां समावेश एव, न तु बाध्यबाधकभावः, विरोधाभावात् । नाप्यङ्गाङ्गिभावः, उभयोरपि परार्थत्वेन तदयोगात् । 'अनेकाल्शित्—' इति सूत्रे सर्वश्च एतत्परिभाषाबोधित एव गृह्यते । यत्तु—'आदेः परस्य' 'अलोऽन्त्यस्य' इत्येताबेतद्बाधकाविति; तन्न, उदस्थादिति सूत्रविषये अस्या 'पादः पत्' इति सूत्रे भाष्ये संचारितत्वात् । नाप्येतयोरियं बाधिका, एतयोर्निर्विषयत्वप्रसङ्गादिति 'ति विंशते—'

---

चेति । 'अलोऽन्त्यस्य' इत्यन्त्यस्य सत्वसिद्धिरिति भावः । विरोधादिति । तत्रापि धर्मग्रहणेन तद्रीत्या एतदप्रवृत्त्यापत्तेरिति भावः । नन्वन्तरणादस्याः 'यदागमा—' इति न्यायमात्रबाधकत्वलाभात् सुपद इत्याद्यसिद्धिः । सामान्यतः सर्वबाधकत्वं तु 'अस्य च्वौ' इत्यादुक्तरीत्या दुर्वचम् । अत पर्यवसितमाह— अनयेति । तथा चोपस्थितत्वेन तयोक्तावपि तत्तस्याप्युपलक्षणमिति भावः । 'पदाङ्गाधिकारे—' इत्यस्य सूत्रप्रपञ्चत्वादाह— येनेति । लब्धस्य चेति । विशिष्टस्य तत्त्वाभावबोधनमित्यर्थः । अनेनैव क्रमेण तयोरुदाहरणे आह— तेनेति । अस्य वचनस्य तदुभयबाधकत्वेनेत्यर्थः । कस्यचिदुक्तिं खण्डयितुं सिद्धान्तमाह— अनया चेति । 'सह' इति शेषः । 'एरनेकाच—' इत्यादावपि भावः । समावेश एवेति । अधिकृताङ्गादिव्यवच्छेदद्वारा एतद्व्यवस्थापकत्वस्य तथा समत्वादिति भावः । विरोधेति । तैरेतत्साध्यफलस्यैव तत्र साध्यत्वेन तदभावादित्यर्थः । नन्वेवमङ्गाङ्गिभावापत्तिरत आह— नाप्यङ्गेति । परार्थत्वेन विध्युपकारकत्वेन; 'गुणानां च—' इति न्यायात् । नन्वेवमपि 'येन विधि—' 'यदागमा—' इत्युभयबोधितस्थानिना 'अनेकाल्—' इत्यत्र सर्वपदेन ग्रहणादनया सह तस्य विरोधसमत्वेन बाध्यबाधकभावापत्त्या परत्वात् 'अनेकाल्—' इत्यस्य प्रवृत्त्या सुपदो निर्नरसानित्यादिसिद्धिरेवात आह— अनेकालिति । एवेन तदुभयबोधित ग्राह्यः । तथा तेनापि समावेश एव । 'पद्दन्नोमास्—' इत्यादावपि आदेशः पाणिनिकृतस्यानुच्चारणानुमानात्तेषां व्यवस्थार्थत्वाद्वा न दोष इति भावः । उदस्थादिति सूत्रेति । 'पादः पत्' इति सूत्रभाष्ये उदस्थादिति लक्ष्ये 'आदेः—' इति मतविषये अस्याः संचारितत्वादित्यर्थः । किं चोक्तरीत्या व्यवस्थापकत्वे समत्वति बाधकत्वकल्पनानौचित्यादित्यपि बोध्यम् । एतयोः पूर्वोक्तयोस्तया । निर्विषयत्वेति । क्वचिदनया सिद्धः क्वचिदन्या-

इति सूत्रे कैयट । अकजिविषये नायं न्याय प्रवर्तते, स्थानिवद्भावेनैव तन्म-

---

ध्योरनिर्दिश्यमानत्वात् । एत्र च एतद्विषये उक्तरीत्या 'अलोऽन्त्यस्य' इत्यादिप्रवृत्तावपि तद्विषये 'राद्र क च' इत्यादौ नैतत्प्रवृत्ति, उभयाविषयत्वात् । एत्र च ''सम सुटि' 'तासस्त्यो.—' इत्यादौ एतदप्रवृत्त्या तत्प्रवृत्ति सुवचेति न दोष, 'स स्यार्धधातुके' इत्यत सीतिवत् स इत्यनुवृत्तिरप्यन्त्ये सुवचेति भाव । ति विंशतेरिति । तत्र हि 'यस्येति च' इत्यनेनैवान्त्यस्य लोपे सिद्धे सूत्रारम्भसामर्थ्यात्समुदायस्य निर्दिष्टस्याप्राता-देशवारणाय तिग्रहणे कृतेऽप्यन्त्यस्य कुतो नेति प्रश्ने निर्दिश्यमानेति वारणपरोत्तर भाष्यप्रतीके नात्र परिभाषाप्रवृत्तिरिष्टा । न हि सा तयोर्बोधिका उक्तहेतो । तस्मा त्तिग्रहणसामर्थ्यात् 'अलोऽन्त्यस्य' इत्यस्याप्रवृत्तौ सर्वस्यार्थाल्लोप इति भाष्याकूतमिति तेनोक्तम् । कैयट इत्यनेन अरुचि सूचिता, उक्तार्थस्येष्टत्वेऽपि 'नानर्थके—' इत्यस्य प्रत्याख्यानपरसिद्धान्तभाष्यरीत्या तद्भाष्ययोजनेत्यमनुचिता अक्षरास्वारस्यात् । 'न चैव भाष्यासङ्गति', एकदेश्युक्तेन प्रकारान्तरेण सुयोजत्वात् । तथा हि— द्वयोर्दशतोर्विंश-देश, शतिच्प्रत्यय इति पक्षे अ युत्पत्तिपक्षे विंशादेशस्तिच्प्रत्यय इति साधुत्वाय व्युत्पत्ता-वपि वस्तुत शुद्धरूढे चानर्थकत्वेन 'अलोऽन्त्यस्य' इत्यस्याप्रवृत्त्या अनया सर्वादेश इति । एत्र च एकदेशिमताभिप्रायकमेव भाष्यम् । सिद्धान्तस्तु कैयटोक्त एव । इदमेव सूचयितुम् 'ति विंशते' इतिसूत्रपर्यन्त गमनम्; अन्येषां उक्तार्थस्य 'षष्ठी स्थाने—' इत्यनेन कैयटेनोक्तत्वात्तावत्पर्यन्तगमन व्यर्थमेवेति बोध्यम् । मन्वेवमप्यसा अकजिविषये-ऽपि प्रवृत्तिसंभवेन पूर्वत्र तन्मध्यपतितन्यायस्यापि उल्लेख उचित । तथा च साकच्कस्य कार्ये न स्यादत आह— अकजिति । तत्रैतन्न्यायाप्रवृत्तौ हेतुमाह— स्थानीति । यथा स्थानिवद्भावेन स्थानिबुद्धया कार्यम्, तथा तेन न्यायेन तद्बुद्धयैव कार्यजननादित्यर्थ. । अस्याशय 'किं चैव सति स्थानिबुद्धयैव—' इति ग्रन्थव्याख्यानरीत्या बोध्य । न चैवमत्र दृष्टान्तोक्तिरधिकेति वाच्यम्, पूर्वदोषारुच्या तिसृणामित्यत्र अन्यथा सर्वा-देशवारणपरभाष्यासङ्गत्यापत्त्या तदभिमया पूर्वत्रोक्तया यथा तद्विषये एतदप्रवृत्तिरेवम् अत्रा-रुचिसत्त्वेऽपि 'त्रिम—' इत्यस्यान्तरार्थत्वेऽपि कादेशविधानसामर्थ्यात् स्थानिवद्भावेन तन्मध्येति न्यायस्यार्थशस्तथा तद्विषये एतदप्रवृत्तिरिति तन्मध्येति न्याय स्थानिवद्भावे न तुल्यो न तु ताभ्यामिति तत्काटिप्रविष्टत्वं तन्मध्येतरस्य नेति तौ द्वौ मियस्तुल्यावेतौ द्वौ च मिय इति ताभ्यामन, भेद इति सूचनार्थत्वात् । एतेन तयोरेव विषय अस्या प्रवृत्तिरित्यत्र किं मानम् । तन्मध्येति न्यायविषयेऽपि प्रवृत्तिसंभवात् । किं च 'यदा-गमा —' इत्यनेनापि तद्बुद्धयैव कार्यजननेन ततोऽविशेषात् तत्रैतदप्रवृत्तावपि हेतुत्वा-

सत्तागमनम् । स्थानत स्थानेनेत्यर्थ । तत्र स्थानत आन्तर्यम् 'इको यणचि' इत्यादौ प्रसिद्धमेव । अर्थत — 'पद्न्—' इत्यादौ । स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति सिद्धान्तात् यदर्थाभिधानसमर्थो य स तस्यादेश इति तत्समानार्थ-तत्समानवर्णपादादीना ते । 'तृज्वत्क्रोष्टु' इति च । गुणत — वाग्घरि-रित्यादौ । प्रमाणत — 'अदसोऽसे —' इत्यादौ । स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टैषा ॥ १३ ॥

ननु प्रोढवानित्यत्र 'प्रादूहोढ—' इति वृद्धि स्यादत आह—

**अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥**

विशिष्टरूपोपादाने उपस्थितार्थस्य विशेषणतयान्वयसंभवे तत्त्यागे माना-

---

भेदापरितरत आह— **स्थानेनेति** । आन्तादिलातवतीयान्तारतसिरिति भाव । सति समत्र इति विशेषणसाफल्याय चतुर्णां क्रमेणोदाहरणान्याह— **तत्रेति** । चतुर्णां मध्य इत्यर्थ । ननु 'पद्भ्या मास्—' इत्यादौ स्थानिनामेवानुपादानात्कथ तत्त्वमत आह— **स्थान्यर्थेति** । अयत्र येन स्थान्यादेशभावनिश्रान्तरिति भाव । **तत्समानेति** । तत्रादेशत्वग्रहेण स्थान्यर्थाभिधानसमर्थत्वग्रहे सति स्थानिन्यपि तदर्थाभिधानसमर्थत्वस्य तुल्यवित्तिवेद्यत्वेन ग्रहेण आदेशाक्षिप्तादेशसमानार्थेत्यर्थ । मन्वेव पाणादीनामपि तदापत्तिरत आह— **तत्समानेति** । आदेशसमानवर्णत्वम , तदपि भूयसा यथा कथञ्चित, न [illegible] सर्वांशेनेति भाव । ते पदादय । ननु पद्भ इत्यादिर्थसत्याद्यत्वेन स्थान्यादेशभाव एव तत्र न अत आह— **तृज्वदिति** । इति च इत्यादि । गुणशब्देन उत्तत्रितयातिरिक्त धर्ममात्रम् , तेन 'अनान्तर्यमेतयो —' इत्यादिभाष्येण न विरोध । वाह्यानां विवारादीना साक्षाद्वर्णावृत्तित्वेऽपि औपचारिक गुणत्वम , तदाह— **गुणतो वाग्घरिरिति** । इद च कौमुद्या स्पष्टम् । आदिना कृष्णर्धिरित्यादिपरिग्रह । प्रमाणत ह्रस्वत्वादेर्वस्तुतो गुणत्वेऽपि ब्राह्मणवसिष्ठन्यायेन पृथगुक्तमिति ध्वनयन्नाह— **प्रमाणेति** । **अदसोऽसेरिति** । तत्र आन्तरतम्यात् ह्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घ इति भाव ॥

**नन्विति** । 'एवमपि' इति शेष । स्थानत आन्तर्यस्य प्राथम्यप्रतिपादनेऽर्थाति तदप । इत्यत्र इयत्रापि । तथा चायत्रान्यथातिप्रसङ्गस्तदवस्थ इति भाव ।

भावोऽस्या मूलम् । अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यत इति 'संख्याया अति—' इति सूत्रे भाष्ये स्पष्टम् । इयं वर्णग्रहणेषु नेति 'लस्य' इत्यत्र भाष्ये स्पष्टम् । अत एवैषा विशिष्टरूपोपादानविषयेति वृद्धाः । एतन्मूलकमेव 'येन विधिः—' इत्यत्र भाष्ये पठ्यते— 'अलैवानर्थकेन तदन्तविधिः' इति । किं च 'स्वं रूपम्—' इति शास्त्रे स्वशब्देनात्मीयवाचिना अर्थो गृह्यते; रूपशब्देन स्वरूपम् । एवं च तदुभयं शब्दस्य संज्ञीति तदर्थः ।

---

परिभाषायां भाष्यमते मानमाह— **विशिष्टेति** । वर्णसमूहेत्यर्थः । इदं वक्ष्यमाणसिद्धार्थकथनम् । **विशेषणेति** । उपात्तशब्दरूपं प्रतीति भावः । **संभवे** 'सति' इति शेषः । नन्वत्र प्रसिद्धत्वाल्लौकिकार्थग्रहणम्; स च शास्त्रे पदे वा । एवं च प्रोह्वान् पटुजातीयायेत्यादावनया कथं वारणमत आह—**अत्रेति** । परिभाषायामित्यर्थः । अन्वयव्यतिरेकयोरपि लोके वस्तुतोऽसत्त्वादाह—**कल्पितेति** । शास्त्रवासनाकल्पितेत्यर्थः । **कल्पित इति** । 'प्रकृतिप्रत्ययादिभेदः' इति शेषः । अपि लौकिकसमुदायकः । **संख्याया अतीति** । तत्र हि 'डतेश्च' इति वार्तिकमनया उक्तरीत्या प्रत्याख्यातम् । नन्वेवमुक्तरूपविशिष्टरूपोपादान एव एतत्प्रवृत्तौ मानाभावेन तयोक्तिरयुक्तेति भवत्वितीत्यादौ यण् न स्यादत आह—**इयं वर्णेति** । '**लस्येत्यत्रेति** । तत्र हि 'लादेशे सर्वप्रसङ्गोऽविशेषात्' इति दत्तायां लुनातीत्यादावापत्तावनया कृतं वारणम् 'न वर्णग्रहणेषु' इति खण्डितम् । **अत एवेति** । वर्णग्रहणे एतदप्रवर्तनादेवेत्यर्थः । उक्तार्थे मानान्तरमपि ध्वनयितुमाह— **एतन्मूलकमेवेति** । वर्णग्रहणे एतदप्रवृत्तिमूलकमेवेत्यर्थः । 'वार्तिकम्' इति शेषः । एतेन मूलान्तरव्यावृत्तिः । अयं भावः—यदि सर्वत्रास्याः प्रवृत्तिस्तर्ह्यलोऽनर्थकेनेति विशेषणमयुक्तमेतत्परिभाषाविरोधात् । तस्माद्वर्णान्यत्रैवास्याः प्रवृत्तिरिति । हनादौ 'परार्थाधिकारे—' इति तदन्तविधिना प्राप्तस्य ह्रुनादिप्रत्ययाभावाय तद्वार्तिकम् । तथा च वर्णसमुदायेन चेत्तदन्तविधिस्तर्हि अर्थवतैवेति फलितम् । एतेन 'न वर्णग्रहणेषु' इति पूर्वापरवादभूत परिभाषान्तरमिति, तत्र ज्ञापकम् 'उभ.' इति सूत्रम्; अन्यथा उ इतीत्यत्र अचोऽनर्थकत्वात् यणादेशस्याप्रसङ्गे किं तेन । 'ईदूतौ च सप्तम्यर्थे' इति निर्देशो वेत्यादि च सौरदेयाद्युक्तमपास्तम्, तदेतदप्रवृत्त्यैव निर्वाहे वचनान्तरकल्पने गौरवात् । मूलमते परिभाषायां मानमाह—**किं चेति** । **स्वरूपमिति** । शब्दस्वरूपमित्यर्थः । **एवं चेति** । उभयग्रहणे चेत्यर्थः । तथा च पदार्थोपस्थितिः सफलेति भावः । **तदुभयमिति** । तत्सम्बन्धिशब्दद्वयबोध्यद्वयमित्यर्थः । एकमंशेऽपि बोध्यम् । तदुभय ताभ्यां स्वरूपशब्दाभ्यां गृह्यमाणं द्वयमिति वा ।

तत्रार्थो न विशेष्य , तत्र शास्त्रीयकार्यासंभवात्; किं तु शब्दविशेषणम् । एव चार्थविशिष्ट शब्द संज्ञीति फलितम् । तेनेषा परिभाषा सिद्धेति भाष्ये स्पष्टम् ॥ १४ ॥

नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्र 'आन्महत —' इत्यात्त्वापत्तिरत आह—

## गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ॥ १५ ॥

गुणादागतो गौण , यथा–गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीक । अप्रसिद्धश्च सज्ञादिरपि तद्गुणारोपादेव बुध्यते । मुखमिव प्रधानत्वान्मुख्य प्रथम

---

एतदुभयमिति पाठस्तु सुगम । तत्र अर्थे । शास्त्रीयेति । प्रत्ययेन धात्वर्थसमवायप्रातिप- दिकादिरित्यनेन अन्वयसमवायेति भाव । शब्दविशेषणं शब्दस्य विशेषणम् । अर्थ इत्यनुपद्यते । एवं च अर्थस्य तद्विशेषणत्वे च । तेनेषेति । तया तदर्थेन सूत्रेणेत्यर्थ-। ननु सूत्रस्य प्रत्याख्यानादयुक्तमिदमत आह— इति भाष्य इति । इत्यादि भाष्ये स्पष्टमित्यर्थ । अनेनाद्यप्रकार एव तदा बोध्य इति सूचितम् । एतेन सूत्रप्रत्याख्यानात्सीर- देवोक्त रूपग्रहण ज्ञापकमिति चिन्त्यमिति भ्रान्तोक्तम्, मध्यादिसूत्र भ्राजिग्रहणमिह ज्ञापकमिति सीरदेवोक्त मापास्तम्, सूत्रशेषत्वापरतया आवश्यायुक्तत्वात् मध्यादसाहचर्येण धातुसज्ञकराजेरेव ग्रहणेन भ्राजिग्रहणस्योपक्षीणत्वेनान्यस्यायुक्तत्वात् ऋकारस्य तदनुबन्ध- त्वाद्येति दिक् ॥

एवमपीति । तत्र लौकिकशास्त्रीयार्थग्रहणेऽपीत्यर्थ । अनेन पूर्वसगति प्रदर्शिता । महदिति । व्ययं चायम् । आत्त्वापत्तिरिति । मुख्यस्यैव ग्रहणमित्यत्र माना- भावादिति भाव । 'तत आगत ' इत्यणन्तो गौणशब्द इत्याह— गुणादिति । गुण- हेतुकत्वादजन्यतादृशबाधविषय इत्यर्थ । तमेव सदृष्टान्तमाह— यथेति । गोनिष्ठ- जाड्यादिगुणसजातीयजाड्यादिगुणहेतुकारणविषयगोत्वादिनिमित्तकप्रवृत्तिकतच्छब्दजन्यबो- धविशेष्या वाहीकरूपोऽर्थ इत्यर्थ । 'अभियुक्त —' इति सग्रहायाह— अप्रसिद्ध- श्चेति । सज्ञाबोध्य इत्यर्थ । नन्वस्य कथ गौणत्वमत आह— सज्ञादिरिति । तद्गुणेति । यद्वा- क्रमणाद् । सनाथमानादिरित्यर्थ । अपि प्रागुक्तसमुच्चायक ।

इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते। एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्। तेन प्रियत्रयाणामित्यादौ त्रयादेशो भवत्येव, तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तरूपगौणत्वाभावात्। किं चायं न्यायो न प्रातिपदिककार्ये, किं तूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र, तादृशपदकार्य एव। परिनिष्ठितस्य पदान्तरसंबन्धे हि गौर्वाहीक इत्यादौ गौणत्वप्रतीतिः, न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः

---

वाचकशब्दप्रयोगस्तदीयगुणैरित्यर्थः। एतेन 'प्रसिद्धाप्रसिद्धयोः—' इति परिभाषान्तरमिति रत्नाकरोक्तमपास्तम्। तादृश्ये हेतुमाह— **प्रधानत्वादिति**। प्रधानार्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वादित्यर्थः। तादृशतादृशार्थबोधकशब्दस्य गौणत्वं मुख्यत्वं च बोध्यम्। शालादिभ्य इति यदुपमेयमाह— **प्रथम इति**। प्राथमिकशक्तिजन्यबोधविषय इत्यर्थः। प्रथमत्वं तत्त्वोपपादयति— **गौणे हीति**। आरोपाय हि पूर्वं तदुपस्थितिरावश्यकीति भावः। **मुख्यार्थेति**। मुख्यार्थप्रवृत्तिनिमित्तारोपेणेत्यर्थः। आरोपितगोत्ववान् वाहीकसमभिव्याहारे गोशब्दार्थ इति भावः। फलितमाह— **एवं चेति**। उभयोर्गुणनिमित्तकत्वे चेत्यर्थः। अत्र परिभाषायाम्। अनेन अन्यत्र नैवमिति सूचितम्। तादृशस्य व्याख्यानस्य फलमाह— **तेनेति**। तदर्थमाह— **तत्रेति**। प्रियत्रयाणामित्यत्रेत्यर्थः। **इतरेति**। अन्यपदार्थेत्यर्थः। **उक्तरूपेति**। द्विविधेत्यर्थः। अत एवोपसर्जनप्रतिषेधो वार्तिककृता सर्वादिसूत्रे कृत इति भावः। ननु उपसर्जनत्वमन्यपि गौणत्वव्यवहर्तॄणां मते अयमतिप्रसङ्गस्तादवस्थ्य एवात आह— **किं चेति**। ननु तद्वारणाय यदि पदोद्देश्यककार्ये प्रवृत्तिरित्युच्यते, तर्हि अत्रासुरिरित्यादौ यदेव स्यात्। गोऽभवदित्यादौ प्रवृत्तता च स्यात्। एतेन यथाकथञ्चित्पदसम्बन्धिकार्ये प्रवृत्तिरित्यप्यपास्तम्, अन्वये दोषापत्तेः। अत्रासुरिरित्यादावतिप्रसक्तेश्चात आह— **किं तूपात्तमिति**। **विशिष्टेति**। अर्थवत्परिभाषामूलकत्वादस्या अपि विशिष्टस्योपादानविषयत्वमिति भावः। **रूपमिति**। अस्य 'उद्देश्यम्' इति शेषः। वर्णसमूहात्मकरूपमुद्देश्यमिति तदर्थः। यत्र कार्ये तन्निवेशयुक्तौ पदकार्ये अयं न्याय इत्यभियुक्तोक्तस्यसङ्गत्यापत्तिः। तत्र पदकार्ये इत्युक्तौ पदस्यापि कार्ये निमित्तत्वभ्रमः स्यादत आह— **तादृशेति**। वस्तुतः पदव्यपदेशरहितनिमित्तकेत्यर्थः। एवः प्रागुक्तपदकार्यद्वयव्यवच्छेदाय। तत्र निषेधे हेतुमाह— **परीति**। 'स्वार्थे परिपूर्णम्—' इत्यादिभाष्योक्तेरिति भावः। **हि** यतः। पीत्वमित्यत्र अस्यान्वयः। **प्रातिपदिकेति**। तस्य सुबादिकृतसाधुत्वरूपसंस्कारेत्यर्थः। **बाधायोग इति**। उत्तरकालप्रतीतिकगौणत्व-

प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् । श्वशुरमहाशस्यापत्यमित्यर्थे श्वाशुरिरित्या-
द्यावत् इञ् सिद्धये— उपात्तमित्यादि । न च प्रातिपदिकपद तादृशमिति वाच्यम्,
तेन हि प्रातिपदिकपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात् ।
निपातपद तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधायके
'ओत्' इत्यादावेनप्रवृत्त्या गोभवदित्यादौ दोषो न । अग्नीषोमो माणवक इत्यत्र

---

हेतुकमप्रवृत्ति गौणमुख्यन्यायेन बहिरङ्गत्वात भाव । ननु विशेष्यग्रहादेव उत्तमरन्थप्रया गतिसद्भावेत विशेषणद्वयेन, 'अत इञ्' इ यस अत एशाद्य वात 'अत्' इयत्र च आद न्तनिपातस्यादेश्य वादत आह— श्वशुरेति । वैयर्थ्य बीजाभावेन आदन्तनिपातवत् अत्राप अदन्तप्रातिपदिकस्योद्देश्यत्वाभावात विशिष्टरूपस्योद्देश्यत्वमस्त्येव यतिप्रसङ्गस्तदवस्थ एवेति भाव । इत्यर्थक इति । अनेनास्य विग्रहस्य निरस्तम् । अत इञ 'अत इञ' इति इञ । उपात्तमिति । तथा चादन्त इत्य नोपात्तमिति नातिप्रसङ्ग इति भाव । नन्वेव तावदेवास्तु, अल द्वितीयविशेषणेनात आह— आदीति । अनेनेद सूचितम्— द्वितीयविशेषणस्यापीदमेव कृत्यमिति । एतदत्र प्रतिपादयितु प्रायमिकरीत्या शङ्कते— न चेति । तादृशम् उपात्तम् । तथा च तावन्मात्र दत्तेऽपि नातिप्रसङ्गवारणमिति भाव । सूचितरीत्या सिद्धान्तमाह— तेनेति । प्रातिपदिकपदेनेयप । हि यतस्तदा, इत पञ्चम्याश्च सत्त्वात् सज्ञाशब्द शब्दस्य प्रवृत्तिनिमित्तत्वस्य प्रसिद्धत्वादिति भाव । एव सत्याद्यविशेषणवैयर्थ्य तु न अदन्तप्रातिपदिकस्य विशिष्य अर्थोपस्थापकत्वेनातिप्रसङ्ग तादवस्थ्यादिति बोध्यम् । एव च केवलस्य अत इत्यस्य न विशिष्टरूपतामात्रम्, प्राति पदिकपदस्य न विशिष्यार्थोपस्थापकत्वमात्रम्, अदन्तप्रातिपदिकस्य नोपात्तत्वमात्रमिति वाच्यम् । नन्वेव गोभवदित्यादावनया रीत्या न स्यात् ओदित्यत्र निपातपदस्यापि तुल्य शब्दत्वात् । किं चानुवृत्तस्य नोपात्तत्वमिति प्रागुक्तदोषनिरासे द्वितीयविशेषण व्यर्थमत आह— निपातेति । चादित्वेनैवेति । चत्वत्वादित्वस्यादिनेत्यर्थ । एतेन निपातत्वस्या खण्डोपाधिजातिशब्दरूपत्वस्य निरास । अय भाव— निपातत्व नाखण्डोपाधिरूपम्, तदनङ्गीकारात् । नापि जातिरूपम्, ग्रातकत्वादिना साङ्कर्यात् । नापि शब्दरूपम्, अन्य योगरूपत्वेन प्रातिपदिकपदघटकत्वाभावात् शब्दस्य तत्रैव तत्त्वाङ्गीकारात् । अत एव पूर्वत वैलक्षण्यसूचकस्तुशब्द इति । कार्येति । प्रगृह्यसंज्ञा । पूर्वादिति । गौणमुख्यन्यायत्वेन । गोभवदिति । गोभवत्कत्वकस्य गोसदृशरूपस्य भवत्स्य प्रतीतत्र गौणत्वम् । अत्र च गामीषदाद्यादिना मुख्यगौणप्राप्ति, तत्र विचार्यत इति भाव ।

प्रसिद्धदेवताद्वन्द्ववाच्याग्नीषोमपदस्य तत्सदृशपरत्वे अन्तरङ्गत्वादीत्त्वषत्वे भवत एव । सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकावित्यर्थके च न षत्वम् आद्ये गौणलाक्षणिकत्वात् अन्त्ये अप्रसिद्धत्वात् । अत एव अग्निसोमौ माणवकावित्यत्र गौणमुख्यन्यायेन षत्ववारणपरम् 'अग्नेः स्तुत्स्तोमसोमाः' इति सूत्रस्थं भाष्यं संगच्छते । गा पाठयेत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासंभवेन विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभि सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेण अत्वं त्वं संपद्यते अमहान् महान् भूत त्वञ्चरन्नित्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन च अस्य न्यायस्य

---

दोषो न प्रगृह्यत्वप्रयुक्तप्रकृतिभावो न, तथा च यथाश्रुतस्य तत्त्वं न स्यात्, तर्हि अत्र दोषो दुर्निवार, तथा च दोषवारणपरभाष्यासंगतिरिति तथात्वस्य वाच्यमिति निपातपरमार्थवैनक्षत्रीत्ने प्राप्तवदिति ततोऽत्र वैलक्षण्यमेवेति भाव. । नन्वेवमग्नीषोमौ माणवकावित्यत्रापि ईत्त्वषत्वे न स्यातामेतत्प्रवृत्तेरत आह— अग्नीति । 'प्रसिद्ध' इति तदा गौणत्वनिरासाय । देवताद्वन्द्वेति । देवताद्वन्द्वेऽर्थः । भवत एवेति । अथ दीक्षमुक्तम् । नन्वेवं भाष्यविरोधोऽत आह— सदृशेति । 'द्वन्द्वे' इति उभयान्वयि, तेन न्यायेन द्वितीयेऽपि लक्षणैव; तत्तद्गुणाध्यारोपमूलकतत्तत्प्रवृत्तिनिमित्तारोपेण च बोध इति मञ्जूषायां स्पष्टमिति गौणत्व युक्तमेवेति भाव । न षत्वमिति । देवताद्वन्द्वाभावादीत्त्वस्य प्राप्तिरेव नेति तदनुल्लेखः । एवमग्रेऽपि । नेत्त्वषत्वे इति पाठे तु यथा उक्तदोषोऽपि न, तथा अनेन षत्वं नेत्यर्थः । तदेव भाष्यमाह—अत एवेति । उक्तार्थकत्वादेवेत्यर्थ । यत्र चाग्नीषोमाविन्यादौ प्रागुक्तेः तयोरङ्गीकारं न भाष्यविरोध इति भाव । ननु परिनिष्ठितस्येत्यादिना यदुक्तम्, तस्याय भाव — विभक्त्यर्थस्य क्रियाकारकभावसम्बन्धरूपत्वेन तयोः सम्बन्धबोधः श्रुतिकृत इति श्रुतवाक्यापेक्षया शीघ्र प्रवृत्त्या प्रथमं तयोरन्वयबोधः, पश्चाद्गौणो गा वाहीकमानयेत्यादावपि; इदमयुक्तम्, गा वाहीकं पाठयेत्यादौ यत्र गौणार्थप्रादुर्भावं विना क्रियासम्बन्ध एवासम्भवी, तत्र पूर्वमेव गौणत्वावगतेरावश्यकत्वादित्याशयादत आह— गामिति । वेलायां तदर्थप्रत्ययाम् । 'गौणार्थत्वस्य प्रतीतौ' इति व्यस्त पाठ । 'उभय—' इति नियमप्राप्त्या 'कर्मणि च' इति निषेधप्रवृत्ते । अत एव कर्तरि तृतीया । एवम् 'गौणार्थकत्वस्य ग्रहेण' इत्यत्रापि योज्यम् । अपदस्येति । तथा चानुपस्थितैतन्न्यायाप्रवृत्त्या कार्यप्रवृत्तिरिति भाव । अप्रयोगादेवाह— बोद्धृभिरिति । व्याप्तिसमर्थनमाह— अत्वमिति । आदिना महद्भूत इत्यादिसंग्रह ।

पदकार्यविषयत्वमेवोचितम् । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः । किं च शुक्लामित्युक्ते कर्म निर्दिष्टम्, कर्ता क्रिया चानिर्दिष्टौ इत्याद्युक्त्वा, इहेदानीं गामभ्याज शुक्लां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव कर्म देवदत्त एव कर्ता अभ्याजैव क्रियेत्यर्थकेन अर्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थं क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि । एवमेतन्मूलकः 'अभिव्यक्तपदार्था ये—' इति श्लोकोऽपि पदकार्यविषयकः । ध्वनितं चेदम् 'सर्वादीनि—' इति सूत्रे संज्ञाभूतानां प्रतिषेधमारभमाणेन

---

**अन्यथा** अस्य पदकार्यविषयकत्वे । तेषु गां पाठयेत्यादिषु । **तदनापत्तिरिति ।** अन्वाख्यानापत्तिरित्यर्थः । भाष्यप्रयोगेऽपीदं बोध्यम् । इदं च प्रयोक्तॄणां तदा गौणार्थत्वप्रतीतिमभ्युपेत्य । वस्तुत इदं नेत्याह— **किं चेति ।** आदिना 'देवदत्तेत्युक्ते कर्ता निर्दिष्टः । कर्मक्रिये अनिर्दिष्टे । अभ्याजेत्युक्ते क्रिया निर्दिष्टा । कर्तृकर्मणी अनिर्दिष्टे' इत्यस्य परिग्रहः । **सर्वं निर्दिष्टमिति ।** अस्य 'इत्युक्तेन' इति शेषः, अन्यथा करणः, इत्यर्थकेनेत्यस्य चानन्वितिः स्पष्टैव । **गामेवेति ।** गामिति शब्दप्रत्ययमेव कर्मेत्यादिक्रमेणार्थः । एवकारास्तदन्यव्यवच्छेदकाः । कर्तैवेति पाठः । आदिभ्यां यथाक्रमं क्रियाकारकयोः परिग्रहः । **प्रसक्त इति ।** एतेन सर्वत्र वाक्यमेव बोधकमिति पदार्थातिरिक्तः कश्चिद्वाक्यार्थोऽस्तीति सूचितम् । **सामान्यत इति ।** विशेषेणेत्यर्थः । मात्रपदेन विशेषव्यावृत्तिः; तदादिविवक्षायामित्यर्थः । अत एवाप्रमादिसङ्गतिः । **अन्वाख्यानम्** 'कर्मणि—' इत्यादिसूत्रेण । विशेषक्रियान्वये आह— **पाठनेति ।** एतेन प्रातिपदिकव्यावृत्तिः । **गौणार्थत्वप्रतीतिरिति ।** 'शेषे विभाषा' इति विकल्पेन नियमाप्रवृत्तिपक्षे 'कर्तृकर्मणोः कृति' इत्युभयत्र षष्ठ्याम् 'कर्मणि च' इति निषेधाप्रवृत्त्या समास इति भावः । आपिशलिसमुदायक । वृत्तिमन्त्रस्थभाष्यमप्यत्र मानमित्युद्योते स्पष्टम् । एवमस्य कैयटाद्युक्तपदकार्यविषयकत्वं समर्थ्य, 'अभिव्यक्त—' इति परिभाषान्तरमिति भ्रमं निरसितुं तन्मूलत्वमेवेत्याह— **एवमिति ।** उक्तन्यायबलादित्यर्थः । **एतन्मूलक इति ।** अनेन तस्यान्यत्व निरस्तम् । **श्लोकोऽपीति ।** अनेन तस्य कल्पितत्वं सूचितम् । एवं सिद्धेऽर्थे मानान्तरमप्याह— **ध्वनितमिति ।** ध्वनितमपी-

प्रसिद्धदेवताद्वन्द्ववाच्याग्नीषोमपदस्य तत्सदृशपरत्वे अन्तरङ्गत्वादीत्त्वषत्वे भवत एव । सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्माणवकावित्यर्थके च न षत्वम्, आद्ये गौणलाक्षणिकत्वात् अन्त्ये अप्रसिद्धत्वात् । अत एव अग्निषोमौ माणवकावित्यत्र गौणमुख्यन्यायेन षत्ववारणपरम् 'अग्नेः स्तुत्स्तोमसोमाः' इति सूत्रस्थं भाष्यं संगच्छते । गां पाठयेत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासंभवेन विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेण अत्वं त्वं संपद्यते अमहान् महान् भूत इत्यादिष्वप्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन च अस्य न्यायस्य

---

दोषो न प्रवृत्तत्वप्रयुक्तप्रकृतिभागो न, तथा च यदनुवृत्तस्य तत्त्व न स्यात्, तर्हि अत्र दोषो दुर्निवार, तथा च दोषवारणपरभाष्यासंगतिरिति तथापदं वाच्यमिति निपातपरमाद्यर्थैतत्प्रवृत्तिर्न प्राप्नोतीति ततोऽत्र वैलक्षण्यमस्तीति भाव । नन्वेवमग्नीषोमौ माणवकावित्यत्रापि ईत्त्वषत्वे न स्यातामेतत्प्रवृत्तेरत आह— अप्रसीति । 'प्रसिद्ध' इति तदा गौणत्वनिरासाय । देवताद्वन्द्वेति । देवताद्वन्द्वेऽर्थ । भवत एवेति । अत्र धीप्रमुक्तम् । नन्वेवं भाष्यविरोधोऽत आह— सदृशेति । 'द्वन्द्वे' इति उभयान्वयि, तेन न्यायेन द्वितीयेऽपि लक्षणैव, तत्तद्गुणाध्यारोपमूलकतत्तत्प्रवृत्तिनिमित्तारोपेण च बोध इति मञ्जूषायां स्पष्टमिति गौण न युक्तमस्तीति भाव । न षत्वमिति । देवताद्वन्द्वाभावादीत्त्वस्य प्राप्तिरेव नेति तदनुल्लेख । एवमग्रेऽपि । नेत्यपरे इति पाठे तु यथा उत्तरेतरौ न, तथा अनेन षत्वं नेत्यर्थ । तदेव भाष्यमाह— अत एवेति । उक्तरीत्या गौणादेवेत्यर्थ । एव चाग्नीषोमावित्यादौ प्रागुक्ते तयोरङ्गीकारे न भाष्यविरोध इति भाव । ननु परिनिष्ठितस्येत्यादिना यदुक्तम्, तत्साय भाव— विभक्त्यर्थस्य क्रियाकारकभावसंबन्धरूपत्वेन तयो संबन्धबोध श्रुतिकृत इति श्रुतेर्वाक्यापेक्षया शीघ्र प्रवृत्त्या प्रथमं तयोरन्वयबोध, पश्चा न्मिथो गा वाहीकमानयेत्यादाविति, इदमयुक्तम्, गां वाहीकं पाठयेत्यादौ यत्र गौणार्थप्रादुर्भाव विना क्रियासंबन्ध एवासंभवी, तत्र पूर्वमेव गौणत्वावगतेरात्वाद्यनापत्तेस्तादवस्थ्यादत आह— गामिति । वेलायां तत्प्रागेवेत्यर्थ । 'गौणार्थत्वस्य प्रतीतौ' इति व्यस्त पाठ । 'उभय—' इति नियमप्राप्त्या 'कर्मणि च' इति निषेधप्रवृत्ते । अत एव कर्तरि तृतीया । एवम् 'गौणार्थकत्वस्य ग्रहेण' इत्यत्रापि बोध्यम् । अपदस्येति । तथा चानुपस्थितैतन्न्यायाप्रवृत्त्या कार्यप्रवृत्तिरिति भाव । अप्रयोगादेवाह— बोद्धृभिरिति । नन्विदमतिमात्रमाह— अत्वमिति । भाष्यता महद्भूत इत्यादिप्रयोगार ।

पदकार्यविषयत्वमेवोचितम् । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः । किं च शुक्लामित्युक्ते कर्म निर्दिष्टम्, कर्ता क्रिया चानिर्दिष्टौ इत्याद्युक्त्वा, इहेदानीं गामभ्याज शुक्लां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव कर्म देवदत्त एव कर्ता अभ्याजैव क्रियेत्यर्थकेन अर्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थं क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियान्वयफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठकक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि । एवमेतन्मूलकः 'अभिव्यक्तपदार्था ये—' इति श्लोकोऽपि पदकार्यविषयकः । ध्वनितं चेदम् 'सर्वादीनि—' इति सूत्रे संज्ञासूत्रानां प्रतिषेधमारभमाणेन

---

**अन्यथा** अस्य पदकार्यविषयकत्वे । तेषु गा पाठयत्यादिषु । **तदनापत्तिरिति** । आरब्धाप्राप्तिरित्यर्थः । साधुप्रयोगेऽपीदं बोध्यम् । इह च प्रयोक्तृणां तदा गौणार्थत्वप्रतीतिमभ्युपेत्य । वस्तुत सैव नेत्याह— **किं चेति** । आदिना 'देवदत्तेत्युक्ते कर्ता निर्दिष्टः । कर्मक्रिये अनिर्दिष्टे । अभ्याजेत्युक्ते क्रिया निर्दिष्टा । कर्तृकर्मणी अनिर्दिष्टे' इत्यस्य परिग्रहः । **सर्वं निर्दिष्टमिति** । अथ 'इत्युक्तेन' इति शेषः, अन्यथा वदन्, इत्यर्थकेनेत्यस्य चासङ्गति स्यादेव । **गामेवेति** । गामिति शब्दशास्त्रमेव कर्मैत्यादिक्रमेणार्थः । एवास्तदन्ययव्यवच्छेदकाः । कर्तैवेति पाठ । आदिम्या प्रधानस्य क्रियाकारकयोः परिग्रहः । **प्रसक्त इति** । एतेन सर्वत्र वाक्यमेव बोधकमिति पदार्थातिरिक्त कश्चिद्वाक्यार्थोऽस्तीति सूचितम् । **सामान्यत इति** । क्रियान्वितेनेत्यर्थः । मात्र पदेन विशेषव्यावृत्तिः, तदादिविवक्षाश्रयमित्यर्थः । अत एवाप्रिमादिसङ्गतिः । अन्वाख्यानम् 'कर्मणि—' इत्यादिसूत्रेण । विशेषक्रियान्वयमाह— **पाठनेनेति** । एतेन प्रातिपदिकव्यावृत्तिः । **गौणार्थत्वप्रतीतिरिति** । 'शेषे विभाषा' इति विकल्पेन नियमाप्रवृत्तिपक्षे 'कर्तृकर्मणोः कृति' इत्युभयत्र षष्ठ्याम् 'कर्मणि च' इति निषेधाप्रवृत्त्या समास इति भावः । अधिर्वोढृसमुच्चायकः । वृद्धिसूत्रस्थभाष्यमप्यत्र मानमित्युक्तप्रायम् । एवमस्य कैयटाद्युक्तपदकार्यविषयकत्वं समर्थ्य, 'अभिव्यक्त—' इति परिभाषान्तरमिति भ्रमं निरसितुं तत्राप्येवमेवेत्याह— **एवमिति** । उक्तन्यायवदित्यर्थः । **एतन्मूलक इति** । अनेन तस्यान्यत्वं निरस्तम् । **श्लोकोऽपीति** । अनेन तस्य कल्पितत्वं सूचितम् । एतत् सिद्धेऽर्थे मानान्तरमप्याह— **ध्वनितमिति** । ध्वनितमपी-

वार्त्तिककृता, 'पूर्वपर—' इति सूत्रे 'असंज्ञायाम्' इति वदता सूत्रकृता, अन्वर्थसंज्ञया तत्प्रत्याख्यानं कुर्वता भाष्यकृता च । 'अर्थाश्रय एतदेवं भवति, शब्दाश्रये च वृद्ध्यात्त्वे' इति ओत्सूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायः, तद्रहितशब्दाश्रये च ते इत्यर्थः, 'गोतः' इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैव तस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥ १९ ॥

'अर्थवद्ग्रहणे—' इत्यस्यापवादमाह—

## अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ २० ॥

'येन विधि—' इत्यत्र भाष्ये वचनरूपेण पठितैषा । तेन राज्ञा साम्ने-

---

(१९) । इदम् अस्य पदकार्यविषयकत्वम् । 'सर्वादीनीति सूत्रे' इति पाठः । 'पूर्वपरेति' इति पाठः । तत्प्रत्याख्यानमिति । सर्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञया तद्गुणप्रत्याख्यानमित्यर्थः, अत एव सूत्रवार्त्तिककृतोर्यथासौ ..., अन्यथा तस्यैव प्रत्याख्यानमिति भ्रमः स्यादिति भावः । कृता चेति । अन्यथा गुणयोगेन लाक्षणिकत्वरूपगौणत्वाभावेऽपि तन्मूलत्वेन प्रसिद्धशब्दिकशास्त्रे ग्रहणेन सर्वादिरूपसंज्ञाया अतथात्वेनानेनैव वारणे त्रितयासंगतिः स्पष्टैवेति भावः । नन्वेवमप्यत्सूत्रस्थभाष्यासंगतिरत आह— अर्थेति । वस्तुतो लौकिकार्थवत्त्वस्य वाक्ये एव सत्त्वादाह— योग्येति । अर्थपदस्य लक्षणेति भावः । एतदेवमित्यस्यार्थमाह— एष न्याय इति । तद्रहितेति । लौकिकार्थवत्त्वयोग्यपदत्वरहितेत्यर्थः, मुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपाश्रय इति यावत्, वस्तुतः पदव्यपदेशरहितस्य तत्र निमित्तत्वेनाश्रयणमिति भावः । ते वृद्ध्यात्त्वे । ननु शब्दाश्रये चेत्यस्य अर्थरहितवर्णमात्राश्रये इति प्रतीयमानार्थं कुतो नेयत आह— गोत इति । यथाश्रुतेति । तपरकरणविवक्षायामसत्त्वामिति भावः । युक्तं चैतत्, अस्यैव मतस्य सिद्धान्तत्वादिति बोध्यम् । व्याख्येयत्वादिति । यत्तु— सर्वनामस्थानाम्शसाक्षिप्तप्रातिपदिकस्य ओत इत्यनेन विशेषणात्तदन्तविधिः विशिष्टशब्दाश्रयत्वात्तथा भाष्याशयो न युक्त इति, तन्न, स्वार्थादिप्रयुक्तकार्येण पूर्णस्य पदस्यार्थप्रतिपादनात् प्रयोगार्हस्य पदार्थान्तरान्वये बाधप्रतिसंधाने गौणार्थत्वप्रतीतेः आक्षेपे आक्षिप्तस्य वा शाब्दे अन्वये मानाभावाच्चेति दिक्, तदाह— इत्यलमिति ॥ १९ ॥

त्यादावल्लोपः, दण्डी वाग्मीत्यादौ 'इन्हन्—' इति नियमः, सुपथाः सुस्रोता इत्यादौ 'अत्वसन्तस्य—' इति दीर्घः, सुशर्मा सुप्रथिमेत्यादौ 'मनः' इति ङीब्निषेधश्च सिद्धः । अन्ये तु परिवेविषीध्वमित्यत्र ढत्वव्यावृत्तये क्रियमाणात् 'इणः षीध्वम्—' इत्यत्राङ्गग्रहणादर्थवत्परिभाषा अनित्या; तन्मूलेयमित्याहुः। 'विभाषेटः' इत्यत्रानर्थकस्यैव षीध्वमः संभवात्तत्रापि तस्यैव ग्रहणमिति भ्रमवारणायाङ्गादिनीत्यपरे ॥ १६ ॥

ननु 'उश्च' इत्यत्र 'लिङ्सिचावात्मनेपदेषु' इत्यत आत्मनेपदेष्वित्येव संबध्यताम्, अनन्तरत्वादित्यत आह—

---

ननु 'अनिनस्मन्—' इत्यस्यार्थवत्परिभाषापवादत्वेन तदुक्त्या, 'गौणमुख्ययोः—' इति वक्तुमुचितमिति कथं पूर्वमुक्तम्; तथा मूलमप्येवं वक्तव्यं नोक्तमिति चेत्, न; 'अर्थवद्ग्रहणे—' इति परिभाषायामर्थस्य मुख्यस्य प्रधानन्यायेन ग्रहणेनास्य न्यायस्य सिद्धत्वेनानतिरिक्तत्वात् । इदमेव सूचयितुम् 'एवमपि' इत्यपिशब्दघटितमुक्तं पूर्वपक्षे; तेन हि अर्थप्रसङ्गात्तत्रैव पूर्वमाकाङ्क्षोदयः सूचितः । अस्या भिन्नत्वे तु 'नन्वेवम्' इत्येव वदेत् । तथा चैतदुक्तिं विना तदर्थानिश्चय इति अपवादो दुर्वच इति तदर्थमेतदुक्तिः, तदेतद् ध्वनयन्नाह— **अर्थवदिति** । अपवादमित्यनेन संगतिः सूचिता । अर्थवतेत्यादि तृतीयान्तं विशेषणेनेत्यर्थकस्य सामान्येनेत्यस्य विशेषणम्; तत् ध्वनयन्नाह— **येनेति** । **वचनेति** । वार्तिकेत्यर्थः । अनेनापूर्वत्वमस्या सूचितम् । अल्लोप इत्यादिप्रथमान्तानां सिद्ध इत्यत्रान्वयः । अल्लोप इत्यस्य 'अल्लोपोऽन इति' इत्यादिः । **नियम इति** । तथा च 'सौ च' इति दीर्घासिद्धिरिति भावः । **सुस्रोता इति** । 'अनागमकानां सागमकाः' इति पक्षे अनर्थकत्वं स्पष्टमेव । पक्षान्तरेऽपि आगमसंनिधौ तद्विशिष्टस्यैवार्थवत्ताया न्याय्यत्वेन भाष्ये उक्तत्वेन च तत्त्वम् । एतेन अर्थवतो ह्यागम इति पक्षे अयमर्थवानेवेति चिन्त्यमिदमुदाहरणमिति तत्रत्यकैयटोक्तिरपास्तेति स्पष्टमुद्द्योते । खण्डयितुं मतान्तरमाह— **अन्ये त्विति** । प्राञ्च इत्यर्थः । **वेवीति** । वेवीधातोराशीर्लिङि रूपम् । **ढत्वेति** । षीध्वन्निमित्तकेत्यादिः । **तन्मूलेति** । तदनित्यत्वमूलेत्यर्थः । आद्यन्ताभ्याम् 'अन्ये तु आहुः' इत्याभ्यां सूचितामरुचिमाह— **विभाषेट इति** । आगमसंनिधौ तद्विशिष्टस्यैवार्थवत्त्वादिति भावः । **अत्रापि** 'इणः षीध्वम्—' इति प्रागुक्ततत्पूर्वसूत्रेऽपि । **तस्यैव** अनर्थकस्यैव, अर्थाविवक्षणानुरोधात् । एवं चापूर्वत्वमेताभ्यामिति सिद्धम् ॥ १६ ॥

## एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥ १७॥

वाशब्द एवार्थे। परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्ती इत्यर्थः, एककार्यनियुक्तानां बहूना लोके तथैव दर्शनादिति भावः। यत्तु— अत्र च ज्ञापकम्— 'नेड्वशि—' इत्यत इडित्यनुवर्तमाने 'आर्धधातुकस्येट्—' इत्यत्र पुनरिड्ग्रहणम्; तद्धि नेत्यस्यासंबन्धार्थमिति, तन्न, 'दीधीवेवीटाम्' इति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानाय इड्ग्रहणे अनुवर्तमाने पुनरिड्ग्रहणस्य इटो गुणरूपविकाराभावार्थत्वस्योक्तत्वेन तद्विरोधात्। नञो निवृत्तिस्तु 'क्वचिदेकदेशोऽप्यनुवर्तते' इति न्यायेन सिद्धा। वस्तुतस्तु 'दीधीवेवीटाम्' इति सूत्रस्थभाष्यमेकदेश्युक्ति, 'आर्धधातुकस्य—' इति सूत्रस्थेड्ग्रहणस्य 'नेड्वशि—' इति सूत्रे भाष्ये प्रत्याख्यानात् तत्करणेन गुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात्॥ १७॥

---

नन्वर्थवत्परिभाषानुरोधात् 'विभाषेट्' इत्यत्र पीध्वमोऽसंबन्ध एवेत्यङ्ग्रहणं ज्ञापकमेवेति चेन्न, एकयोगनिर्दिष्टन्यायेन परेण तत्संबन्धस्यावश्यकत्वात्। अत एव तामथ तन्नीत्तामवतारयति— **ननु उभयेत्यत्रेति**। **अनन्तरत्वादिति**। तत्परत्वेन व्यवहितत्वादित्यर्थः। विकल्पान्वयासंभवादाह— **वाशब्द इति**। 'वा स्याद्विकल्पोपमयोरेवार्थे' इति कोशादिति भावः। वा एवार्थे इति पाठान्तरम्। एकयोगेत्यस्य पदस्यार्थमाह— **परेति**। एतेन एकसंबन्धनिर्दिष्टानामिति शाब्दतदर्थः सूचितः। यद्यपि तत्त्वमेकसूत्रनिर्दिष्टानामेव फलति, तथापि तथा न व्याख्यातम्, एकसूत्रनिर्दिष्टानामपि अनन्वितानां सहानुवृत्त्यापत्तेः। **सहैवेति**। न त्वेकस्य निवृत्तिरपरस्यानुवृत्तिरिति भावः। अस्य लोकन्यायसिद्धत्वमाह— **एकेति**। एतेन 'हन सिच्' इति सिज्ग्रहणमत्र ज्ञापकम्, अन्यथा 'लिङ्सिचौ—' इत्यतः सिजनुवृत्त्यैव सिद्धेः किं तेनेति शीरदेवाद्युक्तमपास्तम्। भ्रान्तोक्तिं खण्डयति— **यत्त्विति**। अत्र परिभाषायाम्। तत्त्वमुपपादयति— **तद्धीति**। पुनरिड्ग्रहणं हीत्यर्थः। **तत्रत्येडिति**। 'दीधीवेवीटाम्' इति सूत्रस्थेत्यर्थः। विकारान्तरस्येष्टत्वादाह— **गुणरूपेति**। ननु नेत्यस्य निवृत्त्यर्थं तत्। स्पष्टं चेदम् 'नेड्वशि—' इत्यत्र भाष्य इति कथमुक्तार्थकत्वं तस्यात आह— **नञ इति**। न्यायेन वक्ष्यमाणेन। भ्रान्तोक्ते सर्वथा अप्रामाण्यप्रदर्शनाय सिद्धान्तमाह— **वस्तुतस्त्विति**। प्रत्याख्याना-

नन्वलुगधिकार प्रागानड, उत्तरपदाधिकार प्रागङ्गाधिकारादित्यनुपपन्नम्, एकयोगनिर्दिष्टत्वात्। तथा 'दामहायनान्ताच्च' इत्यादो 'संख्याव्ययादे—' इत्यत सङ्ख्यादेरित्यनुवर्तते, अव्ययादेरिति निवृत्तमिति चानुपपन्नमत आह—

## एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते ॥ १८ ॥

एकत्रार्थे योग सबन्ध ; तेन निर्दिष्टयो समुदायाभिधायिद्वन्द्वनिर्दिष्ट-

---

**दिति।** नञो निवृत्तेरुत्तरीत्यैव सिद्धत्वात्, एव च भ्रान्तस्य भाष्यविरोध स्पष्ट एवेति भाव। तत्करणेन तत्तद्ग्रहणेन। **गुरुयत्नमिति।** नियमरूपमित्यर्थ। **एतदिति।** 'दीधी—' इति सूत्रस्थेद्ग्रहणेनत्यर्थ ॥ १७ ॥

**नन्विति।** अस्य 'एवम्' इति शेष। उक्तपरिभाषाङ्गीकार इति तदर्थ। तथा च सगति स्पष्टा। **तथा** एकयोगनिर्दिष्टत्वरूपहेतुनेत्यर्थ। 'एकयोगे—' इत्यनुवृत्तिलाभम्। अविहतार्थसमुदायक। तथा च विरोधाधिकत्रामयम, किं तु क्वचित्तथा क्वचिदेव लक्ष्यानुरोधादिति फलितम्, तदाह— **क्वचिदेकदेशोऽप्यनुवर्तत इति।** नन्वकसूत्रनिर्दिष्टानामेकदेशानुवृत्तिदृश्यते, यथा 'अत इञ्' इत्यादावित्पदमात्रस्येति समासनिर्दिष्टानामित्येव तदथ इत समासनिर्देश एवानयो प्रवृत्ति, न व्यस्ते इति प्रागुक्त वस्तोदाहरणासगतिरिति ध्वनयन्मतान्तरमाह— **एकत्रार्थे इति।** **इत्यर्थ इति।** 'यथ पुनरन्ययोगनिर्दिष्टयोरेकदेशोऽनुवर्तते एकदेशो नेति पक्षान्तरति सूत्रस्यपूर्वपक्षभाष्यस्य' इति शेष, तथा च समाधानपरपरिभाषाप्युक्ताशयेति तद्भाव। **कैयट इति।** अनेनाशयाच सूचिता, तद्बीज तु— 'औतोऽम्शसो' इति सूत्रस्थभाष्यासगतिस्तथा सति स्यात्। तत्र हि 'वा सुपि—' इत्यत सुपोऽनुवृत्तिर्वानुवृत्तिरत्त न्यायेनाशक्येत्याशङ्क्य 'अलुगुत्तरपदे' इति दृष्टान्तेन अनेन न्यायेन तत्साधितमिति प्रागुक्तार्थ एव युक्तो नायमिति। वस्तुतस्तु प्रकृताशयेन तथोक्त कैयटेनेति न समाधानपरपरिभाषायास्तथार्थस्तदभिप्रेत, उक्त भाष्यविरोधात्। समासेऽपि तथानुवृत्तौ, किमु वाच्यमसमासे सेति तद्भाष्याशय। एव च परिभाषयोरुभयत्र प्रवृत्ति, वचन विनोक्तार्थस्य दुरयत्वात्। एव च स कैयटो युक्त एव। एकसूत्रनिर्दिष्टानामात सर्वथा नार्थ इति सूचनार्थ परमत्र तस्योल्लेख। तस्मादुक्तोऽर्थ एवाते सधत्र तथा शङ्कायामनया समाधानमिति तत्त्वम्। एतदत्र ध्वनायतुम् उभयानर्देश तथानुवृत्तौ

योरित्यर्थ इति 'पक्षात्ति' इति सूत्रे कैयट । तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबललभ्यमिदम् । स्पष्टाचेयं 'दामहायनान्ताच' इति सूत्रे 'औतोऽम्शसो' इति सूत्रे च भाष्ये पूर्वा च ॥ १८ ॥

ननु 'त्यदादीनाम' इत्यादिना इमित्याद्यवनुनासिक स्यादत आह—

**भाव्यमानेन सवर्णानां ग्रहणं न ॥ १९ ॥**

अणुदित्सूत्रे 'अप्रत्यय इत्यनेन सामर्थ्यात्सूत्रेण प्राप्तम्, जातिपक्षेण

---

बीज तुल्यमिति सूचयितु चात्र बीजमाह — **तावदिति** । मात्रश दोऽवधारणे । इदम् उभयत्रेष्टसाधक वचनम् । अय भाव — अर्थाधिकारपक्षे अर्थस्यैकत्वादविच्छेदान सादेरदेशानुवृत्तिरित्येतत्पक्षाश्रयकपूर्वपरिभाषया पूर्वपक्ष । शब्दाधिकारे तु यस्यैव शब्दस्य स्वरितत्वप्रतिज्ञा, तत्सदृशाशब्दान्तरप्रतीतिर्योगान्तरे । साधि भिन्नप्रतिज्ञासामर्थ्यात् भिन्नाधिकापि क्वचिदित्येतत्पक्षाश्रयकोऽस्य समाधिरूपो न्याय । तथा च भिन्नप्रतिज्ञायत्वाद्विभावधिकत्वम्, एकदेशे तद्बलात्तन्मात्रानुवृत्ति, विशिष्टे तद्बलात्समानाधिकृतदनुवृत्तिरिति परिभाषयोर्द्वयार्थ फलित इति । एतेन 'तस्मादित्युत्तरस्य' इति इतिग्रहणमत्र ज्ञापकम्, अन्यथा निर्दिष्टपदकृतदनुवृत्त्या सिद्धमिति सीरदेवोक्तम्, 'इको गुण—' इत्यत्र गुणवृद्धिग्रहण तथा, अन्यथा सपूर्णसूत्रद्वयानुवृत्त्या सिद्धमिति भ्रान्तोक्त परास्तम् । **सूत्रे चेति** । येन 'पक्षात्ति' इत्यादिसूत्रसंग्रह । ननु पूर्वा कुत स्पष्टा? अत आह— **पूर्वा चेति** । उक्तसूत्रत्रयादावित्ति भाव । तेषु हि तथा पूर्वपक्षं कृत्वा अनया समाहितम् ॥ १८ ॥

ननु 'आर्धधातुकस्य—' इति सूत्रे इड्ग्रहणस्य गुणरूपानिरासाभावार्थत्वस्यसवर्णग्रहण प्राप्तदीर्घाभावार्थत्वमपि कुतो नोक्त तत्र भाष्ये? एव च प्रत्याख्यानमप्यसंगतमिति चेत्, न; 'भाव्यमानेन—' इति निषेधात् । तद्ध्वनयन् तामत्र तत्रत्यस्मवतारयति— **ननु त्यदेति** । **अनुनासिक इति** । ग्रहणकसूत्रादिना तस्य ग्रहण 'स्थानेऽन्तरतम' इत्यनेनेति भाव । नेयमपूर्वा, किं तु सूत्रार्थसिद्धेत्याह— **अणुदिति** । अप्रत्यय इत्यत्र नञन्वय । ननु प्रत्यये निषेधेऽपि आदेशादौ कथ निषेध? अत आह— **सामर्थ्यादिति** । तस्य सानुपदमेव स्फुटीभविष्यति । ननु केन प्राप्त तन्निषिध्यत इति चेत्, तत्राह्री व्याख्यापक्ष आह— **सूत्रेणेति** । जातिपक्षे आह— **जातीति** । व्यक्तिपक्ष एव अननुगापादकत्वात्—

## भाव्यमानोऽप्युकारः सवर्णान्गृह्णाति ॥ २० ॥

'दिव उत्' 'ऋत उत्' इति तपरकरणमस्या ज्ञापकम् । 'तित्स्वरितम्' इति सूत्रे भाष्ये स्पष्टेयम् ॥ २० ॥

ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेन अवाद्यादेशापत्तिरत आह—

## वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

वर्णप्राधान्यविषयमेतत् । तत्त्वं च 'प्रत्ययलोपे—' इति सूत्रे स्थानि-

---

द्वारद्वन्द्वनिर्देश इति तु न युक्तमित्यन्यत्र स्पष्टमिति भावः । **दिव उदिति** । 'तत्स्वरितम्' इत्यत्र एतस्यैतज्ज्ञापकत्वोक्तिपरभाष्यविरोधात् 'एतत्तपरकरणसामर्थ्यादेव द्युभ्यामित्यादौ भाविदीर्घव्यावृत्तिः' इति सम्प्रसारणसूत्रस्थकैयटोक्तिश्चिन्त्या एवेति गुरुकृतम् । ज्ञापिते चारितार्थ्ये तु द्युभ्यामित्यादौ 'ढ्रलोपे—' इति पूर्वमुपस्थितमपि तस्य ह्रस्वप्रवृत्त्या बोध्यम् । ननु 'ढ्रलोपे —' इत्यत्र किदिकतोरित्यनुवृत्तिपक्षे तत्र उदेव दुर्लभोऽत आह— **ऋत उदिति** । इह स्थान्तरतम्यात् ऋकाराकारयोः स्थाने प्राप्तदीर्घनिवृत्त्यर्थमिति चारितार्थ्यमिति भावः । भाष्येऽपि क्वचिदेवमेव पाठो दृष्ट इति गुरुकृतम् । **तित्स्वरितमिति** । तत्र हि 'तिति प्रत्ययग्रहणम्' इत्यस्य दकारेण प्रत्याख्याने, सवर्णग्रहणात् 'ऋत इद्धातोः' इत्यादौ प्राप्तदोषवारणाय उक्तपरिभाषाश्रयणे 'अदसोऽसेः—' इत्यत्र दोषमाशङ्क्य, अनया तज्ज्ञापनया समाहितम् । एतेन पूर्वत्र 'भाव्यमानोऽण्' इति पाठे व्याख्याय, 'दिव उत्' इति तपरकरणात्तस्यानित्यत्वं च स्वीकृत्य, अमू इत्यादौ न दोष इति सीरदेवोक्तमपास्तम्, भाष्यविरोधात् ॥ २० ॥

वर्णप्रसङ्गात् 'वर्णाश्रये—' इति परिभाषामवतारयति— **नन्विति** । द्विवचनबहुवचनान्तेन समासे तेन तदप्राप्तेराह— **गवे हितमिति** । दृष्टान्तार्थमिदमिति कश्चित् । आदिभ्यां रैकुलमित्यादावायादिसंग्रहः । **वर्णाश्रय इति** । 'विधौ कार्ये' इति शेषः । तथा च बहुव्रीहिरत्र बोध्यः । नन्वेवमतृणेडित्यादौ इमादि न स्यादत आह— **वर्णेति** । वर्णप्राधान्याश्रयकविधिप्रवृत्तिविषयमिदं वचनमित्यर्थः । ननु तादृशवचने किं मूलमत आह— **तत्त्वं चेति** । वर्णप्राधान्याश्रयकविधौ अप्रत्ययलक्षणत्वं चेत्यर्थः । द्वितीयप्रत्ययग्रहणादयमर्थो लभ्यते, तल्लक्षणमितीयं स्फुटमिति सीरदेवादयः ।

चद्दित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्य इतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत्सिद्धम् । वर्णप्राधान्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितविशेष्यतारूपं च । तेन गोहितमित्यादावनादि न; चित्रायां जाता चित्रेत्यादावण् योऽकारस्तदन्तात् ङीबिति ङीप् न न । इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तस्य प्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥ २१ ॥

ननु 'अन. कृकमि—' इत्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थमत आह—

## उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

---

साम्यसूचनायाह— स्थानीति । यत्र विधौ । तत्रैव कर्तव्ये । प्रवृत्त्यर्थम् 'प्रत्ययलोपे—' इति सूत्रस्य । इत्येतत्सिद्धम् इत्येतेन सिद्धमित्यर्थः । एतेन अवर्णात निर्देशोऽत्र ज्ञापक इति शीरदेवाद्युक्तमपास्तम् । ननु प्रत्ययप्राधान्यवत् वर्णप्राधान्याङ्गीकारे गोहितमित्यादिसिद्धावपि चित्रेत्यादौ ङीबापत्तेः, अकारस्य प्रातिपदिकविशेषणत्वादत आह— वर्णेति । चस्त्वर्थं । प्रत्ययेति । प्रत्ययनिष्ठनकारतानिरूपितेत्यर्थः । क्रमेणान्वयः फलमाह— तेनेत्यादि 'चित्रा—' इति वार्तिकेन 'सन्धिवेला—' इत्यणो लुकि सोप्रत्ययलुकि टाप् । अण् योऽकार इति । अनेन द्वितीयप्रकारसत्ता सूचिता । तदन्तादिति । अनेनाद्यस्यासत्त्वं सूचितम् । ङीप्च नेति । नः स्पष्टार्थः । क्वाचत्कपाठोऽपि । ननु भाष्यमते 'प्रत्ययलोपे—' इत्यस्य नियमार्थत्वेन वर्णाश्रये प्रवृत्तेरेव नेतीयं व्यर्थेत आह— इयमिति । अल्विधौ यथा कथंचिदल्विधौ । विधेरिति । तथा च अल्विधौ त्रिस्थयं तत्सूत्रमिति शास्तकमतेनेयम्, न भाष्यमतेनेति भावः ॥ भाष्ये तत्सूत्रस्य ॥ २१ ॥

सिद्धे धातौ सप्तमीनिर्दिष्टे तदादिग्रहणात् अयस्कन इति सिद्धे । उणादयः तदन्तानि, तदन्तत्वेनाभिमतानि वा । अव्युत्पन्नानीति । अस्य आद्ये गुणान्तकार्या-

इदमेवास्या ज्ञापकमिति कैयटादयः । कंसस्तु न कंसः, अनभिधानात् । 'प्रत्ययस्य लुक्—' इत्यादौ भाष्ये स्पष्टैषा । 'ण्वुल्तृचौ' इत्यादौ भाष्ये व्युत्पन्नानीत्यपि । इदं शाकटायनादिरीत्या । पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम् । 'आयनेयी—' इति सूत्रे भाष्ये स्फुटमेतत् ॥ २२ ॥

ननु देवदत्तश्चिकीर्षतीत्यादौ देवाङ सन्नन्तत्वप्रयुक्तधातुत्वाद्यापत्तिरत आह—

## प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ २३ ॥

---

भावयन्तीत्यर्थः, अन्ये तु यथाश्रुत एव । **इदमेवेति** । वासग्रहणमेवेत्यर्थः । एतेन अर्थवत्सूत्रं ज्ञापकमिति सीरदेवाद्युक्तिनिरासः, बहुपटव इत्यादावर्थं तस्यावश्यकत्वेन चारितार्थ्यात् । आदिना सीरदेवादिग्रहणम् । ननु नेदमपि ज्ञापकम्, कम्राच क्स इति सिद्धेरत आह— **कसेस्त्वियति** । न कंसः न कस इति शब्दः । अत एव 'कसे ॥ यस' इत्येव तत्र भाष्ये उक्तम् । ननु कुत्रेयमुक्ता? अत आह— **प्रत्ययस्येति** । 'प्रत्ययस्य लुक्श्लुलुपः' इत्यादावित्यर्थः । आदिना 'आयनेयी—' इति सूत्रपरिग्रहः । 'युष्मेरनाकाविरपादौ' इति वपपाठ । तत्र हि प्रत्ययग्रहणाभावे 'कस्तीयपरश यथोश' इति सूत्रे च्यवतेरिति प्रशंतनिवृत्त्यर्थमनदत शाब्दम् । अन्यथा कृतेऽपि प्रत्ययग्रहणे मस्य ओश्च लोपापत्तिरिति दोषोऽनया वारित । **ण्वुलिति** । तत्र हि तृचश्चकाराभावे मात्रादिशब्दे दोषोपादन कृत्वा तत्समर्थन कृतम् । नाय सिद्धान्त इत्याह— **इदमिति** । व्युत्पन्नानीत्युक्तमित्यर्थः । आदिना नरक्तादिग्रह । सिद्धान्तमाह—**पाणिनेस्त्विति** । **शब्देन्दुशेखरे** उणादय इत्यत्र । उणादय इति व्याकरणान्तरस्थसूत्रव्यवस्थापकम् । उणाद्यन्ता येन व्याकरणान्तरेण व्युत्पादिता शब्दास्तत्र बहुलमिति वक्तव्यम् । वर्तमानाधिकारे च ते वाच्या । भूतेऽपीति च वाच्यमिति सूत्रार्थः । स्वशास्त्रे तेषा साधुत्वबोधन चैतावतैव कृतम् । तथा च पचुषं यादौ पत्र तु बहुलग्रहणादित्यादि तत्रैव स्पष्टम् । इद समूलयति— **आयनेयीति** । तत्र हि शण्ठ कण्ठ इत्यादौ दोषवारणाय 'प्रातिपदिकविज्ञानाच्च भगवत पाणिने सिद्धम्' इत्युक्तम् । एतत् अव्युत्पत्तिपक्ष एवेत्येतत् । एतेन तदन्यपक्षच्छेद । विस्तरस्तत्र एव बोध्य ॥ २२ ॥

स्यादौ धातुतकारस्य न नत्वम् । तदन्तत्वांशानुपस्थितावपि तदादीत्यंशस्योपस्थितौ रेफदान्तात्परस्य निष्ठातस्येत्यर्थः, तदंशानुपस्थितौ मानाभावात् । तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति दृषच्चीर्णेत्यादौ दोषः स्यादेव । 'स्यतासी लृलुटो.' इत्यादौ लृलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेन उपस्थितधातोरित्यस्यैवावधित्वेन अन्वयान्न तदन्तविधिः । 'हल्ङ्याब्भ्यः—' इत्यादौ न दोषः, तत्र कस्मादिति नियमावध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य

---

युक्तमिति ध्वनयितुम् एव यत्रापीन्यस्य लक्ष्यान्तरं सूचयितुं च सूत्रार्थमाह— **तदन्तत्वांशेति** । तदन्तस्येत्यंशेत्यर्थः । सौत्रक्रमानुरोधेनाह— **रेफदान्तादिति** । ननु तदभावे तस्याप्यनुपस्थितिः, सन्नियोगशिष्टेति न्यायादत आह— **तदंशेति** । तदादेरित्यन्तांशेत्यर्थः, 'गुणानाम्—' इति न्यायादसन्नियोगशिष्टत्वाच्च तत्प्रवृत्तेः । अत एव प्रागेतद्व्यवस्थैवेत्युक्तम् । तदभावे तदुपस्थितेः फलमप्यसाधारणमुक्तम् । एतत्परिभाषाया अभावे दोषमुपपादयति— **तदन्तांशोपेति** । अर्थं प्राग्वत् । रदाभ्यां परो यः, तदादिर्निष्ठान्तस्तस्य तकारस्य तत्पूर्वदस्य च नत्वमित्यर्थस्तथा सति स्यात्; तदाह— **उभयोरिति** । अनयोरित्यर्थः । **एकेति** । यत्र तदन्तत्वं तेनैव तदादित्वमित्यर्थः, दृषच्चीर्णेत्यादिलक्ष्यसम्भवात् । असंभवे खलु तयोर्भिन्नविषयत्वाङ्गीकारः । अत एव एव प्रयुक्तः । तेन च केवले अप्रवृत्तिर्ध्वनिता । तथा च धातुतस्य तत्पूर्वदस्य च नत्वापत्तिस्तदवस्थैव; तदाह— **दृषदिति** । नन्वेवमपि 'स्यतासी—' इत्यादौ अस्या अप्राप्त्या लृलुडन्ते तदादौ इत्यर्थापत्तिः; नहि पञ्चम्यन्तापरत्वेन लृडादिप्रत्ययस्तत्र विशेषितः । धातोरिति [illegible] स्यतासिविशेषणमत आह— **स्यसेति** । आदिना 'सुपि च' 'रो. सुपि' इत्यादिपरिग्रहः । **परयोरित्यर्थ इति** । 'तस्मिन्—' इति परिभाषयेति भावः । **अवधीति** । 'कस्मादिति' इत्यादिः; तस्य दिक्शब्दत्वादिति भावः । स्यतासिविधानाय तस्याधिकृतत्वादाह— **उपस्थितेति** । एवं च तस्य स्यतासिविशेषणत्वेऽप्यतापि अर्थत आवृत्त्या शब्दतो वा तत्त्वेनान्वय इति पञ्चम्यन्तस्य तद्विशेषणत्वेन निषेधप्रवृत्तिरिति भावः । एवम् 'सुपि च' इत्यादावप्यन्यार्थमुपस्थिताङ्गादेरेव तत्त्व बोध्यम्; तदाह— **न तदन्तेति** । उक्तवार्तिकव्याख्यावसरे 'एतेत्यादौ धातोरित्यधिकारान्निषेधोऽस्य सूत्रच.' इति कैयटोक्तप्रकारस्तु चिन्त्यः, स्यतासिविशेषणत्वादिति स्पष्टमुद्द्योते । नन्वेवं ङ्यावृत्त्या प्रातिपदिकाक्षेपे पञ्चम्यन्तस्य प्रत्ययविशेषणत्वेन निषेधात् ङ्यन्तादाबन्तादित्यर्थलाभानापत्तिरत आह— **ङ्याब्भ्य इत्यादौ त्विति** । ङ्याद्यंशे इत्यर्थः । सुतिस्यन्दशे तु निषेधप्रवृत्तिरस्त्येवेति भावः । तत्र ङ्यावंशे ।

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्यापुत्र इत्यत्रापि 'ष्यङः संप्रसारणं पुत्रपत्योः—' इति स्यादत आह—

## स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥

स्त्रीप्रत्यय इति विषयसप्तमी । यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाह, तत्र तदादिनियमो न; यस्त्वप्राधान्येनाह, तत्र तदादिनियमोऽस्त्येवेत्यर्थः । प्रत्यासत्त्या यस्य स्त्रीप्रत्ययान्तत्वमानेयम्, तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम्; तेन अतिराजकुमारिरित्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थं प्रत्युपसर्जनत्वेऽपि तदर्थं प्रत्यनुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः ।

---

अत्रेदं बोध्यम्— उत्तरपदाधिकारे प्रत्यासत्त्या निमित्तभूतप्रत्ययस्यैव विशेष्यत्वेन तत्तद्रूपेण ग्रहणं तदन्तग्रहणं नेत्यर्थः, ज्ञापकस्य सजातीयापेक्षत्वात् । अतोऽपि प्रयोगः । एवं च 'ह्योऽनेकाच' 'ह्रस्वोऽङ्यो गालवस्य' 'ङ्यापोः संज्ञा' 'खित्यनव्ययस्य' 'रात्रेः कृति' 'अश्वतावप्रत्यये' 'तनिपु वर्षे' इत्यादौ न दोषः । 'उपसर्गस्य घञि—' इत्यत्र सामर्थ्यात्तदन्तविधिर्बोध्यः । एवम् 'एक तद्धिते च' इत्यत्र चकारकरणसामर्थ्येन उत्तरपदस्य पृथङ्निमित्ततया विशेष्यत्वाभावेन तदन्तविध्यभावो बोध्यः ॥ २० ॥

एवमिति । भवतीति शेषः । यद्वा उक्तस्थले एव तदन्तान्यभावनिषेधाद्दीकार इत्यर्थः । दृष्टान्तेनेदं सूचितम्—यदि तदादिनियमः, तर्हि मुख्येऽपि न स्यात्; अथ स न तत्सूत्रबोधात्, तर्हि गौणेऽपि स्यादिति । नन्वनुपसर्जनस्त्रीप्रत्ययग्रहणे इत्यर्थो ग्रहणपदानुवृत्त्यावश्यं वक्ष्यमाणः प्रतीयते । स चायुक्तः, उभयभेदेनैकस्यैव सूत्रे एतत्प्रवृत्त्यप्रवृत्त्योरिष्टत्वादत आह— विषयेति । तथा च तद्विषयके शास्त्रे स न, तदविषयके तु तत्रैव सोऽस्त्येवेत्यर्थः । तत्फलितमाह— य इति । तत्र तद्विषयके । एवमग्रेऽपि । तदन्तागमस्य तन्तेर्दत्वादाह— तदादिनियम इति । तदादिमात्रग्राहकपरिभाषेत्यर्थः । एवमग्रेऽपि । यस्त्विति । अनेनाविशेषस्वरं इति सूचितम् । अतिप्रसङ्गनिरासायाह— प्रत्येति । तदर्थं तत्समुदायार्थम् । एवमग्रेऽपि । अनेन तदन्ताधावेदं स्फुटमेवोक्तम् । एवं च विपर्यस्तौ स्त्रीप्रत्ययाद्यन्यतरांशापेक्षेऽन्यस्याभावो नेति

पदसंज्ञायामपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणसंभवात् ज्ञापितेऽपि फलाभाव इति वाच्यम्, पदसंज्ञाया 'स्वादिषु—' इति विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात् । 'सुप्तिङन्तम्—' इति सूत्रे भाष्ये स्पष्टा ॥ २७ ॥

नन्वेवम् अवतप्तेनकुलस्थितमित्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यादत आह—

## कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥

अस्याश्च कर्मणि क्तान्ते उत्तरपदे अनन्तरो गतिः प्रकृतिस्वर इत्यर्थके 'गतिरनन्तर' इति सूत्रे अनन्तरग्रहणं ज्ञापकम् । तद्धि अभ्युद्धृतमित्यादावतिव्याप्तिवारणार्थम् । प्रत्ययग्रहणपरिभाषया उद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद्व्यर्थं सदस्या ज्ञापकम् । न चाभ्युद्धृतमित्यादौ परत्वात् 'गतिर्गतौ' इत्यनेन अभेर्निघात एवेति वाच्यम्, पादादिस्थत्वे पदात्परत्वाभावे च तदप्राप्तेः । अनन्तरग्रहणे कृते तु तत्सामर्थ्यादाक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यत इति न दोषः । न चाभ्युद्धृतमित्या-

---

ज्ञापितेऽपि 'तत्र तदन्तविध्यभावे' इत्यादि । फलाभाव इति । चरिताभ्याभाव इत्यर्थः । तथा च ज्ञापकत्वासङ्गतिरिति भावः । स्पष्टेति । अस्य 'इयम्' इति शेषः ॥२७॥

नन्विति । अस्य 'एवमपि' इति शेषः । क्तान्तत्वाभावादिति । 'प्रत्ययग्रहणे—' इति परिभाषयेति भावः । अस्याश्चेति । अस्य ज्ञापकमित्यत्रान्वयः । कर्मणीति । कर्मणि यः क्तस्तदन्ते इत्यर्थः । तत्त्वमुपपादयति— तद्धीति । अनन्तरग्रहणं हीत्यर्थः । वारणार्थमिति । अस्य 'क्रियते' इति शेषः । उद्धृतस्य तच्छब्दस्य । अप्राप्तौ अभिस्वराप्राप्तौ । ज्ञापकत्वं विघटयति— न चेति । एतेन 'गतिरनन्तर' इत्यस्य व्यवच्छेद्य तथा च चरितार्थत्वाभावाद् ज्ञापकत्वमिति भावः । तत्त्वे मानाभावादाह— पदादिरिति । नन्वनन्तरग्रहणेऽप्यसौ दुर्वारः, एतत्परिभाषयोद्धृतस्य क्तान्तत्वेऽभेस्तदानन्तर्यस्य सत्त्वादत आह— अनन्तरेति । तत्सामर्थ्यात् धातुलाभोपायमाह— गत्याक्षिप्तेति । गृह्यत

दावभिना समासे अनन्तरस्योदोऽपूर्वपदत्वेऽपि स्वरार्थं तदिति वाच्यम्, 'कारका-
द्दत्त—' इति सूत्रे कारकादिति योगं विभज्य तत्र गतिग्रहणमनुवर्त्य कारकाच्च परं
गतिपूर्वपदं क्तान्तमन्तोदात्तमिति नियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोदात्त-
त्वसिद्धेः । तस्मादनन्तरग्रहणं व्यवहितनिवृत्त्यर्थमेवेति ज्ञापकमेव। यत्र गतिकारक-
समभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणम्; अपिशब्दात् तदसम-
भिव्याहृतस्य केवलस्यापीत्यर्थः । अन्यथा अनया कृद्ग्रहणविषये परत्वात्

---

इति । अभिस्तु न तथेति भावः । ननु तत्रान्याय्यत्वेनैतदर्थस्याभावेन ज्ञापकत्वासम्भव
इत्याशयेनाशङ्कते— न चेति । अभिना समास इति । इतशब्दस्योच्छब्देन समासे
पुरोहितमितिवत् गतिस्वरेणाद्युदात्तो इतशब्दस्येति भावः । तत् अनन्तरग्रहणम् । अन्यथा
'बहुव्रीहौ प्रकृत्या' इत्यत पूर्वपदग्रहणानुवृत्त्यात्र न स्यात्, सतिशिष्टथाथादिस्वरेणान्तोदात्तत्वं
स्यात् । सूत्रं त्वेकगतिके सफलम् । तत्र कृते तु तत्सामर्थ्यात्तदसम्बन्ध इति थाथादितो-
ऽन्यत्र सति शिष्टः । एवं हि स्वरक्रमः — समासान्तोदात्तं बाधकमव्ययपूर्वपदप्रकृतिस्वर-
बाधकथाथादिस्वरबाधक 'गतिरनन्तरः' इति स्वर इति । एवं च तत्राधिक्यसमहार्थत्वेन
ज्ञापकत्वासम्भव इति भावः । गतिग्रहणमिति । 'गतिकारकोप—' इत्यतोऽग्रे समुद्दि-
तानुवृत्तावपि योगविभागस्येष्टसिद्ध्यर्थत्वेन तस्यैवात्र सम्बन्धः । 'सूपमानात्क्तः' इत्यत क्तग्रहण
स्यानुवर्तनं एवेति भावः । गते परमिति शब्दार्थेन फलितमाह— गतिपूर्वेति ।
कृत्स्वरेणेति । 'गतिकारकोपपदात्—' इत्यनेनेत्यर्थः । एतत्परिभाषयोद्धृतस्य कृदन्त-
स्यात्तस्य चाद्युदात्तत्वमुक्तमेवेत्यर्थः । एवं च तेनैव स्वरसिद्धिरित्याधिक्यसमहार्थत्वं न तस्ये-
त्येवमेतद्वाच्यमिति तत्त्वं सम्यगेव, तदाह— तस्मादिति । ज्ञापकमिति । एकदेशद्वारा
कृत्स्नपरिभाषाया इत्यर्थः । परिभाषार्थमाह— यत्रेति । तदसमेति । तथा च अपिना
प्रत्ययग्रहणपरिभाषया अन्यत्र समुच्चयः, नान्यपूर्वस्य । एतेन अनन्यपूर्वग्रहणेन तत्सन्निपातेऽ-
प्यपिना केवलसमुच्चय इत्यभ्युपेयमेवेत्यपास्तम्, अनन्यपूर्वग्रहणस्य तत्रैव कृद्ग्रहणपरिभा-
षानुपस्थितिज्ञापकतया सार्थक्यात् प्रकृतेऽत्राप्यनापत्तेश्च गत्यादिपूर्वस्य क्तान्तस्य
समासस्यानन्यपूर्वस्येत्यर्थापत्तेरिति भावः । 'अपीत्यर्थः' इति पाठः । 'स्येत्येतदर्थं' इति
क्वचित्पाठः । अन्यथा अपिशब्दाभावः । परत्वादिति । 'सर्वं वाक्यं सावधारणम्'
इति न्यायेन कृद्ग्रहणे तत्पूर्वस्यैव ग्रहणमित्यर्थावगमाद्विरोधेन परत्वमिति भावः । एतेन
तदपवाद इयमिति सीरदेवोक्तं प्रत्युक्तम्, 'येन ना—' इति न्यायाविषयत्वेन
तत्त्वाभावात् व्याघ्रचर्मादौ 'स्त्रीप्रत्यये च—' इति निषेधेन 'प्रत्ययग्रहण—'

प्रत्ययग्रहणपरिभाषाया बाध एव स्यादित्यपिग्रहणम् । अत एव सांकूटिनमिति 'गतिकारकोपपदानाम्' इति 'कृद्ग्रहणे—' इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिध्यति; न तु सकोटिनमितीति 'पुंयोगात्—' इति सूत्रे भाष्योक्तं संगच्छते; अन्यथा तत्र केवलकूटिनित्यस्यापि इनुणन्तत्वात्तनोऽणि पाक्षिकदोषो दुर्वार एव स्यात् । स्पष्टं चेदम् 'समासेऽनञ्पूर्वे—' इति सूत्रे भाष्यकैयटयोः । 'गतिरनन्तरः' इत्यत्र तु गतेः पूर्वपदस्य क्तान्ते उत्तरपदे परे कार्यविधानात् तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम् । इयं च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे च; न तु कृदकृद्ग्रहणे इति 'अनुपसर्जनात्' इति सूत्रे भाष्ये स्पष्टम् ॥ २८ ॥

## पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥ २९ ॥

पदमङ्गं च विशेष्यम्, विशेषणेन च तदन्तविधिः । 'येन विधिः—' इत्यस्यार्थं

---

इत्यस्या अप्रवृत्तेरस्यास्तत्र प्रवृत्तेः । अत एवेति । तत्समभिव्याहारे तद्विशिष्टस्यैव ग्रहणमित्यर्थाङ्गीकारादेवेत्यर्थः । कृदिति । एतेनैव तद्विषयसमाधिश्चा । अत एवापिना तदर्थस्यापि संग्रह इत्येवास्त्विति कस्यचिदुक्तिरपास्ता, भाष्यासंगतेः । अन्यथा उभयोरेकतराङ्गीकारे । सर्वम् आदित आरभ्य गतानुवृत्तम् । तत्र हि 'स्वाश्रयकालकादिषु प्रतिषेधः' इत्येत खण्डनाय पक्षान्तरत्वेनोक्तप्रत्ययग्रहणपरिभाषाप्रसङ्गेनेदमुक्तम् । ननु तत्समभिव्याहारे तद्विशिष्टस्यैव ग्रहणे पुरोहितमित्यादौ 'गतिरनन्तरः' इति न स्यात्, विशिष्टस्य क्तान्तत्वेन ततो भेदाभावादत आह— गतेरिति । पूर्वपदस्य वस्तुतः पूर्वपदभूतस्य; नेदमनुवृत्तिपरम्, तदनुवृत्तेरुक्तत्वात् । विधानादिति । 'तत्सामर्थ्यात्' इति शेषः । भाष्ये इति । तत्र हि प्रधानेन तदन्तविधिर्यथा स्यात्— कुम्भकारी । अन्यथात्र पूर्ववचनेनाव्ययत्वादुत्पत्तिः स्यादित्युक्त्वा, अनया समाधानोक्तेर्भविष्यतीति शङ्कते इदमुक्तम् ॥ २८ ॥

नन्वेवमपि पक्वेष्टकचितमित्यादौ ह्रस्वादि न स्यादत आह— पदाङ्गेति । परिभाषार्थमाह— पदमिति । तथा च विशेष्यविशेषणभावव्यवस्थार्थमिदमिति नापूर्वम्, तदाह— येनेति । अत्र पदशब्देनोत्तरपदाधिकारो न गृह्यते, किंतु सुबन्तपदाधिकार इति प्राचां मतमम·

प्रपञ्च । तेन इष्टकाचितं पक्वेष्टकाचितमित्यादौ 'इष्टकेषीकामालानां चिततूल—' इति हूस्वः, महान् परममहान् परमातिमहानित्यादौ 'आन्महत—' इति दीर्घश्च सिद्धः । अत एव तदुत्तरपदस्येति पाठोऽयुक्त इति भाष्ये स्पष्टम् । अत्र पदशब्देन उत्तरपदाधिकार' केवलपदाधिकारश्च । 'पादस्य पदाज्याति—' इत्यत्र न तदन्तग्रहणं लक्ष्यानुरोधादिति सर्वम् 'येन विधि—' इत्यत्र भाष्ये स्पष्टम् ॥ २९ ॥

नन्वेवमस्यापत्यम् इत्यादावदन्तप्रातिपदिकत्वाभावादिञ् न स्यादत आह—

## व्यपदेशिवदेकस्मिन् ॥ ३० ॥

निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी । यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहाय, स तेन तुल्य वर्तते कार्यं प्रतीति,

---

गतमिति ध्वनयितुमाह— तेनेष्टेति । अतएवेति । परमातिमहानित्युदाहरणदानादेवेत्यर्थः । द्वितीयसमासे महदन्तत्वेऽपि तदुत्तरपदकत्वं नेति भावः । यद्यपि वार्तिककृता तथा पठितम् । तदन्तविधिप्रतिषेधोऽप्युत्तरपदविधि । अत एव तस्य चेति पुनरभिहितम् । तदन्तविधौ हि बहुच्पूर्वे न स्यात्, तच्च नेष्टमिति वार्तिकाशय । तदन्तविध्यपवादत्वादस्यापि विशेषण एव प्रवृत्ति । तथाप्ययं 'अलेऽन्त्यविधेरन—' इत्येतत्परिभाषाव्याख्यावसरे 'किं पुनरत्र ज्याय' इत्यादिना एवमुक्तम्, तदाह— भाष्य इति । येनविधिरित्यत्र तथैवोदाहरणदानाशयमाह— अत्रेति । कारश्चेति । 'गृह्यते' इति शेष । नन्वेवमतिप्रसङ्गोऽत आह— पादस्येति । सर्वमिति । आदित आरभ्य यदुक्तम्, तत्सर्वमित्यर्थः । 'पदाङ्गाधिकारे—' इति वार्तिकव्याख्यावसरे सर्वमिदं तत्रोक्तम् ॥ २९ ॥

एवं पदाङ्गाधिकारे एतौ भवत वार्याङ्गाधिकारे । क्वचित् 'एवमपि' इति पाठ, तत्राप्ययमेवार्थः । 'अत इञ्' इत्यस्योभयनिर्दिष्टत्वात्; 'येनविधि—' इत्यत्र तस्य चेति नास्तीति भाव । शेषपूरणेन व्याचष्टे— निमित्तेति । वेत्यर्थमाह— विशिष्ट इति । क्रमेणानयोरर्थमाह— मुख्य इति । एकपदार्थमाह— असहाय इति । तेन व्यपदेशिना । कार्यं प्रतीति । कार्यार्थमेवातिदेशाद्वीकारादिरिति भावः । तदेवाह— एक-

एकस्मिन्नसहायेऽपि तत्कार्यं कर्तव्यमित्यर्थः । तेन अकारस्याप्यदन्तत्वान्न क्षतिः । एकस्मिन्नित्युक्तेः सभासन्नयने आकारस्य न्यादित्वम्, दरिद्राधातोरिकारस्य नान्तत्वम्; अन्यथा सभासन्नयने भव इत्यर्थे वृद्धाच्छ, दरिद्रातेरिवर्णान्तलक्षणोऽच्च स्यात् । अत एव हरिष्वित्यादौ सोः पदत्वं न । लोकेऽपि बहुपुत्रसत्त्वे एकस्मिन् ज्येष्ठकनिष्ठत्वादिव्यवहार — अयं मे ज्येष्ठः कनिष्ठो मध्यम इति; किंतु एकपुत्रसत्त्व एव । अनेन चाशास्त्रीयस्याप्यतिदेशः । अत एव इयायेत्यादौ एकाच्त्वनिबन्धनद्वित्वसिद्धिः । अत एव भवतीत्यादौ भू इत्यस्याङ्गत्वम्, इरियानित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वं च सिध्यति; अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात् । यत्तु— 'योऽर्थवान्, तत्रार्थस्य त्यागोपादा-

---

स्मिन्निति । तदर्थमाह— असेति । **तत्कार्यं** मुख्यकार्यम् । उक्तदोषमुद्धरति— **तेनेति** । **अकारस्येति** । भगवद्वाचकस्येत्यर्थः । अपिना दक्षादिसमुच्चयः । **सभासन्नयने** तच्छब्दे । **अन्यथा** एकस्मिन्नित्यस्याभावे । अयं भावः — सभासन्नयने यस्याचा वृद्धिरस्य शसत्त्वमादित्वस्यापि व्यपदेशिवद्भावेन सापेक्षतया तत्र सत्त्वमिति तत्समुदायस्य वृद्धसंज्ञा दुर्वारा । एवं दरिद्रातेरिवर्णस्यान्तत्वं स्वापेक्षयास्तीति धातोरिवर्णान्तत्वमक्षतमिति । फलान्तरमाह— **अत एवेति** । एकस्मिन्नित्युक्तेरेवेत्यर्थः । **पदत्वं** पदत्वमपि । अन्यथा यस्माद्विहितस्तदादित्वस्याशास्त्रीयस्यानयातिदेशात्तस्य दुर्वारमिति भावः । एवमेव लोकन्याये न सिद्धमित्याह— **लोकेऽपीति** । व्यवहारस्वरूपमाह— **अयं मे ज्येष्ठ इति** । 'एकपुत्रसत्त्व एव' इति पाठः । 'एकपुत्रत्व एव' इति पाठे तु निमित्तसप्तमी । कर्मधारयात् बहुव्रीहेर्वा त्वः । येषां लक्षणानुसारि स्वमिद्धान्तमाह— **अनेन चेति** । चस्त्वर्थे । तेनान्यथातिदेशो नैवमिति बोध्यम् । अपि शास्त्रीयधर्मसमुच्चायकः । अत्र शास्त्रीयत्वं च शास्त्रविषयत्वम् । अस्ति चैतद्व्यक्ततन्त्रत्वे, 'आद्यन्तवत्—' इत्यनेन तस्य विधानात् । नैव यस्माद्विहितस्तदादित्व इति बोध्यम् । तत्फलमाह— **अत एवेति** । अशास्त्रीयस्यातिदेशादेवेत्यर्थः । एवमग्रेऽपि । अशावश्यकता सूचयितुं फलान्तरमाह— **अत एवेति** । ध्यातिस इत्यादि पदत्वमित्यन्तोऽपपाठः, लोके तत्प्रयोगस्यैवाभावादिति मानप्रकाशे विशदीकृतम् । आदिना अधुनेत्यादिपरिग्रहः । **कार्यकालेति** । तस्यैव मुख्यत्वादिति भावः । **अन्यथा** अशास्त्रीयातिदेशानङ्गीकारे । **न स्यादिति** । तथा चैतदर्थं तथाश्रयं भाष्ये इयायेत्यादावयमेव प्रकार इति कैयटाद्युक्तिरयुक्तैवेति भावः । तदेवाह— **यत्त्विति** । तस्य तथैकाच्त्व यस्मात्स्थेनाभिमतस्य ।

नान्यमेकाज्व्यपदेशः; यथा इयायेत्यादौ अर्थवतो धातोरयं वर्णरूप एकोऽच्' इति कैयटः; तन्न, तस्य एकपदा ऋगित्यत्र भाष्योक्तरीत्या मुख्यव्यवहारत्वात्। एकपदा ऋगित्यत्रार्थेन युक्तो व्यपदेश इति भाष्ये उक्तम्। ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेकोऽत्रार्थ इत्यर्थ इति तदाशयः। तस्मादेकस्मिंस्त-त्तद्धर्मारोपेण युगपत् यथा ज्येष्ठत्वादिव्यवहारः; यथा च शिलापुत्रकस्य शरीरमित्यादावेकस्मिन्पुत्रे आरोपितानेकावस्थाभिः समुदायरूपत्वाद्यारोपेण तस्य शरीरमित्यादिव्यवहारः; तथा अत्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धे-यम्। न चासहाय एवैतत्प्रवृत्तौ भवतीत्यत्र भू इत्यस्याङ्गत्वानापत्तिः ससहायत्वादिति वाच्यम्, शपमादायाङ्गत्वे कार्ये यस्माद्विहितस्तदादित्वे तस्य ससहायत्वाभावात्। यथा लोके विंशतिपत्न्यादिसत्त्वेऽपि एकपुत्रस्य तस्मिन्नेवायमेव ज्येष्ठ इत्यादिव्यवहारः। न चैवम् 'त्रिजो चत्वार एकाचः' इति भाष्यासंगतिः इकारस्या-सहायत्वाभावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम्, एकस्मिन्नित्यस्यापर्यालोचन-

---

**मुख्यव्यवहारत्वादिति**। तथा च तदौपपादनेन तत्र परिभाषायोजनं कैयटीयमयुक्त-मिति भावः। व्यवहारत्वादिति पाठे तदेतस्य अर्थवत इत्यर्थो बोध्यः। तदेव भाष्य-माह— **एकेति**। युक्तत्वमुपपादयति— **ऋक्त्वादेरिति**। आदिना मन्त्रत्वादिपरिग्रहः। उभयेत्यनेन विशिष्टनिरासः सूचितः। **तस्याः** ऋचः। **इत्यर्थ इति**। एकपदा ऋगित्य-स्येति भावः। **तदाशयः** भाष्याशयः। उपसंहरति— **तस्मादिति**। **एकस्मिन् पुत्रे** एकस्मिन् शिलापुत्रके। यच कृतावस्थानामपि प्राणिविशिष्टत्वेन वस्तुतस्तत्रासत्त्वादाह— **आरोपितेति**। **समुदायरूपत्वेति**। अनेकावस्थाविशिष्टशिलापुत्रकरूपत्वेत्यर्थः। आदिना एकावस्थाविशिष्टशिलापुत्रकत्वपरिग्रहः। **तस्येति**। अनेकावस्थाविशिष्टशिलापुत्रकस्यै-कावस्थाविशिष्टमिदं शरीरमस्येत्यादिव्यवहार इत्यर्थः। **तथात्रैकेति**। इयायेत्यादावुक्त-प्रकारद्वयेनेत्यर्थः। **इति लोकेति**। न तु कैयटोक्तरीत्येति भावः। **अङ्गत्वेति**। 'शानुनि-त्यपि' इत्यादिः। **ससहायेति**। शबादिनेति भावः। **अङ्गत्वे कार्ये** अन्यजनकभावः सप्तम्यर्थः; तज्जनकीभूत इति यावत्। **तदादित्वे** तद्व्यवहारे। **तस्य** भू इत्यस्य। **ससेति**। कार्यित्वेन सजातीयसहायसाहित्याभावादित्यर्थः; निमित्तत्वेन विजातीयसहायसत्त्वेऽपि न क्षतिरिति भावः। लोकन्यायेनाप्येतदेव लभ्यत इत्याह— **लोक इति**। **एकपुत्रस्येति**। बहुव्रीहिः। **तस्मिन्नेव** एकस्मिन्पुत्र एव। **एवम्** असहाय एवैतत्प्रवृत्तौ। **तत्र** इकारे।

या तत्प्रवृत्तेः। 'अर्थवता व्यपदेशिवद्भावः' इत्यत्र अर्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते; अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यत इति तदर्थः, प्रायोऽसहाय एवार्थवत्त्वात्। कुरुत इत्यादौ तशब्दाकारः अथामन्त्य इति व्यवहारे स आदिरस्येति व्यवहारे च असहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरित्यन्यत्र विस्तरः ॥ ३० ॥

ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्योऽपि स्यादत आह—

---

अनुपेति। परिभाषयेति भावः। तत्प्रवृत्तेः उक्तभाष्यप्रवृत्तेः; एवं च पूर्वरक्षुक्तरीत्या तदसांगत्यं न दोषावहमिति भावः। ननु 'अर्थवता व्यपदेशिवद्भावः' इति भाष्योक्तेः कैयटोक्तपरिभाषार्थ एव भगवदभिमत इति लभ्यते, सदेकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात्। एवं च कथं तत्खण्डनमत आह— अर्थवतेति। अपिनैकपदसमुच्चयः। तदर्थमेवाह शब्दार्थमाह— अर्थेति। बोध्यबोधकभावसम्बन्धेन मत्वर्थत्वमभिप्रेत्याह— बोधकेनेति। वत्यर्थमाह— सदृश इति। भावपदस्यार्थः— कार्यमिति। तदर्थः उक्तभाष्यार्थः। नन्वेवमपि कथमेतदुपलक्ष्यं तेनात आह — प्रायोऽसहाय एवेति। द्योतकसमभिव्याहारे अधीत इत्यादौ धात्वादेः ससहायस्यार्थवत्त्वदर्शनादाह— प्राय इति। तथा च तत्र तथा सत्त्वेऽप्येतत्प्रवृत्तिविषये सर्वत्र तथा सत्त्वमस्तीति तेनैतदुपलक्षणं सम्भवतीति भावः। नन्वेवमपि कुरुत इत्याद्यात्मनेपदस्थाकारस्य टिसंज्ञा न स्यात्, ससहायत्वेनास्या अप्रवृत्तेरत आह— कुरुत इति। एवं च विजातीयसहायवत्त्वेऽपि न सजातीयसहायसत्ता, आत्मनेपदसम्बन्धिनोऽन्यस्याचोऽभावादिति न दोष इति भावः। नन्वथामन्त्य इति व्यवहारः प्रकृतिमादायापि सुलभोऽत आह— स आदिरिति। तत्र तशब्दाकारे। एतेनेदं परिभाषान्तरमित्यप्यपास्तम्; तदाह — इत्यन्यत्रेति। तद्व्योताशात्पर्यः ॥ ३० ॥

यद्यपि 'पदाङ्ग—' इत्यस्य 'येन विधिः—' इति सूत्रप्रपञ्चत्वात्तत्प्रसङ्गेन तत्र दोषस्फूर्तेरनन्तरमेव 'ग्रहणवता— इति वाच्यम्; न 'व्यपदेशिवदेकस्मिन्' इति युक्तम्; तथापि परिभाषापाठक्रमे तस्य चैतयोश्च एव प्राग्दोषोपस्थितिः, न तु सूत्रभूतत्वेनोपस्थितसूत्र इति सा पूर्वमुक्ता। न चैवमपि तदग्रे तदतिव्याप्तिनिवारकाग्रिमपरिभाषैव वक्तुं युक्ता मैयमिति वाच्यम्, तदनन्तरं तत्सूत्रदोषस्यैव प्रागुपस्थितिर्न तदतिव्याप्तिदोषस्येत्येतदुत्तरमेव तदुक्तेः; तदेतदभिप्रेत्याह— ननु गर्गेति। गर्गादीनामधिकृतप्रातिपदिकविशेषणत्वेन येने-

## ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥

इयं च 'समासप्रत्ययविधौ प्रतिषेधः' 'उगिद्वर्णग्रहणवर्जम्' इति वार्तिकस्थप्रत्ययांशानुवादः। अत एवायं प्रत्ययविधिविषय एव। अत एव 'येन विधिः—' इति सूत्रे भाष्ये प्रत्ययविधिभिन्ने 'अप्तृन्—' इत्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसा परमस्वसेत्याद्युदाहरणं च संगच्छते। अत एव च तदन्तविधिसूत्रे भाष्ये 'समास—' इत्यादिनिषेधस्य कथनमदस्य न कथनम्। सोऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिकसूत्र एव। ध्वनितं चेदम् 'असमासे निष्कादिभ्यः' इति सूत्रे भाष्ये। अत्र च ज्ञापकम्— 'सपूर्वाच्च' इति सूत्रम्; अन्यथा 'पूर्वादिनिः' इत्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥ ३१ ॥

नन्वेवम् 'सुखान्ताट्ठक्' 'दशान्ताड्डः' 'एकगोपूर्वात्' इत्यादेः केवलसूत्रशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह—

---

स्त्येव प्रतीतीति भावः। अपि केवलसमुच्चायकः। तत्र व्यपदेशिवद्भावो बोध्यः। **ग्रहणवता** विशिष्य तत्तद्रूपेणोच्चारणवता। इदं च सौत्रयोगेनैवस्य विशेषणम्। एवमग्रेऽपि। भिन्न वचनद्वयमिति जीर्णोक्तिश्चिन्त्येति ध्वनयितुमाह— **इयं चेति**। **अत एव** तदंशानुवादत्वादेव। **अयं** ग्रहणेति निषेधः। उक्तं समर्थयति— **अत एवेति**। अस्याः प्रत्ययविधिविषयत्वादेवेत्यर्थः। एवमग्रेऽपि। अपिर्गृह्यमाणप्रातिपदिकसमुच्चायकः। **उदाहरणं च** तत्प्रतिपादनं च। युक्त्यन्तरमाह— **अत एवेति**। अस्य ग्रहणवतेति निषेधस्य। ननु प्रत्ययविधावेवेति निषेधस्य गृह्यमाणप्रातिपदिकसूत्रेऽपि प्रवृत्तेः प्रथमस्य तदनुवादत्वमत आह— **सोऽपीति**। प्रत्ययविधावप्यपीत्यर्थः। अपिरस्य समुच्चायकः। विशिष्येत्यस्य व्याख्यानम्— **तत्तदिति**। **गृहीतेति**। बहुव्रीहिगर्भः कर्मधारयः। कप् तु पक्षान्तरत्वात्। एवं च समर्थासत्वमुभयोः सिद्धमिति 'अत इञ्' इत्यादौ तदन्तविधिः सिद्ध इति 'उगिद्वर्ण—' इत्यत्र नापूर्वं वर्णग्रहणमिति बोध्यम्। ननु तत्र प्रातिपदिकग्रहणाभावात् कथमेतदत आह— **ध्वनितमिति**। तत्र हि असमासप्रयोजनोक्त्यवसरे 'प्राग्वतेष्ठञ्' इत्यत्र तदन्तविधेः परमनिष्कशब्दद्वयसिद्धिरिति फलं ग्रहणवतेति निषेधो न विशिष्य प्रकृत्यनिर्देशादिति सिद्ध एव तदन्तविधिरिति खण्डितम्। यदि च तस्य साधारणत्वं स्यात्, तदा तद्विषयत्वसत्त्वेन भाष्यमसंगति स्पष्टम्। एवं वार्तार्थमुक्त्वात्र मूलमाह— **अत्र चेति**। **अन्यथा** एतदभावे। **सिद्धे** कृतपूर्वीत्यादिप्रयोगे सिद्धे ॥ ३१ ॥

## व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥

'पूर्वादिनिः' 'सपूर्वाच्च' इत्येकयोग एव कर्तव्ये पृथग्योगकरणमस्या ज्ञापकम्। न च 'इष्टादिभ्यः' इति सूत्रे अनुवृत्त्यर्थं तथा पाठः; अत एव अनिष्टीत्यादिसिद्धिरिति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्येन अनिष्टीत्यादिप्रयोगाणामनिष्टत्वात् एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च। अत एव 'नान्तादसंख्यादेः' इति चरितार्थम्; अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव। इयं च प्रातिपदिकग्रहण एव न तु प्रतिपदिकाप्रातिपदिकग्रहणे। तेन 'उगितश्च' इत्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम्। इयम् 'ग्रहणवता—' इति च परिभाषा प्रत्ययविधिविषयैवेति 'असमासे निष्कादिभ्यः' इति सूत्रे भाष्यकैयटयोः। तेन

---

एवं प्रातिपदिकेन तदन्तविधिमात्रनिषेधाङ्गीकारे। तथा च व्यपदेशिवद्भावस्याति-व्याप्तिः। आदिना गोशब्दपरिग्रहः। अर्थस्य स्पष्टत्वात् ज्ञापकमाह— **पूर्वादिति**। मान्योक्तं दोषं खण्डयति— **न चेति**। तथा पाठः पृथक्सूत्रपाठः। अत एव 'इष्टादिभ्यश्च' इत्यत्र सपूर्वादित्यस्यानुवृत्तेरेव। **ज्ञापकपरेति**। येन विधिरिति सूत्रस्थोक्तसमानाकारभा-ष्येत्यर्थः। इद च 'एकयोगनिर्दिष्टाना सह वा—' इति न्यायावलम्बेनोक्तम्। 'एकदेशोऽपि—' इति न्यायावलम्बेन तेषामिष्टत्वेऽप्याह— **एकेति**। इद च प्राक् प्रतिपादित भाष्यानु-रोधेन। अत्र ज्ञापकान्तर सूचयन्नुदाहरणं दर्शयति— **अत एवेति**। प्रातिपदिकेन तन्निषेधा-देवेत्यर्थः। **इतीति**। इति सूत्रमित्यर्थः। **अन्यथा** एतन्निषेधाभावे। प्राचीनोक्तस्यसंगतिं ध्वनयितुमतिप्रसङ्गवारणद्वारा सिद्धान्तमाह— **इयं च प्रातीति**। ग्रहणवतेत्यनुवृत्त्या यथा कथंचिद्ग्रहणवता प्रातिपदिकेन व्यपदेशिवद्भावो नेत्यर्थाङ्गीकारादिति भावः। **उगितश्चेति**। उगित्त्वस्य प्रत्ययादिसाधारणत्वात् प्रातिपदिकादित्यस्यानुवृत्तावपि सूत्रे तस्य स्वरूपेणा-नुच्चारणाच्चेति भावः। **तत्रैव** उगितश्चेत्यत्रैव। तत्र हि उगितः प्रातिपदिकादुगिदन्ताद्वेत्य-र्थद्वयसमर्थनावसरे परिभाषाप्रवृत्तिवारणाय कण्ठतस्तथोक्तम्। पूर्वभेदेन सिद्धान्तान्तरमाह— **इयं ग्रहेति**। **परिभाषेति**। जातावेकवचनम्। एकमपीत्यपि। **असमास इति**। तत्र हि असमासग्रहणप्रयोजनोक्त्यवसरे 'आर्हादगोपुच्छ—' इत्यत्र तदन्तविधौ परमगोपुच्छिकमि-त्यत्र ठक्प्रतिषेधात् ठञ्फलमिति खण्डनाय विधौ प्रतिषेधः प्रतिषेधार्थमित्युक्तम्। तेन द्वयोस्तद्विषयता स्पष्टमेव ध्वनिता। अन्यथा तदन्तविधिदौर्लभ्येन केवलसाधनेन च तदंग-

महन्' इत्यादेः केवलाहन्शब्दे परमाहन्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥३२॥

ननु 'वान्तो यि—' इत्यादौ यादौ प्रत्यय इत्यर्थः कथमत आह—

## यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

तदन्तविधेरपवाद इयम्। वार्त्तिककृता 'येन विधिः' इत्यत्र भाष्ये पठिता। अस्यां च स्वरूपसती सप्तमी निमित्तम्। अत एव 'नेड्वशि कृति' इत्यादौ वशादेः कृत इत्यर्थलाभः। इयं च 'आर्धधातुकस्य—' इति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद्विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते। तेन 'डः सि धुट्' इत्यादौ सादेः पदस्येति नार्थः। 'तीषसह—' 'सेऽसिचि—' इत्यादौ यथा तदादेरित्याद्यर्थ-

---

तिः स्पष्टैव। एव चात एव नान्तादिरित्यादिप्राचामुक्तिरसङ्गतैव। अत्र तदन्तशब्दस्यैतदिसङ्गा-न्ताभावे यथाश्रुतार्थाभिप्रायकस्तदसङ्गतिपरिहननफलक उक्तार्थस्य सर्वाभिमततावचननफ-लस्य। अत एव शब्दरत्ने तदवतारणमध्ये उक्तम्। यत्तु प्रत्ययविधिरित्यस्य प्रत्ययरूपकार्यवि-धिरित्यर्थस्तत्प्रत्ययस्य नियमरूपविधिरित्यर्थः। अत एव विधौ प्रतिषेध इति प्रतिषेधश्चार्थापत्ये-योक्त भाष्ये, न तु प्रत्ययेत्यपि। अत एव च येनविधिरित्यत्र ज्ञापकस्य सञ्ज्ञात्वापेक्षत्वात् सूत्रेऽपि तान्तादिशब्दाविषयत्वमेव अस्त्र कैयटेनोक्तमिति; तन्न; एवमप्युदित इयतो नान्तादिरित्यत्राविलक्षण्येनोक्त सिद्धान्तेन तत्रैतत्प्रवृत्तेर्दुर्बचत्वात्। अत एव च कैयटोऽत्र संमतित्वेन नाङ्गीकृतः; तदाह— इत्यन्यत्रेति। तदुक्तेतावतार्थ इत्यर्थ ॥ ३२ ॥

एवं सप्रपञ्चं तदन्तविधिं प्रतिपाद्य, तत्प्रसङ्गात्तदपवादमवतारयति— नन्विति। कथमिति। तदन्तविधेः प्रसङ्गादिति भावः। अत एवाह— तदन्तेति। पठिता कात्यायनेन। 'अल्ग्रहणे' इत्यस्य अलो ग्रहणे उच्चारणे इति नार्थः, प्रत्याहारग्रहणे दोषापत्तेः। किंतु अलः प्रतिपादकशब्द इत्यर्थः। अत एव 'इकोऽचि व्यञ्जने मा भूत्' इत्यत्र व्यञ्जनादाविति भगवता व्याख्यातम्। यद्यपि परिभाषायामत्र यस्मिन्निति इति विना तस्मिन्निति सूत्रस्थतस्मिन्निर्देशवत्, तथापि विशेषमाह— अस्यां चेति। स्वरूपेति। न तु सार्थ-विशिष्टेति भावः। तत्र मानमाह— अत एवेति। स्वरूपसत्सप्तम्या एतन्निमित्तवाद्देशे-सर्गः; अन्यथा तस्याः पक्षपर्यन्तत्वं स्यादिति भावः। विशेषान्तरमाह— इयं चेति।

लाभ', तथा शब्देन्दुशेखरे निरूपितम् ॥ ३३ ॥

घटपट घटपटावित्यादिसिद्धये आह—

**सर्वो द्वन्द्वो विभाषैकवद्भवति ॥ ३४ ॥**

'द्वन्द्वश्च प्राणि—' इत्यादिप्रकरणाविषय सर्वोऽपि द्वन्द्व इत्यर्थ । 'चार्थे द्वन्द्व' इति सूत्रेण *समाहारेतरेतरयोरुभयोरविशेषेण द्वन्द्वविधानान्न्याय*-सिद्धेयम् । 'तिष्यपुनर्वस्वो —' इति सूत्रस्थं बहुवचनग्रहणमस्या ज्ञापकम् । तद्धि इद तिष्यपुनर्वसु इत्यत्र तद्व्यावृत्त्यर्थम् । न चैवमप्यत्र 'जातिरप्राणिनाम्'

---

नन्वेवम् 'तीपसह—' इत्यादौ एतदप्रवृत्त्यापत्ति, विशेष्यस्यार्धधातुकस्यातस्वादत आह— तीपेति । शब्देन्दुशेखर इति । 'वलादेरित्यनुवृत्तविशेषणीभूतवल्पदार्थस्य सौत्रत्वात्तत्कारेण विशेषणात्तस्य वलादेरेति वाच्योऽर्थ । एतत्फलितार्थ स । सप्तमी तु प्रथमार्थे एव । एव सेऽभिचीयादावपि' इति तत्रोक्तम् । वस्तुतस्तु तत्कारा यवहितपर-कैयत्यादि परत्वलाघार्धधातुकस्येडिति सूत्रार्थ नापि कल्पनेति बोध्यम्, इदमेव ध्वनयितु तत्र अरमित्युक्तम् ॥ ३३ ॥

अतिदेशप्रसङ्गादिममिति ध्वनयन्नाह— घटेति । नन्वत्र 'जातिरप्र—' इति नित्यैकवद्भावेन नोभयमिति चेत्, न, जातिप्राधान्ये तस्यैव तस्येऽपि व्यक्तिप्राधान्ये उभयमित्यस्य स्वीकारात् । अनुपदमेवैतद्व्यक्तीभविष्यति । इत्यादीति । इत्युभयादीत्यर्थ । आदिना पाभ्रवशालङ्कायन पाभ्रवशालङ्कायना इत्यादिपरिग्रह । ननु सर्वग्रहणेन 'द्वन्द्वश्च प्राणि—' इत्यादिप्रकरणविषयत्वापि वैकल्पिकत्वापत्तिरत आह— **द्वन्द्वश्चेति** । अन्यथा तत्प्रकरणवैयर्थ्यं स्पष्टमेव । तदविषयता च अप्राप्त्या । सा च तद्विधिनिमित्ताभावेन पर्युदासेन जातिप्राधान्य एवेत्यादिना वाच्यकथा । अत एव सर्वत्वोक्ति । तथा च सर्वत्वम् 'चार्थे द्वन्द्व' इत्येतल्लक्ष्यनिष्ठ न तु लक्षणनिष्ठम्, अस्या न्यायसिद्धार्थबोधकत्वेन सर्वशब्दसंहतार-कुचद्वृत्तिताया एव युक्तत्वाच्चेति भाव । इदमेव ध्वनयन्नत्र मूलमाह— **चार्थे इति** । **अविशेषेण** तत्प्रकरणाविषयलक्ष्यविशेषानादरेण । न्यायसिद्धऽपि लिङ्गमप्याह— **तिष्येति** । **ज्ञापकं** ज्ञापकमपि । क्वचित्तथैव पाठ । तद्व्यावृत्ति— **तद्धीति** । बहुवचनस्येति पदे इत्यर्थ । **तिष्येति** । समाहारद्वन्द्व । क्लीवता स्फुटयितुमिदशब्द । तस्य चोदितमित्यर्थ । **तदिति** । द्विवचनेत्यर्थ । अन्यथा पुनर्वस्वोर्द्वित्वात्सामान्यसूत्रेणतरेतरद्वन्द्व सदा बहुवचनस्येव

इति नित्यैकवद्भावेन बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम्, तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात् । न चैते प्राणिन इति वाच्यम्, 'आपोमयः प्राण' इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् । स्पष्टं चेदम् 'तिष्यपुनर्वस्वो—' इति सूत्रे भाष्ये । अत एव 'द्वन्द्वश्च प्राणि—' इत्यादौ प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥ ३४ ॥

## सर्वे विधयश्छन्दसि विकल्पन्ते ॥ ३५ ॥

'व्यत्ययो बहुलम्' इति सूत्रे भाष्ये बहुलमिति योगविभागेन 'षष्ठी-

---

सरूपेणोक्तप्रयोगस्यैवाभावात्तज्ज्ञानैयर्थ्यं स्पष्टमेवेति भावः । सर्वशब्दं सफलयन्नुक्तमेव प्रतिपादयन्नु शङ्कते—न चेयमिति । तेन 'चार्थे द्वन्द्वः' इत्यस्य वैकल्पिकत्वबोधनेऽप्यानर्थ्यं । अत्र तिष्यादि लक्ष्ये । एते चाप्राणिनः । अप्राणिजातिवाचिनां समाहार एवेति नियमाङ्गीकारात् । एवं च बहुवचनग्रहणस्य सार्थक्येऽपि सूत्रमेव व्यर्थं भवतीति भावः । अत एवाह—इदमिति । तिष्यपुनर्वस्वर्थः । तद्वैकेति । 'जातिरप्राणिनाम्' इति वैकल्पिकार्थ । 'लक्ष्ये' इति शेषः । यावता विनानुपपत्तिस्तावन्मात्रस्य ज्ञाप्यत्वात् । तेन 'जाति—' इत्यस्य न वैयर्थ्यम् । यद्वा जातिप्राधान्य एव स नियमः । व्यक्तिप्राधान्ये तु उभयमित्येव फलितमैकार्थ्यं । एवं च न त्रयाणां मध्ये कस्यापि वैयर्थ्यम् । अपिना 'चार्थ—' इत्यस्य तात्पर्यस्य सङ्ग्रहः । अनेन 'तिष्यपुनर्वस्वो —' इति सूत्रेण । एते तिष्यादय । तथा च तयोः सार्थक्येऽपि तद्विषये प्रकृतस्य तद्वैकल्पिकत्वज्ञापनम् । आपोमय इति । अत्रापूशब्दसमानार्थकादप्प्रकृतिकात्सुबन्तात्प्रकृतशब्दान्मयट्, 'आपोमयमिदं सर्वमापो भूतानि शरीरिणाम्' इतिवत् । ग्लायमानेति । बहुनीहि । स्पष्टमिति । प्रागुक्तं परिभाषादि सर्वमित्यर्थः । तत्स्पष्टत्वात्परं इति भावः । नन्वेतेषां प्राणित्वपक्षे तद्वैकल्पिकत्वपक्षाज्ञापनेऽपि 'द्वन्द्वश्च —' इत्यादिना समाहारः प्राण्यङ्गादीनामेवेति नियमार्थत्वेन तत्प्रयोजनाभावात् बहुवचनस्येति व्यर्थमेवात आह—अत एवेति । बहुवचनग्रहणादेवेत्यर्थः; अन्यथा तदानर्थक्यं स्पष्टमेवेति भावः ॥ ३४ ॥

विभाषाप्रसङ्गादेवाह—सर्वे इति । न केवलं समाहारद्वन्द्व एवेति भावः । 'विकल्पन्ते' इति पाठः । अत्र मानमाह—व्यत्ययेति । एकसूत्रेण विकरणव्यत्ययविधानादाह—

युक्तश्छन्दसि' इति सूत्रे वेति योगविभागेन चैषा साधिता । तेन 'प्रतीपमन्य ऊर्मिर्युध्यति' इत्यादि सिद्धम् । युध्यत इति प्राप्नोति ॥ ३५ ॥

ननु 'क्षियः' इत्यादावियङ् कथमत आह—

## प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

क्षिय इति इयङ्निर्देशोऽस्या ज्ञापकः । तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति 'क्षियो दीर्घात्' इति सूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥

ननु रामावित्यादौ वृद्धौ कृतायां कार्यकालपक्षेऽपि कथं पदत्वम्, उभयत आश्रयणे अन्तादिवद्भावाभावात् यस्माद्विहितस्तदादितदन्तत्वाभावादत आह—

## एकदेशविकृतमनन्यवत् ॥ ३७ ॥

---

योगेति । ततोऽपि लाघवमाह— षष्ठीति । एवं च 'व्यत्ययो बहुलम्' इत्यपि न वक्तव्यमिति भावः ॥ ३५ ॥

अतिदेशप्रसङ्गादेव तथेति सूचयन्नाह— ननु क्षिय इति । सौत्रप्रयोग इति भावः । कथमिति । अनुकरणतया शब्दपरत्वेनाधातुत्वादिति भावः । निर्देश इति । स सौत्रनिर्देश एवेत्यर्थः । नन्वेवं तत्र विभक्तिरेवास्तु न स्यादिति तदनुपपत्तेराह— तत्रैवेति । क्षिय इति सौत्रप्रयोग एवेत्यर्थः ॥ ३६ ॥

अतिदेशप्रसङ्गादेव तथेत्याह— नन्विति । भस्त्वात्पूर्वं न पदत्वमित्याह— वृद्धाविति । कार्यकालपक्षेऽपीति । अपिना यथोद्देशपक्षसमुच्चयः । नित्यनिर्देशे तु दत्तलक्षणं तत्रस्यापि । तदनुचितकार्यं तु वैयर्थ्यादिना तल्लक्षणस्याप्रवृत्तिरिति नाम । एवं [illegible] पदौ परयोरपादौ निपातादिति बोध्यम् । अत्र हेतु—यस्मादिति । अनुकृतेरिह ठञ्धर्मित्वे भावः ।

अनन्यवदित्यस्य अन्यवन्नेत्यर्थः । तत्रान्यसादृश्यनिषेधे अन्यत्वाभाव सुतराम् । अत एव तादृशादर्थबोधः । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बाधो न स्यात् । एवं च रामिति मान्तस्य यस्माद्विहितस्तत्त्वम्, औ इत्यस्य परादिवत्त्वेन सुपत्वमिति तदन्तत्वमार्थसमानग्रस्तम् । छिन्नपुच्छे शुनि श्वत्व व्यवहारवन्मान्ते तत्त्व लोकन्यायसिद्धम् । अत एव 'प्राग्दीव्यत —' इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा, 'किमर्थं विकृतनिर्देशः ? एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा— एकदेशविकृत-मनन्यवदिति' इत्युक्तम् । एतेनाय न्याय शास्त्रीयकार्य एव शास्त्रीयविकार एवेत्यपास्तम् । विकृतावयवनिबन्धनकार्ये तु नायम्, छिन्नपुच्छे शुनि पुच्छवत्त्व व्यवहारवत् विकृतावयववत्त्वव्यवहारस्य दुरुपपादत्वात् । एवमत्तपरिमाणमह

---

नन्वन्तादिवद्भावेनायमर्थ सुलभमत आह— उभयत इति । विकृतमिति । भाव क्त, बहुव्रीहि, सामान्ये नपुंसकम् । कैयटादिना तु क्षमेतातेन पूर्वनिपातभिया तृतीयासमास उक्त । नन्वनन्यवदित्यस्य अन्याभिन्नवदित्यर्थ असमर्थ वैयर्थ्य च स्यादत आह— तत्रेति । श्येति । नन्वेवम् एतादृशस्थानधेऽप्यन्यत्वसत्त्वादन्यदोषस्तदवस्थ एवात आह— तत्रेति । एकदेशविकृत इत्यर्थ । अन्यत्वाभाव अन्यत्वाभावः । कथं तु ज्ञातावयवेऽन्यत्व त्वस्य धर्मपात्वेन मतुपा वाच्यत्वस्यैव निषेधोऽनयत्याह । अत एव फलिता यत्था-भावादेव । तादृशात् विकृतात् । अन्यथा अन्यत्वे । बोधो नेति । इद च मञ्जूषायां स्पष्टम् । एव च कृतनाम यत्वाभाव च । नन्वेवमपि तदन्तत्व कथमत आह— तदन्तत्व मिति । अत्र मूलमाह— छिन्नेति । तच्च यस्माद्विहितस्तत्त्वव्यवहाररूपम् । लोक न्यायसिद्धमिति । भूयावयवदर्शन जात यत्कामितिमूलकारूपलोके यायन्थ । एता प्रमाणयति— अत एवेति । लोकसंवतदाकारादित्यर्थ । विकृतेति । इका रामात्रस्वरूपविकारविशिष्टनिर्देश इत्यर्थ । एतदेवेति । लोकसिद्धायाश्रयणमत्रेत्यर्थ । एतेनाय न्यायोऽपि स्थानषष्ठीनिर्दिष्ट एवेत्यपास्तम् । भवत्यषेति । एव चैकदेशविकृता ऽप्यर्थबोधक, अन्यथा न्यायेन शब्दस्वरूपाभेदप्रतिपादनेऽपि उत्तरीयाथाबाधकत्वेनाथ स्यावधित्व न स्यादिति तात्पर्यम् । एतेनेति । लोकसिद्धस्य 'प्राग्दीव्यत' इत्यनेन ज्ञापितत्वेनेत्यर्थ तत्रोभयोरभावादिति भाव । नन्वत्र विकृतावयवप्रयुक्तमपि कार्य स्यादत आह— विकृतेति । 'व्यवहारवत्' इति पाठ । दुरुपेति । जातिव्यञ्जकभूयावयवदर्शन-

णेऽपि नायम्, उक्तयुक्तेः। एतत् 'येन विधिः—' इत्यत्र भाष्यकैयटयोर्ध्वनितम्। यत्र त्वर्धं तदधिकं वा विकृतम्, तत्र जातिव्यञ्जकभूयोवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतानल्परूपावयवतत्त्वप्रतीत्यर्थं च स्थानिवत्सूत्रम्। क्वचित्तु लक्ष्यानुसारान्न्यायानाश्रयणम्; तेनाभीयादित्यादिसिद्धिः। स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः 'प्रथमयोः पूर्वसवर्णः' इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः॥ ३७॥

---

स्यैतद्व्यञ्जकत्वादिति भावः। 'व्यवहाराभाववत्' इति पाठे तु उक्तहेतोर्यथा तद्व्यवहाराभावस्तथास्य तद्व्यवहारो दुरुपपाद इत्यर्थः। एवं तत्रैव। अक्केति। अत्र परिमाणमानुपूर्वीविशेषोऽपि। परिमाणेत्युपलक्षणं परिच्छेदकमात्रस्य; तथा च परिच्छिन्नपरिच्छेदकत्वकार्यग्रहणं इत्यर्थः। अत एव द्रोणादिवत्सङ्ख्याया अपि भाष्ये दृष्टान्तत्वेनोल्लेखः। उक्तेति। उक्तरीतेरित्यर्थः। जातिव्यञ्जकभूयोवयवदर्शनस्य सर्वकादौ सत्त्वेऽपि सर्वाद्यानुपूर्वीविशेषोपादानेन क्रियमाणसर्वनामसंज्ञायास्तत्र तत्त्वतदन्तत्वयोरभावेन दुरुपपादत्वादिति यावत्। अत्र मानमाह— एतदिति। अव्यवहितोक्तमित्यर्थः। भाष्येति। इदमुपलक्षणम्— यस्मात्प्रत्ययविधिरिति सूत्रस्थभाष्यस्यापि; तत्र हि पञ्चद्रोणादिदृष्टान्तेन उक्तस्थले तदभावमाशङ्क्य 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति समाहितम्; यदि तत्रैतत्प्रवृत्तिः, तर्हि अधिकागच्छारिसत्त्वेऽपि शुनः अत्वत्वदकत्राधिकस्य सर्वकस्य सर्वशब्दत्वमक्षतमेवेति भाष्यासगतिः; अतस्तत्रेति तदाकूतमिति भावः। नन्वेवं स्थानिवत्सूत्रं व्यर्थमत आह— यत्र त्विति। अर्धम् एहरित्यादिना। तदधिकं अरत्नीत्यादिना। तत्रेति। उभयत्रेत्यर्थः। अस्य सिद्ध्यर्थमित्यादावन्वयः। फलान्तरमाह— विकृतेति। इदमुभयमनेनातिक्रमितिमुक्तमिति भावः। नन्वेवमप्यनयाभीयादित्यादौ दोषोऽत आह— क्वचित्त्विति। न्यायेति। एतन्न्यायेत्यर्थः। उक्तं द्रढयितुं सामान्यरूपेण दृष्टान्तमाह— स्पष्टं चेति। न्यायेति। न्यायत्वावच्छिन्नेत्यर्थः। तत्र हि जश्शसोः पररूपबाधाय 'प्रथमयोः' इति योगविभागेऽप्यतिप्रसङ्गपरिहारायाश्रितमध्येऽपवादन्यायन्यायान्यावसरे 'न्यायश्चायम्, न वचनम्। यद्वक्ष्यति— यदेतद्दर्शितीति। न हि वचनस्यासत्तासंभावना। न्यायस्तु क्वचित्क्वचिदाश्रीयत इति युज्यते वक्तुमिति तेनोक्तम्। वस्तुतोऽभीयादित्यादेरनभिधानमेव। अभिधानेऽपि यथा तत्र तदप्राप्तिस्तथान्यत्र स्पष्टम्; एवं च क्वचित्त्विति ॥ सिद्धान्तोक्तिः; किं तु कैयटानुरोधेन। अत एव तत्र दृष्टान्तकथनं सफलम्। आयसशब्दादणन्ताद्द्विवचने मायसाविसत्र वृद्धौ सान्तस्योगित्त्वेनानेन न्यायेनाहतया परस्य पूर्वादित्वेन सर्वनामस्थान-

**पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ ३८ ॥**

पूर्वात्पर बलवत्, विप्रतिषेधशास्त्रात्; पूर्वस्य परं बाधकमिति यावत् ॥
नन्वेवं भिन्धकीत्यत्र परत्वाद्विना बाधितोऽकच् न स्यादत आह—

---

तया च प्राप्तस्य नुम पूर्वसवर्णनिषेधेन 'अच परस्मिन्—' इति स्थानिवत्त्वेन तत्रैव भाष्ये वारणात् भाष्यसमतापीयम्। एतदभावे त्वाङ्गत्वमेव दुर्लभमित्यादि शब्देन्दुशेखरे स्पष्टमिति बोध्यम्, तदाह— **अन्यत्रेति** ॥ ३७ ॥

निषेधप्रसङ्गादाह— **पूर्वपरेति**। इत आरभ्य 'उपजनिष्य—' इति पर्यन्तमस्यैव प्रपञ्चेन प्रपञ्च, तदाह— **पूर्वादिति**। परिभाषाया हेत्वनुक्तेराह— **विप्रेति**। एव-मपेऽपि। ननु पलत्वस्यमात्रोक्त्या नेष्टसिद्धिरत आह— **पूर्वस्येति** ॥ ३८ ॥

एवं परस्य पूर्वबाधकत्वाङ्गीकारे। 'भिन्धकीत्यत्र परत्वाद्विना बाधितोऽकच् न स्यात्' इति पाठ। 'भिन्धीत्यत्र परत्वात्तदा बाधितो धिर्न स्याद' इति स्वपपाठ, 'अचश्च' इति सूत्रस्यभाष्यकैयटादिविरोधात्। तत्र हि अच्समुदायनिवृत्त्यर्थम् 'ऊकाल—' इत्य-प्राज्ग्रहणम्। तेन तितउच्छत्रमित्यादौ 'दीर्घात् पदान्ताद्वा' इति वा तुडनेति भाष्ये परत्वाद्दीर्घत्वे वैकल्पिके तुकि सकृद्गताविति न्यायाद्ध्रस्वलक्षण पुनर्न प्रवर्तते। यतो नेदृशे विषये पुन प्रसङ्गन्याय, नित्यविकल्पयोर्विरोधात्पश्चात्तेन पूर्वेण पूर्वजातपरस्य प्रवृत्त्यफलत्वलक्षणबाधप्रसङ्गात्। तस्माद्विकल्पविधिप्रवृत्तेर्वैयर्थ्यापत्त्या नित्यस्य बाध एव। तर्हि पुन प्रसङ्गविज्ञानमिति चेत्, शृणु— यत्र पूर्वो विधि पर न बाधते तत्र क्वचित्तदाश्रीयते, यथा भिन्धकीत्यादौ परत्वात् हौ कृते पुन प्रसङ्गविज्ञानादकच्। न हि तत्र ध्यकच्कृत्योर्विरोध। एवमीजतुरित्यादावपि बोध्यमिति कैयटेनोक्तमिति केचित्। वस्तुतस्तु— अयुक्त स कैयट, 'ई च द्विवचने' इति सूत्रस्यभाष्यकैयटवृत्तिहरदत्तादि-ग्रन्थविरोधात्। तत्र हि 'अक्षी ते इन्द्र पिङ्गले' इत्यादौ अक्षि औ इति स्थिते नुमः परत्वादीकारे सकृद्गतिन्यायात्पुनस्तदभावे शीभावे पूर्वसवर्णे रूपसिद्धिरित्युक्तम्। भवद्रीत्या तु तत्र पुन प्रसङ्गविज्ञानस्य विषय, नापरस्य। किञ्च 'साक्षात्प्रभृतीनि—' इति सूत्रस्य-भाष्यकैयटविरोध। तत्र हि— 'च्व्यन्तस्य प्रतिषेधो वाच्य, लवणीकृत्य। अन्यथात्र परत्वाद्विकल्प स्यात्। नित्या गतिसंज्ञेष्यते। न वा पूर्वेण कृतत्वात्। अस्त्वनेन विभाषा, पूर्वेण नित्या भविष्यति। परत्वाद्विकल्पेऽपि तदभावे पुन प्रसङ्गविज्ञानान्नित्यविधिप्राप्त्या न दोष' इत्युक्तम्। भवद्रीत्या तु तत्र सकृद्गतिन्यायस्य विषय, नापरस्य। स्पष्ट चेद भाष-

## पुनः प्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥

नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशे पुनस्त्रयादेशः स्यादत आह—

## सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ ४० ॥

तत्र क्वचिच्चरितार्थयोरेकस्मिन्युगपदुभयोः कार्ययोरसंभवेन बाधकाभाव-

---

प्रकाशे । तस्मादेतदन्यतरन्यायाश्रयणे लक्ष्यानुरोध एव बीजमिति तत्त्वम् । इदमेव ध्वनयितुमग्रे वक्ष्यति— तत्र लक्ष्यानुसारादित्यादि । तत्तरयोरित्येतत्तु कैयटानुरोधेन । तद्भाष्य तु एवमपि सुयोजम् । एव च प्रचुरः स पाठोऽपि नायुक्त एव । योजना चित्थम्— भिन्धीत्यत्र धिर्भे लात् । तत्र हेतुगर्भविशेषणमाह—परत्वाच्चातकृता बाधित इति । 'यतः पक्षान्तरे भिन्तादित्यादौ' इत्यादि, लक्ष्ययोः साजात्यनैक्यात् विकल्पशास्त्रस्य लक्ष्यद्वये तात्पर्येणोभयलक्ष्यन्तत्वाच्च । अत एव 'पुन. प्रसङ्ग—' इति न्यायसञ्चारेण सिद्धान्तोक्तिसंगतिरपि । न चैव भिन्तादित्यत्रापि तदापत्तिः स्थानिवत्त्वादिति वाच्यम्, प्रतिलक्ष्यं लक्षणभेदेन तद्विषयतात्कशास्त्रस्यानर्थक्यापत्ते. । एतेन भवताद्विन्नुतादित्यादौ चरितार्थमित्यपास्तम्; अत्रापि 'अतो हे.' 'उतश्च प्रत्ययात्—' इति लुकः प्राप्तत्वाच्च । किंच परिभाषाणामिष्टसिद्धिमात्रफलकत्वम् । अत एव कुरुतादित्यत्र पुनर्लुगभावः सकृद्गतिन्यायेन विप्रतिषेधसूत्रे कैयटेन साधितः; अन्यथा 'अन्तरङ्गानपि—' इति न्यायेन परादपि लुको बलवत्त्वेन तदसंगतिः स्पष्टैव । एव च न्यायाश्रयणे लक्ष्यसिद्धेरेव मूलत्वेन अत्रैवाशाभेदेनोभयोराश्रयणमपि सुवचमिति बोध्यम् ॥ ३९ ॥

एवं सर्वत्र पुनःप्रसङ्गविज्ञानाङ्गीकारे । **पुनरिति** । स्थानिवद्भावेनेति भावः । **सकृदिति** । गतौ शास्त्रयोः प्राप्तौ सत्यां यो विप्रतिषेधस्तस्मिन् सति सकृदेकवारं यद्बाधितं तद्बाधितमेवेत्यर्थ. । यद्वा गत्यभिन्ने विप्रतिषेधे, अन्यत्र लब्धावकाशयोरेकस्मिन् युगपदसंभावितप्राप्तेरेव विप्रतिषेधपदार्थत्वेनोक्तत्वात् । अन्यत्प्राग्वत् । पूर्वपरिभाषार्थस्तु स्पष्ट इति नोक्तः । तथा च लक्ष्यानुरोध एवान्यतरन्यायाश्रयणे बीजमिति नोक्तदोष इति भावः । अनयोरन्यमूलं प्रत्यासत्त्या आह— **तत्रेति** । तयोर्मध्य इत्यर्थः । **क्वचित्** अन्यतरविषये । एकस्मिन् लक्ष्ये । असंभवप्रसक्त्योपविरोधाय पर्यन्तामयोर्निवेशः । **असंभवेनेति** । विरोधादिति भावः । **बाधकाभावादिति** । अनेनोत्सर्गापवादवैधर्म्यं दर्शितम् । न च दृष्टान्तदार्ष्टान्तिकयोः पर्यायप्रसङ्गे हेतु' । वचनद्वयप्रामाण्यादिति तदाशय. ।

स्पर्यायेण तृणादिवच्छास्त्रद्वयप्रसक्तेः नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्याय-सिद्धिः। यथा तुल्यबलयोरेकः प्रेष्यो भवति, स तयोः पर्यायेण कार्यं करोति; यदा तमुभौ युगपत्प्रेषयतः, नानादिक्षु च कार्ये; तदोभयोर्न करोति, यौगपद्यासंभवात्; तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसंभवाद्-प्रतिपत्तौ प्राप्तायामिदं परविध्यर्थमिति, तत्र कृते यदि पूर्वप्राप्तिरस्ति तर्हि तदपि भवत्येवेति पुनः प्रसङ्गविज्ञानसिद्धिरिति विप्रतिषेधसूत्रे भाष्ये स्पष्टम्। यत्तु कैयटादयः— व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयो-स्तत्तल्लक्ष्यविषययोश्चरितार्थत्वेन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिद-मिति सकृद्गतिन्यायसिद्धिः। अत्र पक्षे एतन्नियमवशादेतल्लक्ष्यविषयकपूर्वशास्त्रानुपप्लव एव। जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासंभवरूपविरोधस्थले उभयोरप्यप्राप्तौ परविध्यर्थमिद-

---

ननु शास्त्रप्रसक्तोऽपि कार्यार्थं एवेति कार्ययोर्युगपदसंभवे कथं शास्त्रयोः प्रसङ्गोऽत आह— **तृणादीति**। एवं च युगपदसंभवः, पर्यायेणोभयप्रसङ्ग इति तात्पर्यम्। तथा च पक्षे प्राप्त्या तन्त्रान्तरप्रसिद्धनियमाविधिरेवायमित्यप्राप्तांशपरिपूरकत्वमेवास्य। इतरनिवृत्तिस्त्वार्थी। तद्द्योतक एवकार इति बोध्यम्। भाष्यमूलमाह— **यथेति**। अथ 'न करोति' इत्यत्रा-न्वयः। ननु तदाज्ञोल्लङ्घनेन तावच्चरितार्थात्वात आह— **तुल्येत्यादिकरोतीत्यन्तेन**। तथा च तुल्यबलत्वादेव पर्यायेणैव प्रेरणया प्रेष्यस्य मिथोऽविरुद्धकार्यकरणेन स्वामिनो चरि-तार्थौ यथा, तद्वदिति भावः। एकत्र तत्संभवादाह— **नानेति**। तत्रापि प्रदेशो सम्भवा-दाह— **दिक्ष्विति**। **कार्ये**, स्त इति शेषः। **यौगेति**। तयोर्यौगपद्येनासम्भवादित्यर्थः। **तस्यार्थेति**। अन्यत्र लक्ष्ये चरितार्थयोरित्यर्थः। **इदं** विप्रेति सूत्रम्। **तत्र** परस्मिन्। आदिना सीरदेवहरदत्तकौस्तुभकृटादय। अभिधेयवाच्यर्थत्वन्दस्याजहल्लिङ्गत्वादाह— **पदार्थ इति**। प्रतिः वीप्सायाम्। **उपप्लवः** तेषामाविर्भावः। अपितुविषययोरित्यग्रे योज्यः। द्वितीयोऽपिः प्राप्तावित्यग्रे। मिथः समुच्चायकत्वेन यथाश्रुतावेव वा। **इदं** विप्रतिषेधसूत्रम्। एतमग्रेऽपि। नन्वेवं तद्विषयकपूर्वलक्षणस्याप्रमाणत्वं स्यादत आह— **अत्रेति**। नियमपक्ष इत्यर्थः। **एतदिति**। विप्रतिषेधसूत्रेत्यर्थः। **क्वचित्** तत्तद्विषये। **सदिति**। साध्याभाव-साधकं हेत्वन्तरं यस्य, स सत्प्रतिपक्षः। तत्र यथा मिथः प्रतिबन्धादनुमितिद्वयं न, एवमत्रापीति भावः। **अप्यप्राप्तौ** अप्राप्तावपि। यथाश्रुतं वा। शास्त्र कर्तृ,

मिति पुनः प्रसङ्गविज्ञानासिद्धिरिति; नच, व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्ष इत्यत्र मानाभावात् 'न ब्राह्मणं हन्यात्' इत्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् । अत एव सरूपसूत्रे भाष्ये जातौ पदार्थेऽनवयवेन साकल्येन विधेः प्रवृत्तेर्गौरनुबन्ध्य इत्यादौ सकलगवानुबन्धनासंभवात्कर्मणो वैगुण्यमुक्तम् । द्रव्यवादे चासर्वद्रव्यावगतेर्गौरनुबन्ध्य इत्यादावेकः शास्त्रोक्तोऽपरोऽशास्त्रोक्त इत्युक्तम् । किं च न हि भाष्योक्ततृणादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्ष इत्यत्र मानमस्ति । अपि च व्यक्तिपक्षेऽपि अन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं व्यक्तिर्विरोधात्स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम् । जातिपक्षेऽपि

---

सर्वलक्ष्यं कर्म । ननु व्याख्यानमेव तत्र मानमत आह— न ब्राह्मणेति । व्यक्तीति । व्यक्तिविषयकत्वार्थमित्यर्थः । सर्वब्राह्मणहननिषेधायेति यावत् । भाष्ये एकशेषसूत्रस्थे । तमेव हेत्वन्तरं सूचयन्नाह— अत एवेति । जातिपक्षस्य व्यापकत्वादेवेत्यर्थः । अनवयवेनेत्यस्य व्याख्या— साकल्येति । जात्याश्रया व्यक्तिविशेषा अवयवा इत्युच्यन्ते । तथा च व्यक्तिविशेषानालम्बनेनेति तदर्थो बोध्यः । एवं च साकल्यं फलितम् । सकलेति । देशकालादिभेदेनानन्त्यादिति भावः । गवानुबन्धनेति पाठः, गो. पुस्तकात् । वैगुण्यमिति । तथा च फलानवाप्तिरिति भावः । प्रत्युत वैपरीत्ये मानमस्तीत्याह— द्रव्येति । चस्त्वर्थे । एकः शास्त्रोक्त इति । एक शब्दः प्रथमं निवेशितत्वादिकं द्रव्यं गोरूपं बोधयेत् । तस्य केनचिदनुबन्धे कृते शास्त्रार्थसम्पत्त्या परेस्तेन वा गवान्तरानुबन्धोऽशास्त्रार्थः स्यादित्यर्थः । स्वमत एतदसङ्गतिं स्पष्टैव । पक्षद्वयसाधारण्येन प्रतीयमानं विप्रतिषेधसूत्रभाष्यमपि विरुद्धमित्याह— । किं चेति । अयं भावः — उक्तं भाष्यं पक्षद्वयसाधारण्येन दृष्टान्तभेदेन पर्यायप्रतिपत्तौ ये प्राप्ते, तदाश्रयेण तद्वचनोपपत्तिपरम्, न तु जातिव्यक्त्याश्रयेणेति स्पष्टमेव, अन्यथा जातिपक्षप्रवृत्तामप्रतिपत्तिमुपक्रम्य, तव्यादिदोषाशङ्कापरभाष्यासङ्गत्यापत्तेः अनवकाशत्वेनैवात्र न परत्वेन व्यवस्थेति कैयटाद्युक्तस्यासङ्गत्यापत्तेश्च अंशे तृणादितुल्यतया एव तेषु प्रतिपादनाच्च । नहि तृणादयो व्यक्तिपक्ष एव सर्वविषयाः; अपि तु जातिपक्षेऽपीति । स्वदुक्तयुक्तिद्वयमपि मिथो व्यभिचरितमित्याह—अपि चेत्यादिगमकाभावाच इत्यन्तेन । अन्येति । विरोधाधारान्येत्यर्थः । इयं विरोधाधारभूता । कत्वमिति । चरितार्थयो.

तज्ज्ञात्याश्रयतद्व्यक्तिविषयकत्वमेव, नैतद्व्यक्तिविषयकत्वमित्यत्र विनिगमका-भावः । तत्र लक्ष्यानुसारात्क्वचिच्छास्त्रीयदृष्टान्ताश्रयणम्, क्वचिल्लौकिकदृष्टान्ता-श्रयणमिति भाष्यसंमतमार्ग एव युक्त इति बोध्यम् । द्वयोः कार्ययोर्युगपद्येना-संभव एव विप्रतिषेधशास्त्रोपयोगी । इदम् 'इको गुण—' इति सूत्रे कैयटे स्पष्टम् । यथा— शिटादित्यादौ तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमि-त्तानन्तर्यासंभवः । यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत्, तथाप्यादेशप्रवृ-त्त्युत्तरमेव सः, न तु तत्प्रवृत्तिकाले । एवं नुम्तृज्वद्भावयोः प्रियक्रोष्टूनीत्यादौ युगपदसंभवः, 'यदागमाः—' इत्यस्य नुम्प्रवृत्त्युत्तरं प्रवृत्तेः । एवं भिन्धीत्यत्र तातङ्धिभावयोर्युगपदेकस्थानिसंबन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चासंभवो बोध्यः,

---

युक्तयोरपि भावः । तद्व्यक्तीति । मिथोऽन्वयव्यक्त्योरित्यर्थः । नैतदिति । विरोधा-ऽध्यक्तीत्यर्थः । 'शासस्य' इति शेषः । उपसंहरति— तत्रेति । तयोर्मध्ये इत्यर्थः । तस्मात्' इत्यादिः । क्वचित् तिसृणामित्यादौ । शास्त्रीयदृष्टान्तः तृजादिरूपः । क्वचित् भिन्धीत्यादौ । लौकिकः दूतरूप. । युक्त इति । अत एव क्रुष्टात्वमिति कैयटोक्तसङ्करतिन्यायोदाहरणसङ्गतिः । अन्यथा क्रुष्टशब्दात्खलुगिति वचनस्य तातङ्-भावपक्षे चारितार्थ्येऽपि क्रुशब्दाद्विस्तातङात वचनस्यानवकाशत्वेन विप्रतिषेधा-प्रसक्त्या तदसङ्गतिः स्पष्टैवेति दिक् । भाष्यस्यैकस्मिन्नित्यस्य लक्ष्ये इत्यर्थोऽभिमत', न तु कार्यद्वयेऽपीति सूचयितुमाह— द्वयोरिति । 'अन्यत्र लब्धावकाशयोः' इत्यादिः । एतेनैकस्य कार्यद्वययोगित्वव्यवच्छेदः । शास्त्रोपेति । शास्त्रप्रवृत्त्युपेत्यर्थः । कैयट इति । 'नावश्यं द्विकार्ययोग एव विप्रतिषेधः । किं तर्हि? असम्भवोऽपि' इति भाष्ये 'द्विकार्ययोगत्वाभावे केवलोऽप्यसम्भवो विप्रतिषेधः' इति हि तेनोक्तम् । तमुपपादयति— यथेति । आदिना शाभावपरिग्रहः । तत् तत्तदानन्तर्यम् । सः स्थानिवत्त्वपदवाच्य स्थानिवद्भावः । एतेनान्यतरस्मिन् जाते निमित्तविघातादन्यतरस्य स्यादिति दण्ड्यादीनां विरोधोपपादनमपास्तम् । इदमेव ध्वनयितु बहुषु तमुपपादयति— एवमित्यादिना । एवं स्वस्वनिमित्तानन्तर्यासम्भवस्योक्तप्रकारेण । प्रवृत्तेरिति । आगमत्वसंपादकस्थानिवत्त्वस्य तृज्वद्भावप्रवृत्त्युत्तरं प्रवृत्तेरित्यपि बोध्यम् । एवं पूर्वत्र । प्रकारान्तरमप्यत्र सम्भवतीति प्राचामुक्तिमनुवदन्नाह— युगपदिति । ननु बुद्धिविपरि-णामस्य सिद्धान्तत्वेन वास्तवस्थानिसम्बन्धः क्वापि न; प्रकृते उभयबुद्धिप्राप्तावपि बाधः

नुम्नुटोरपि नुटि अजादिविभक्त्यानन्तर्यबाध, नुमि ह्रस्वान्ताङ्गबाध इत्युभय-बाद्विप्रतिषेध । क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात् स्वरितेनाधिक कार्यमित्यर्थात्पूर्वमेव भवति । तेन सर्वे पूर्वविप्रतिषेधा सगृहीता इति 'स्वरितेन—' इति सूत्रे भाष्ये, विप्रतिषेधसूत्रस्थपरशब्दस्य इष्टवाचित्वात्तत्सग्रह इति विप्रतिषेधसूत्रे भाष्ये ॥ ४० ॥

नन्वेवम् एधत इत्यादौ परत्वाद्विकरणे 'अनुदात्तङित —' इत्यादिनियमानुपपत्ति, तेन व्यवधानादत आह—

## विकरणेभ्यो नियमो बलीयान् ॥ ४१ ॥

अत्र 'वृद्भ्य स्यसनो' इति सूत्रेण स्ये विभाषातङ्विधान ज्ञापकम्,

---

क्रमवृत्तित्वादैच्छिकक्रमेण स्थिति सम्भवतीति भेद युक्तमत प्रागुक्तमेवाह— अङ्गनिरूपितेति । नुम्नुटोरपीति । अत्यासमत्वादान्वय । पूर्वापर प्रबलमित्यस्यासार्वत्रिकता-माह— क्वचिदिति । पूर्वविप्रतिषेधविषय इत्यथ । अनेन परत्वेन निरास, तुल्यजातीयत्वात् । किंच यादृशदौर्बल्ये प्रसक्ते प्राबल्याय स्वरितत्व प्रतिज्ञायते तदेव दौर्बल्य तेनापनीयते, तदेतत् ध्वनयन्नाह— पूर्वमेवेति । तेन तथार्थेन । प्रकारान्तरमाह— विप्रेति । तत्सग्रह इति । सकलपूर्वविप्रतिषेधसग्रह इत्यर्थ । नन्वेव 'स्वरितेन—' इति सूत्र तथार्थत्वमपि व्यर्थमिति चेत्, न, अन्यार्थं तथार्थत्वस्य तस्यावश्यकत्वस्य तत्र भाष्य एव स्पष्टत्वात्, उपायस्योपायान्तरादूषकत्व हि तदाकूतमिति भाव ॥ ४० ॥

एवं पूर्वविप्रतिषेधविषयादन्यत्र सर्वत्र परस्य पूर्वबाधकत्वे । एधत इत्यादावधिति । आदिना पचत इत्यादिसग्रह । 'पचत इत्यादौ' इति त्वपपाठ, धातुपाठे प्राक्पठितत्वत्याग मानाभावात् । अत एव 'अनुदात्त—' इति दोषसगति, तदपि प्रागेव सूत्रपाठपठितम् । 'स्यादे परत्वाच्च तिबादिषु सत्सु' इति शेष । यथा नियमत स्यादे परत्वम्, तथा स्यादितो लादेशानामिति बोध्यम् । तेन विकरणेभ्य इत्यत्र परिभाषायाम् । स्ये 'परत' इति शेष । भतोऽडिति छेद, परस्मैपदमिति तदर्थ, तङित्यस्यात्मनेपदोपलक्षणत्वात् । एवमुक्ते फल [illegible] तस्य प्रतिप्रसवविधिपरसूचनम् । तङितिच्छेद, परस्मैपदविकल्पेन पक्षे तद्वि-

गुणभेदकल्पनात्तावत्प्रकृतिकल्पनया कार्या । प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः ॥ ४१ ॥

**परान्नित्यं बलवत् ॥ ४२ ॥**

कृताकृतप्रसङ्गित्वात् । तत्राक्लृप्ताभावकल्प्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे बीजम्; तदाह—

**कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम् ॥ ४३ ॥**

अत एव तुदतीत्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ॥

यद्व्यक्तिसंबन्धितया पूर्वं प्रवृत्तिः, तद्व्यक्तिसंबन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाह—

---

**सामान्येति** । तुल्यार्थं कार्येणाग्रे योज्यः । **सरूपेति** । तत्र हि 'यथैव पहवौ यत्र, एव प्रकृतयोऽपि' इत्यत्र भाष्ये 'एकत्रप्रापत्यस्य प्रकृत्यर्थेन योगात्प्रधानभेदे च गुणा- भूत्वा गार्ग्यशब्दानामेकशेषः क्रियते' इति तेनोक्तम् । प्रातिपदिकोद्देशेन तद्विधानात् प्रातिपदिकार्थस्य तत्र विशेषणत्वाद्गुणतेति तदाशयः, तदाह— **प्रधानेति** । किं- कस्मादनेकथा परत्वासम्भवादित्यपि बोध्यम् । **निवृत्तौ चेति** । च कल्प्येत्यग्रे योज्यः । एव च दोषत्रयं तत्र स्थितम् । **तत्केति** । प्रत्ययकल्पितेत्यर्थः । यदि ॥ लुगादिनियमे- नाप्यनुत्पत्तिरेवान्वाख्यायते, तदायपक्षेऽपि निदुष्यादित्यादि बोध्यम्, तदाह— **इत्यन्यत्रेति** । उद्द्योतादावित्यर्थः ॥ ४१ ॥

**कृतेति** । तथा चावश्यकत्वमिति भावः । कृताकृतप्रसङ्गित्वस्य बलवत्त्वप्रयोजकत्वं न वाचनिकं, किं तु युक्तिसिद्धमित्याह— **तत्रेति** । परनित्ययोर्मध्य इत्यर्थः । **तत्क-** **ल्पनमिति** । अभावकल्पनमित्यर्थः । **उचितमिति** । उपस्थितिलाघवादिति भावः । इति इदम् । **नित्यस्य** आवश्यकत्वं । अत्रायोगफलमाह— **अत एवेति** । आदिभ्यां गुणवृत्त्यादौ श्नमादिपरिग्रहः ॥ ४२ ॥ ४३ ॥

द्वितीयांशं प्रपञ्चयितुमाह— **यद्व्यक्तीति** । **तद्व्यक्तीति** । गुणाश्रितः एका-

**शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४४ ॥**

इदम् 'शदे: शित' इति सूत्रे भाष्ये स्पष्टम् । तत्र हि न्यविशतेत्यत्र विकरणे कृते तदन्तस्याट्, अकृते धातुमात्रस्येत्यडनित्य इत्युक्तम् ॥ ४४ ॥

तुल्यन्यायेनाह—

**शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चा-
नित्यत्वम् ॥ ४५ ॥**

एतन्मूलकमेवाह—

**लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४६ ॥**

अतिदेशविषय इयमसिद्धवत्सूत्रे कैयटेनोक्ता ॥

---

देश इत्यारभ्येव 'सार्वधातुकमपित्' इति भाष्योदाहृते व्यचन्त इत्यादौ अध्यापयन्नादौ चेत्यर्थः । एष च न्यायमूलैव न वाचनिकीति भाव । इद न्यायस्य वचनम् । अडिति । 'उक्तन्यायसत्त्वं कृत्वा' इति शेष ॥ ४४ ॥

**तुल्यन्यायेनेति** । प्राप्नुवतश्चानित्यत्वमूलभूतयुक्तितुल्यतयेत्यर्थः । यद्वर्तिकालसन्निपातया पूर्वं प्रवृत्तिलक्षणनिमित्तविघातेनाप्राप्त्या कृताकृतप्रसङ्गित्वाभाव इति हि प्रागुक्ते वचने मूलम्, तच्च शब्दान्तरात्प्राप्नुवतोऽपि तुल्यमिति भाव । **चतश्चेति** । 'विधे' इति शेष । एष च 'तद्विपरीतम्' इत्यस्यैव प्रपञ्चभूत एते इति बोध्यम् । इदं भाष्ये स्पष्टम् ॥ ४५ ॥

**एतदिति** । उक्तपरिभाषाद्वयमूलकमेवेत्यर्थः । एतेनापूर्वत्वनिरासः । **लक्षणान्तरेणेति** । उपदेशान्तरेणेत्यर्थः । तदाह— अतीति । **असिद्धवदिति** । 'असिद्धवदत्राभात्' इत्यत्रेत्यर्थः । तत्र हि कुरु इत्यादौ नित्यत्वात्प्रागुकारलोपस्ततो गुणः । कृते हि तस्य प्रत्ययलक्षणेन गुण इत्येतन्न्यायेनानित्य स इत्युक्तम् । **कैयटेनेति** । अनेनात्र भाष्योक्तत्वनिरासः । अत एव 'एतन्मूलकमेव' इत्यवतरणे उक्तम् ॥ ४६ ॥

यदा तु शास्त्रव्यतिरेकेण तद्विषयकार्ययोरेव नित्यत्वादिविचारः; यदापि व्यक्तिविशेषाश्रयणाभावः; तदाह—

**क्वचित्कृताकृतप्रसङ्गित्वमात्रेणापि नित्यता ॥ ४७ ॥**

कृते द्वितीये नित्यत्वेनाभिमतस्य पुन प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकम्; न तु बाधकाबाधितफलोपहितप्रसङ्गोऽपि तथेति भाव.; तदाह—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४८ ॥**

क्वचित्तु बाधकाबाधितफलोपहितप्रसङ्ग एव गृह्यते; तदाह—

---

नन्वेवं तुदतीत्यत्रासिद्धिरेव शब्दान्तरालक्षणान्तरेण च तत्र कृते प्रसिरत आह— **यदा त्विति । शास्त्रव्यतीति ।** अनेन लक्षणान्तरेणेत्यस्याविषयता सूचिता । **व्यक्तिविशेषेति ।** यद्वृत्तीत्याद्युक्तेत्यर्थः । अनेन तन्न्यायद्वयाविषयता सूचिता, **तदाहेति ।** तदा आहेत्यर्थः । **क्वचिदिति ।** तुदतीत्यादावित्यर्थः । मात्रपदेन शास्त्रव्यतिरेकेणेतदुभयवैशिष्ट्यस्य कार्ये व्यवच्छेदः । अपि साक्षविकयद्वृत्तीत्यादिसमुच्चायकः । परिभाषान्तरं वक्तुं मात्रपदव्यवच्छेद्यत्वेन सभावितपूर्वान्याधिकाराघटितमस्या आशयमाह— **कृत इति । अभिमतस्य** कार्यस्य । मात्रपदव्यवच्छेद्यमाह— **न त्विति ।** बाधकाबाधितत्वेऽपि कारणान्तराभावेन फलानुपहिते तन्निरासायाह— **फलोपेति ।** 'प्रसङ्गोऽपि' इति पाठ । अपिः प्रागुक्तसमुच्चायकः, तेन तस्यापि व्यवच्छेदः । अत एव पूर्वसङ्गतिः । **तथा** तद्व्यवहारप्रयोजकः ॥ ४७ ॥

**तदाहेति ।** अधिकाशाकयकमाहेत्यर्थं, एवं च तत्प्रपञ्चभूतैवेयमिति भाव ॥ **यस्य चेति ।** कार्यस्येत्यर्थः एनेन प्रागुक्तप्रसङ्गान्याप्तिः ॥ ४८ ॥

**गृह्यत इति ।** तद्व्यवहारप्रयोजकत्वेनेति भावः । अपिस्तद्विपरीतप्रागुक्तरूपसमुच्चायकः । अनयोर्न वाचनिकत्वं किं तु लोकन्यायसिद्धत्वमित्याह— स्वतन्त्र

## यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४९ ॥

सप्तमे कैयटेनैतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम्— 'वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालिनः प्राबल्यं न व्यवहरन्ति; भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति च' इति । सर्वं चेदं लक्ष्यानुरोधाद्व्यवस्थितम् ॥ ४९ ॥

"लुटः प्रथमस्य—" इति सूत्रे भाष्ये—

## स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति ॥ ५० ॥

इति पठ्यते । यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च, तत्रेच्छयान्यतरत्तदुभयं वा तस्य बलवत्त्वे नियामकमुल्लेख्यम् । अत एव तत्र तत्र 'परत्वान्नित्यत्वाच्च' इति भाष्य उच्यते । वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः । स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे । 'णौ चङि—' इति ह्रस्वापेक्षया नित्यत्वा-

---

इति । 'ह्रस्वनद्यापः' इति सूत्र इत्यर्थः । तत्र हि तत्कुलमि त्यादावलुक्तो: प्राप्तौ परादत्वादित्याशङ्क्य 'अलुगित्युक्ते, 'अनित्यो लुक्' । न हि कृतेऽत्वे प्राप्नोति; अमा भाष्यम्' इत्युक्तं भाष्ये । एतदुपपादयति । उभयोरपीत्यर्थः । वालीति । सतिसप्तमी, निर्धारणषष्ठी वा । भगवता श्रीरामेण । 'वालिन.' इति पञ्चमी । व्यवहरन्ति 'शूरमानिनः' इति शेषः । भगवदिति । वासुदेवेत्यर्थः । प्राबल्यम् 'कौरवेभ्यः' इति शेषः । नन्वेवमप्यतिप्रसङ्गः सर्वेषां तदवस्थोऽस्त आह— सर्वं चेदमिति । कृताकृतेत्यारभ्य यदुक्तमित्यर्थः ॥ ४९ ॥

स्वरभिन्नेति । स्वरेण भिन्नस्येत्यर्थः । श्वः कर्तेत्यादौ 'तास्यनुदात्तेत्—' इत्यादिना, तत्र डादेशविप्रतिषेधविचारे द्वयोर्नित्यत्वमुक्त्वा, निघातस्य नित्यत्वमुक्तरीत्योक्त्वा, डादेशस्य चानित्यत्वमुक्तं तत्र भाष्ये । तदुभयं परत्वनित्यत्वोभयम् । तस्य कार्यस्य । तत्र तत्रेत्यस्य भाष्य इत्यनेनान्वयः । तत्र भाष्ये । एकदेशिन इति । नित्यानित्ययोर्विप्रतिषेधा-

न्तरङ्गत्वयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम् । एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासंभव एवेति बोध्यम् ॥ ५० ॥

नित्यादप्यन्तरङ्गं बलीयः, अन्तरङ्गे बहिरङ्गस्यासिद्धत्वात्; तदाह—

**असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५१ ॥**

अन्तः मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये अन्तर्भूतानि अङ्गानि

---

सम्भवादिति भावः । तदाह— स्पष्टं चेदमिति । तत्र हि 'कार्यमित्यन्तरङ्गं कार्य ।' कारणीभूय कार्यम् । तुल्यबल च तथेति नित्यानित्ययोरुत्सर्गापवादान्तरङ्गबहिरङ्गेष्वस्य सूत्रस्याव्यापार इत्युक्तं तेन । एव च तत्र नित्यत्वादित्येव भाष्यम् । यत्राप्युभयसम्भवः प्रकारान्तरेण तत्रोक्तरीत्या विकल्पेनेष्टसिद्धावपि प्रथमोपस्थितत्वात्तयोर्बोधित एव; तदाह— णौ चेति । भाष्ये 'णौ चङि—' इति सूत्रे । पूर्वमिति । परस्येत्यर्थः ; बोध्य-मित्यत्रान्वयः ॥ ५० ॥

निमित्तानि यस्य तत् अन्तरङ्गम् । एवं तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम् । एतच्च 'खरवसानयोः—' इति सूत्रे असिद्धवत्सूत्रे च भाष्यकैयटयोः स्पष्टम् । अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते, शब्दशास्त्रे तस्य प्रधानत्वात् । तेनार्थनिमित्तकस्य न बहिरङ्गत्वम् । अत एव 'न तिसृचतसृ' इति निषेधश्चरितार्थः; अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिसृपेक्षयान्तरङ्गत्वात् त्रयादेशे तदसंगतिः स्पष्टैव । अत एव त्रयादेशे 'ह्रस्वनद्य

---

मानप्राप्तिरन्येतत्त्रितयविषयकम् । अत एव तदनन्तरं क्वचित्प्रवृत्तिः, क्वचिन्न । एतच्चामस्तु लोकतो ज्ञापकाच्च यथायथं बोध्यं । लक्ष्यानुरोधेन सर्वेषां व्यवस्थेति न दोषः क्वापि । एतदन्यपक्षद्वये तु तस्यासिद्धतानियामकं ज्ञापकस्यैवेति पुनर्बहिरङ्गस्य प्रसङ्ग एव न, क्रमग्रहणासंभवेन लाभात् । एवं चेदं युगपत्प्राप्तिविषयकं न । तत्राद्यः पक्षः— पचन्त्येत्यादौ क्रमेणान्वाख्याने । अन्यलक्ष्याण्यग्रे द्रष्टव्यानि । द्वितीयः— त्रिशीह इत्यादौ । तृतीयाद्यः हद्दोडित्यादौ । तदन्यः— विभक्त्यन्तान्वाख्याने पच्यस्येत्यादौ प्रादुदुवदित्यादौ चेति बोध्यम् । अत्र अङ्गशब्दः सन्निविशेषस्य शरीरावयवस्य वा न वाचकः, किंतु उपकारकवाची; तदाह— निमित्तानीति । बहुवचनं लक्ष्याभिप्रायम् । बहुव्रीहिणा सर्वलिङ्गत्वमनयोः सिद्धम् । अथ निमित्तशब्दः स्यान्यादेर्विशेषणपरोऽपि, कार्यानुभवतस्तत्त्वेनानाश्रयणस्य अन्यत्रापि 'न हि कार्यी—' इति न्यायेन स्वीकारादिहापि तस्य स्वीकारेण स्थान्यादेस्तत्त्वाभावेऽपि तद्विशेषणस्य तत्त्वेनाश्रयणात् भाष्यसंमतत्वाच्च । यद्यपि 'गुणाना च—' इति न्यायेनेह तदप्रवृत्त्या तस्यापि तद्विशेषणस्येवानाश्रयणे मानाभावात् तस्य तत्परत्वमपि संभवति, तथाप्यनित्यतया 'गुणाना च' इत्यस्याप्रवृत्तिः, 'न हि कार्यी—' इत्यस्य लोकसिद्धत्वाच्च । इदमनुपदमेव स्फुटीभविष्यति । एवमिति । उक्तरीत्येत्यर्थः । तदीयेति । अन्तरङ्गशास्त्रीयेत्यर्थः । इदं शेषपूरणलभ्यम् । बहिरिति । बहिर्भूतानि अङ्गानि यस्येत्यर्थः । बहिःशब्दार्थबहिर्भूतत्वं च उक्तवैपरीत्येन । एवं परस्परापेक्षया व्याप्यनिमित्तकमन्तरङ्गं व्यापकनिमित्तकं बहिरङ्गमित्युत्सर्गः; अल्पनिमित्तकं बहुनिमित्तकं चेति यावत् । उक्तार्थं समूलयति— एतच्चेति । खरेति । तत्र हि 'अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्वसाकाङ्क्षावेतावर्थौ' इत्युक्तम् । निमित्तत्वस्यार्थगतत्वेऽपि सत्त्वेन तत्कृतातिप्रसंगं निराचष्टे— अत्रेति । परिभाषायामित्यर्थः । निमित्तमेवेति । सप्तम्याद्यन्तोपात्तप्रयोगस्थशब्दरूपमेव निमित्तमित्यर्थः । तस्य शब्दस्य । एवं च 'प्रधानाप्रधानयोः—' इति न्यायेन सामान्यरूपेण विशेषपरः । तेन तद्ग्रहणेन । बहिरङ्गत्वम् 'परिभाषा-

बाधते, गुणं त्वन्तरङ्गत्वाद्बाधते । गुणो ह्यङ्गसंज्ञानिमित्तलक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति । ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते यण्गुणौ प्राप्नुतः' इति । एवं च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत्, न; तदन्तविधावपि बहुपदार्थापेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासंगतेः, बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादया अलाभाच्च । तथा सति 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येव वदेत् । अत एव विप्रतिषेधसूत्रे भाष्ये 'गुणायणादेशोऽन्तरङ्गत्वात्' इत्यस्य स्थाने इत्युदाहरणम्, न तु 'गुणादूडन्तरङ्गत्वात्' इत्युक्तम् । त्वद्रीत्या तदपि वक्तुमुचितम्; प्राथम्यात्तदेव वा वक्तुमुचितम् । मम त्वन्तरङ्गपरिभाषया तद्वारणासंभवात्तन्नोक्तम् । किं च

---

श्रय । तयोस्तत्र आह— **गुणो ह्यङ्गेति** । 'इकारस्य' इति शेष । संज्ञाया अप्यत्र तत्त्वेन ग्रहणे प्रकारमाह— **अल्पापेक्षत्वादिति** । गुण पञ्चाश्रय, ऊठ्तु चतुराश्रय इति विवेक. । तत्र कृते ऊठि कृते । 'प्राप्नुत' इत्यत्र ऊठशब्दमाश्रित्यावृत्तिरनुसंधेया । प्रकृतमाह— **एवं चेति** । तथा दोषात्तत्र चेत्यत्र । प्रसङ्गादन्यदपि निराकर्तुमाह— **स्यापीति** । आपर्बहुपदार्थापेक्षमुपायनः । **तदन्तेति** । 'एव संज्ञादिबहुपदार्थापेक्षत्वेन तदन्ताङ्गाकारे' इत्यादि । **बहिरिति** । उक्तरीत्या पदार्थपञ्चकापेक्षत्वात् यणस्त्वगन्ताङ्गादद्वयमात्रापेक्षत्वादन्तरङ्गत्वमिति भाव । **तत्र** तदन्तविधौ । **दोषेति** । उक्तरीत्या गुण एव स्यादिति दोषेत्यर्थः । इदं चाभ्युपेत्योक्तम्, वस्तुतस्तदेव नेत्याह— **बहिरङ्गेति** । ननु तात्पर्येण लाक्षणिकप्रयोगोऽस्त आह— **तथेति** । तात्पर्येण प्रयोगे सतीत्यर्थः । **इत्येवेति** । निर्बीजलक्षणानौचित्यादिति भाव । उक्तार्थं द्रढयति— **अत एवेति** । तथा तदर्थमात्रादेवेत्यर्थ । **उदाहरणमिति** । 'दत्तम्' इति शेष । **न त्विति** । 'तत्र' इति शेषः । **अन्तरङ्गत्वादित्युक्तमिति** । 'अन्तरङ्ग इतीव.' इति परिभाषाफलकथनावसर इति भाव. । **त्वद्रीत्या** कैयटरीत्या । **उचितमिति** । तथा तयोस्तत्त्वयो. सत्त्वादिति भाव. । **तदेवेति** । तावतैव तस्याः स्फुटत्वादिद्धेरिति भाव: । **मम त्विति** । अस्य 'मते' इति शेष: । **तद्वारणेति** । उदा गुणवारणं व्यर्थं; संज्ञाकृतबहिरङ्गत्वसाधकतयार्थानाश्रयणेन समत्वादिति भाव । तत् प्राथमिकम् । ननु भाष्यान्यथानुपपत्त्या कैयटोक्तमावश्यकमत आह— **किंचेति** । 'यत्' इति

सिद्धान्ते नित्यत्वाद्गुणात्पूर्वमूठ् । गुणस्तु ऊठि यणा बाधितत्वादनित्य । 'ऊन शब्दमाश्रित्य' इत्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्तोपात्तं शब्दरूपं निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम् । यत्तु कैयटेन— 'तदन्तविधिपक्षे परत्वाद्गुणः प्राप्नोति' इत्युक्तम्, तत्तु ऊनशब्दमाश्रित्येत्यादिभाष्यासंगत्या चिन्त्यम् । वलिलोपे अन्तरङ्गपरिभाषा न प्रवर्तत इति तु न युक्तम्, तत्सूत्र भाष्य एव प्रश्चादिषु लोपातिप्रसङ्गमाशङ्क्य 'उपदेशसामर्थ्यान्न । न च वृश्चतीत्यादौ चारितार्थ्यम्, बहिरङ्गतया संप्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्ते' इति भाष्योक्तेः । यत्तु— नलोपस्य पदसंज्ञायामसिद्धत्वात् पञ्चेत्यत्र 'न

---

शेष० । **सिद्धान्त इति** । अनेन तदा तदसिद्धिरपि दोष इति भाष्याशय इति सूचितम् । **यणेति** । 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम्' इति न्यायेनेति भाव । उक्तार्थे भाष्यविरोधमप्याह— **ऊनेति** । 'यत' इत्यादि 'उक्तम्' इत्यन्ते च योज्य । 'सप्तम्याद्युपात्तम्' इति पाठः । आदिना पञ्चम्यादिपरिग्रह । अय भाव— उक्तरीत्या अङ्गशब्दो निमित्तपर, न तु स्थान्यादिपरोऽपि । निमित्तत्वं चात्र शास्त्र 'न हि कार्यी—' इति न्यायेन विधिषु यथा कार्यानुभवविशिष्टमात्रस्य न स्वीक्रियते अन्यस्य तु स्वीक्रियते, तथा अत्रापीति न स्थानिन आगमिनश्च तत्त्वेन ग्रहणम्, अन्यस्य तद्विशेषणस्य तत्त्वेन ग्रहणमस्त्येव, अग्रहणे मानाभावात् । यद्यपि 'गुणानाम्—' इति न्यायेन प्रकृते तदप्रवृत्त्या परादिनिमित्तवत् स्थान्यादेरपि ग्रहणं सुवचम्, तथापि अनित्यत्वात् 'गुणानाम्—' इत्यस्याप्रवृत्ति, 'न हि कार्यी—' इत्यस्य लोकसिद्धत्व चेति स्थान्यादिभिन्नस्य सर्वस्य ग्रहणम् । अत एव 'अन्तरङ्गानपि—' इति ज्ञापकपरभाष्यसंगति । तथा च तत्र पक्षे यन्निमित्तोभयान्तर्गतत्वेन भस्य इस्य ततो बहिष्ट्वाभाव । गुणनिमित्तभत्वादूनशब्दस्य बहिर्भूतोकारघटितत्वेन यणो बहिरङ्गत्वमिति । **परत्वादिति** । तदा द्वयो समत्वादिति भाव । **भाष्येति** । अन्तरङ्गत्वबहिरङ्गत्वबोधकभाष्येत्यर्थ । गौधेरादौ केनचिदुक्तसमाधिप्रकारस्य तद्विषयतामात्रेणासत्त्वेऽपि सत्त्वकैयटश्चिन्त्य एवेत्याशयिका कस्यचिदुक्तिं खण्डयति— **वलीति** । अनित्यत्वादिति भाव । **तत्सूत्रेति** । लोपो व्योरिति सूत्रेत्यर्थ । आदिना प्रश्नादिग्रहणम् । ल्यबन्तस्योक्तान्वय । आदिना वृश्चणादिपरिग्रहः । **संप्रसारणस्य** तदादेः । **तत्प्राप्तेः** वलोपप्राप्तेः । उक्तकैयटोक्तिवत् 'नलोप सुप्स्वर—' इति सूत्रस्थकैयटोक्तिमपि खण्डयति— **यत्त्विति** । **असिद्धत्वादिति** ।

पद्—' इति निषेध इति; तच्चिन्त्यम्, नलोपस्य हि पदसंज्ञापेक्षत्वेन बहिरङ्गत्वं वाच्यम्; तच्च न, संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् । पञ्चत्यत्र निषेधस्तु स्त्रियां यत्प्राप्नोति तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वपदत्वमादायेति बोध्यम् । अत एव कृति तुग्ग्रहणं चारितार्थम्, वृत्रहभ्यामित्यादौ पदत्वनिमित्तकत्वेऽपि नलोपस्य बहिरङ्गत्वाभावात् भ्यामः पदसंज्ञानिमित्तत्वेऽपि नलोपस्य तन्निमित्तकत्वाभावात् । परंपरया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम् । ध्वनितं चेदम् 'नलोपः सुप्—' इति सूत्र इति तत्रैव भाष्यप्रदीपोद्द्योते निरूपितम् । अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहि-

---

'बहिरङ्गत्वेन' इति शेषः । निषेध इति । टाप इति भावः । एवमग्रेऽपि । तच्चिन्त्यमिति । अस्य 'दुर्वचत्वात्' इति शेषः । तत्त्वमेवाह— नलोपस्य हीति । नन्वेवं पञ्चत्यत्र टापापत्तिस्तदवस्थैव । न च 'नलोपः सुप्स्वर—' इति निर्बाह्य, पदसंज्ञाया नलोपासिद्धत्वस्याफलत्वस्य भाष्ये तत्रैव सूत्रे उक्तत्वादत आह— पञ्चत्यत्रेति । भूतेति । 'नलोपस्य' इत्यस्य मध्यमणिन्यायेनान्वयः । अभावादिति । तत्कृततत्त्वाश्रयणात्; अन्यथा क्विन्निमित्तके तुकि पदत्वहेतुकनलोपस्य बहिरङ्गासिद्धत्वेनैव सिद्धौ तदानर्थक्यं स्पष्टमेव । ननु नलोपस्य न सर्वाकृत तत्त्वम्; किन्तु क्विपो बहिर्भूतभ्याहेतुकत्वेनात आह— भ्याम इति । पदेति । तत्पुरुषः । तन्निमित्तेति । भ्यान्निमित्तेत्यर्थः; साक्षादिति भावः । नन्वेवमपि परंपरया तत्त्वमस्त्येवात आह— परंपरयेति । 'नलोपे भ्यामः' इति शेषः । नन्वेवमपि 'असिद्धवदत्र—' इति न्यायेन तदङ्गीकारः । कृति तुग्ग्रहणं प्रत्याख्यातं च । परंपरया तत्त्वमादाय तत्त्वाश्रयणस्य क्वचिदावश्यकत्वं स्यात आह— ध्वनितमिति । तत्र हि 'तुग्विधौ वृत्रहभ्याम्' इत्यादि फलमुक्त्वा 'तुग्विधौ चोक्तम् । किमुक्तम्! संनिपातलक्षणः—' इत्यादिना 'कर्मजन्तः' इति सूत्रे ग्रामणि कुलमित्यादौ तुगभावफलत्वेनोक्त संनिपातपरिभाषया सार्थकतम्; न तु तत्रैव संज्ञाविधौ पञ्च ब्राह्मण्य इत्यादौ टाब्निषेधरूपप्रयोजनस्य तुग्विधौ वृत्रहभ्यामित्यादिप्रयोजनस्य च खण्डनकालेन कैयटोक्ततयान्यथा । तया चायमेव तदाशयः । तथा च क्वचिद्भाष्यादिप्रामाण्येन तदङ्गीकारोऽप्यत्र तदनङ्गीकार इति भावः । एतेनान्यथा तत्र कैयटोक्तं चिन्त्यम्; तदाह— तत्रैवेति । 'नलोपः—' इति सूत्र एवेत्यर्थः । एवं पदार्थं निरूप्य वाक्यार्थमाह— अन्तरङ्ग इति । नन्वेवम्

रङ्गमसिद्धमित्यर्थः । वृश्चत्यादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम् । एतेन 'अन्तरङ्गं बहिरङ्गाद्बलीयः' इति परिभाषान्तरमित्यपास्तम्; एनामाश्रित्य विप्रतिषेधसूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च । अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् । इयं च त्रिपाद्यां न प्रवर्तते, त्रिपाद्या असिद्धत्वात् । अस्यां च वाह ऊठ्सूत्रस्थमूठ्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था । अन्यथा संप्रसारणमात्रविधानेन लघूपधगुणे 'वृद्धिरेचि' इति वृद्धौ विश्वौह इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । सत्या ह्येतस्यां बहिरङ्गसंप्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यात् । न च 'पुगन्त—' इति सूत्रे निमित्तमिको विशेषणम्; अत एव

---

'लोपो व्योर्वलि' इति सूत्रस्थप्रागुक्तभाष्यविरोधः; तत्र हि यलोपस्य उपदेश एव प्राप्त्या तदानीं सम्प्रसारणादेरन्तरङ्गत्वानित्यत्वयोरभावेनासिद्धत्वाभावात आह— वृश्चत्यादिष्विति । आदिना दद्ध्यादिपरिग्रहः । एवं च तत्पक्षापेक्षयैव तदवि न विरोध इति भावः । कैयटप्रभृतिदीक्षितान्तोक्तिं खण्डयति— एतेनेति । अर्थद्वयसाम्येऽपि क्रोडाकाराद्भ्रान्तत्वेनेत्यर्थः । ननु अर्थभेदाच्छब्दभेदे तद्भेदः स्फुटित एवात आह— एनामिति । असिद्धमित्यामित्यर्थः । तस्याः अन्तरङ्गमित्यस्याः; तथा चोक्तमुनिप्रामाण्यात्तथैवोचितमिति भावः । परिभाषाया लिङ्गमस्तित्वनिगमादाह— अन्तरङ्गेति । कैयटादयश्चानित्यत्वं खण्डयितु सिद्धान्तमाह— इयं चेत्यादिना दिगित्यन्तेन । नन्वस्या न सपादसप्ताध्यायीस्थत्वमिति [illegible] आह— अस्यां चेति । तद्व्युत्पादयति— अन्यथेति । एतदभाव इत्यर्थः । संप्रेति । 'वसोः संप्रसारणम्' इत्यादिः । मात्रपदेनोक्ता व्यावृत्तिः । लघूपधगुणं हेतुत्वेन । परिभाषाफलं तात्पर्यतः स्पष्टमाह— सत्यामिति । 'सत्यामस्याम्' इति पाठः । हिः स्फुटार्थे । बहिरङ्गेति । न च [illegible] तत्त्वं वाच्यम्; तच्च न; तद्धि नाश्रीयत इति कथं तत्त्वमिति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्यात् यजादिप्रत्ययनिमित्तकभस्यनिमित्तकत्वेन परम्परया यजादिप्रत्ययनिमित्तकत्वाश्रयणेन तत्त्वस्यात्र सुवचत्वात् । यद्वा न पूर्वापरनिमित्तकत्वमपेक्षितम् । न चैवमपि परनिमित्तकत्वस्य तुल्यत्वात्कथं तत्त्वम्? प्रत्ययस्याधात्वादावाश्रयणात् तदाश्रयनिमित्तकत्वेन सद्भावात्तत्त्वेन तत्त्वसत्त्वात् उभयथापि प्रागुक्तरीत्या तत्त्वात् । सुगमस्य नायं विषयः, युगपदुपस्थानेऽपि कार्यसंयोगत्वाभावात् उभयोर्युगपद एव तद्विषयताद्भुकारत्व । न स्यादिति । तथा च इत्यादिसिद्धिरिति बहिरङ्गत्वाभावादिति भावः ।

परासिद्धत्वम् 'पूर्वत्र—' इत्यनेन वक्तुमशक्यमिति वाच्यम्, एवं हि विनि-गमनाविरहादुभयोरप्रवृत्त्यापत्तेः । किं च 'पूर्वत्र—' इत्यस्य प्रत्यक्षत्वेन तेन आनुमानिक्या अस्या बाध एवोचितः । अतः कार्यकालपक्षेऽपि त्रिपाद्यामस्या अनुपस्थितिरेव । अत एव कार्यकालपक्षमुपक्रम्योक्तयुक्तिरत्वा ततः 'अयुक्तो-ऽयं परिहारः— न वा बहिरङ्गलक्षणत्वादिति' इत्युक्तं विसर्जनीय-सूत्रे भाष्ये सिद्धान्तिना । त्रिपादीस्थे अन्तरङ्गे कर्तव्ये अयं परिहारो न युक्त इति तदर्थः । किं तु वचनमेवारब्धव्यमिति तदाशयः । अत एव निगाल्यत इत्यादौ लत्वार्थम् 'तस्य दोषः—' इति वचनमारब्धम् । अन्यथान्तरङ्गत्वा-ण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव । येऽपि लक्ष्यानुरोधादानु-मानिक्याप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य 'पूर्वत्र—' इत्यस्य बाधं वदन्ति,

---

'पूर्वत्रासिद्धम्' इत्यनेनेति भावः । तथा तत्रोपस्थितत्वाभावात् । तस्य बहिरङ्गस्य पूर्वस्य । अन्यथा भविष्यं बहिरङ्गस्य । एवं हीति । द्वाभ्यां मिथः प्रवृत्तिप्रतिबन्धे क्रियमाणे इत्यर्थः । अन्यतरस्य तत्स्थैर्यरीत्याऽन्यतरस्यानिरासादाह— आपत्तेरिति । एवं तदभावमभ्युपेत्योक्तम्; वस्तुतः विनिगमकमस्तीत्याह— किं चेति । 'अतः' इति शेषः । प्रत्यक्षेति । सूत्रेषु पाठात्प्रत्यक्षत्वेनेत्यर्थः । तेन पूर्वत्रेत्यनेन । अस्या अन्तरङ्गपरिभाषायाः आनुमानिकत्वेन । उपसंहरति— अत इति । हेतुद्वयादित्यर्थः । भाष्यसंवादमाह— अत एवेति । ... ऽ... भाष्यमपीत्याह— अत एवेति । कार्यकालपक्षेऽपि एतदनुपस्थितेरि-त्यादिरेवार्थः । उपक्रम्येति । अनेनोपसंहारेण पक्षान्तरं निरस्तम्, तयोर्विकल्पासम्भवादिति भावः । उक्तयुक्तीः 'पूर्वे प्रति—' 'एवं हि—' 'किं च—' इति ग्रन्थोक्तयुक्तीरित्यर्थः । अत इत्यादि भाष्यमुक्तार्थे प्रमाणम्, युक्तिमत्त्वादिति तदर्थः । विसर्जनीयेति । [illegible] इत्यर्थः । एकदेश्यु-क्तनिराकरणम्— सिद्धान्तिनेति । न युक्त इति । 'अदेशान्तरं सौत्रं' 'उदा-हरणम्—' इत्यादौ तत्र दर्शितः, स नाधौ न युक्त इत्यर्थः । वक्तव्यमिति । एतदर्थं प्रयुक्तानेव आह माः; वचनान्तरं कर्तव्यम्; तदेव च 'निगाल्यतेऽनुमानम्' इत्यादिषु दोषादि । तत्र वैकल्पिकलत्वे तद्वैयर्थ्यमित्याह— अत एवेति । तदेतद्-भाष्याद्विज्ञेयम् । अन्यथेति । 'अचि—' इति वा लत्वेऽर्थे । आरब्धम् 'वचनमेव' इति शेषः । अन्यथा अन्तरङ्गत्वे 'अन्तरङ्गेऽपि अन्तरङ्ग—' बोध्यमिति । तथा च

तेऽपि लक्ष्यैकचक्षुर्भिर्नादर्तव्या इति दिक् । अत एव 'ओमाङोश्च' इत्याङ्ग्रहणं चरितार्थम् । तद्धि खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वान्तरङ्गत्वाद्गुणे कृते वृद्धिप्राप्तौ पररूपार्थम् । साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात्खट्वाशब्दस्य समुदायेन योगाद्गुणस्यान्तरङ्गत्वमिति

---

युक्त एवाय परिहार इति भावः पूर्वपक्षस्य । वस्तुतस्तु प्रत्यक्षस्य प्राबल्यात्तथा वक्तुमेवाशक्यम् । एतेन लक्ष्यैकचक्षुषा तदादरो युक्त इत्यपास्तम्, उक्तयुक्तेर्भगवदतिरिक्तत्वाभावात् शास्त्रस्यास्मदादीन्प्रति प्रवृत्तेश्च । एवं च इत्यादसाधुत्वेऽर्वाचीनान्तोक्तिस्तत्रासंगतैवेति बोध्यम्; तदाह— **दिगिति** । ननूक्तज्ञापकेनाङ्ग्रहणार्थलाभेऽप्यन्यार्थालाभोऽत आह— **अत एवेति** । द्वितीयार्थस्त्वीकारादेकेऽयर्थः । विभज्यान्वाख्यान एव अत्र समकालप्राप्तिसमत इत्याह— **खट्वेति** । ननु न गुणस्यान्तरङ्गत्वम्, उभयापेक्षत्वेन तस्य समत्वात् । नाप्याद्यप्रकारद्वयेन, तस्यासत्त्वात् । तुरीयान्वयप्रकारेण प्रत्युत पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्य सवर्णदीर्घ एव सत्त्वाच्च निमित्तानां कार्याणां च यौगपद्यसत्त्वादत आह— **साधनेति** । **उपसर्गेति** । तच्छब्देत्यर्थः । **समुदायेनेति** । उपसर्गद्योत्यार्थसहितधात्वर्थेनेत्यर्थः; तस्य क्रियाकाङ्क्षत्वादुपसर्गस्य पृथगर्थाभावाच्च । एवं च तुरीयाद्यप्रकारेण अन्तरङ्गत्वं धातूपसर्गकार्यस्य गुणस्यैव, न तु तस्य । यथा कथंचिद्धातूपसर्गकार्यत्वं तु नान्तरङ्गताप्रयोजकम्, प्रेद्ध इत्यादौ व्यभिचारात् । 'धातूपसर्गयोः कार्यमन्तरंगम्' इत्यस्य तु नाय विषयः; स ह्यनुपदमेव स्फुटीभविष्यति । न चोपसर्गयोगे दीर्घनिमित्तमप्युपस्थितमेवेति वाच्यम्, तस्य परनिमित्तोपस्थितानपि पूर्वनिमित्तानुपस्थितेः । अत एव ससम्याद्यन्तेत्यत्र आदिशब्दः पञ्चमीग्राहक प्रागुक्तः । न चैवमपि तुरीयान्त्यरीत्या दीर्घस्य तत्त्वम्; आद्यरीत्या गुणस्येति द्वयोरन्तरंगयोः परत्वाद्दीर्घं एवेति तद्वैयर्थ्यमेवेति वाच्यम्, गुणस्य नित्यत्वात् तत्र सवर्णत्वस्यापि निमित्तत्वेन सख्याकृततत्त्वस्य गुणे सत्त्वाच्च ज्ञापकप्रमाण्यप्रामाण्येन धातूपसर्गकार्यत्वस्य तत्त्वाप्रयोजकत्वेऽपि तदुपोद्बलकस्य यस्यान्वयप्रकारस्यापद एव स्वीकाराच्च । तत्प्रामाण्यादन्यत आवश्यकत्वमिति तु न, पट्व्येत्यादिसिद्धावपि प्रादुरुपदित्याद्यभिव्याप्तेः । अयजे इन्द्रमित्यादौ तु गुणस्यैव द्विविधमन्तरंगत्वमस्तीति न दोषः । अत एव 'धातूपसर्गयोर्यत्कार्यं तदन्तरगम्' इति प्रतिज्ञाय, 'कुत एतत्' इति पक्षे तथोपपादित भाष्य इति भाव. । ननु एहीति यदेत्याद्यनुकरणके शिवसंबोधनके शिवघटितषष्ठीसमासके वा शिव एहीत्यादावाङ्ग्रहणं सफलम् । तत्र हि

'संप्रसारणाच्च' इति सूत्रे भाष्ये स्पष्टम् । एहीत्यनुकरणस्य शिवादिशब्द-संबन्धे तु नास्य प्रवृत्तिः, ज्ञापकपरसंप्रसारणाच्चेतिसूत्रस्थभाष्यप्रामाण्येना-नित्यम् 'प्रकृतिवदनुकरणम्' इत्यतिदेशमादाय लब्धाङ्त्वे एतदप्रवृत्तेः । यत्तु—पूर्वं धातुरुपसर्गेण युज्यते, पश्चात्साधनेन । उपसर्गेण तत्संज्ञकशब्देन । साधनेन कारकेण, तत्प्रयुक्तकार्येण । अत एवानुभूयत इत्यादौ सकर्मकत्वा-त्कर्मणि लकारसिद्धिरिति; तन्न, क्रियायाः साध्यत्वेन बोधात् साध्यस्य च साधनाकाङ्क्षतया तत्संबन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्यप्रवृत्त्युत्तर-

---

'प्रकृतिवत्—' इति न्यायेन आङ्त्वाद्वृद्धिं बाधित्वा तत्प्रवृत्तिः । एतेन अनुकार्ये एकादेशशास्त्रप्रवृत्त्या अन्तवद्भावेनाङ्त्वलाभेऽप्यनुकरणे तदभाव इत्यपास्तम् । एवं च कथं ज्ञापकत्वमत आह— एहीति । अस्य आमाङ्ग्रहणस्य । अनित्यमिति । तत्त्वं च तस्यावश्यकम्, अत एव 'यत्तदेतेभ्य' इति निर्देशसंगतिः । भाष्यप्रामाण्य-मनित्यत्वे अप्रवृत्तौ च हेतुः । 'लब्धाङ्त्वे' इति बहुव्रीहिः । 'अभिव्यक्तपदार्था—' इति न्यायोऽप्यत्र बोध्यः । वस्तुतस्तु आङ्त्वस्य तद्घटकदेशनिष्ठत्वेऽपि समुदायानिष्ठत्वेन प्रकृ-त्यधर्मत्वात् पररूपस्याङ्मात्रकार्यत्वाभावात्तदतिदेशस्यैवासम्भव इति भाष्यं यथाश्रुत सम्य-गवे । अत एव 'अभिव्यक्त—' इति न्यायस्याप्यविषय, फलाभावात् । एवं चेदं प्राचामनुरोधेनेति बोध्यम् । ननु वस्त्याती दे उक्रेति सिद्धौ आङ्त्वद्रूपशब्दयोर्युग-पदन्वये गुणदीर्घयोर्युगपद्प्राप्तौ तत्प्रधारणा युक्ता; स एव न, 'धातूपसर्गयोः कार्य-मन्तरङ्गम् । पूर्वं हि धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इति 'सुट्कात्पूर्व' 'गति-र्गतौ' इत्यत्र भाष्यात्सिद्धिरिति कथं ज्ञापकत्वमित्याशयेनाह— यत्त्विति । मतान्तर-निरासाय कैयटाभिमत तदर्थमाह— उपेति । साधनशब्दस्य करणमात्रपरत्वभ्रमनिरासा-याह— कारकेणेति । तावताप्यपर्याप्तिरित्याह— तदिति । प्रत्ययेनेत्यर्थः । अत एवेति । तयोर्योगयोः पूर्वपरीभावनियमादेवेत्यर्थः । 'सुगमं' इति शेषः । आदिना उपास्यते गुरुरित्यादिपरिग्रहः । क्रियाया इति । 'धातुतः' इति शेषः । साध्यस्य तत्त्वेन प्रतीतस्य । साधनेति । 'आदौ नियमत.' इति शेषः; साध्यत्वं च निष्पाद-त्वरूपमेवेति तयोर्मिथोनिरूप्यनिरूपकभावादिति भावः । काङ्क्षतयेति । 'काङ्क्ष-त्वात्' इति पाठान्तरम् । तत्संबन्धेति । साधनप्रयुक्तकार्यसंबन्धोत्तरमित्यर्थः । तत्-स्तत्पूर्वंसंबन्धेऽदाय । एवमग्रेऽपि । तत्संबन्धं विना साध्यत्वेन प्रतीतेरपर्यवसानादिति भावः, तदाह— निश्चितक्रियेति । निश्चितसाधनकार्येत्यर्थः । अत हेतुविवरण-

इत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्तते; ततो द्वित्वादि । अत एव प्रणिदा-पयतीत्यादौ णत्वम् 'यदागमाः—' इति न्यायेन समाहितं भाष्ये । अत एव प्रत्येतीति प्रत्यय इत्यादिसिद्धिः । अन्यथा अन्तरङ्गत्वात्सवर्णदीर्घे रूपा-सिद्धिः । यदुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितम्, विशिष्टोपसर्गनिमित्तत्वा-त्तदन्तरङ्गम् । यत्तु न तथा, तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अत एव 'न धातु—' इति सूत्रे भेद्य इत्यत्र गुणो बहिरङ्ग इति भाष्य उक्तम् ।

---

'यदुप—' इत्यादिना वक्ष्यतीति भावः । निमित्तः निमित्तक । 'स कृ इत्यवस्थायां सुट्' इति कैयटोक्तिरुक्तरीत्या अयुक्तत्वमिति ध्वनयन्नाह— सं कृ तीति । तत इति । एवं च 'सुट्कात्पूर्वः' इत्यादि न वक्तव्यमिति भावः । उक्तार्थं द्रढयति— अत एवेति । पूर्वमुपसर्गयोगे तु प्रागेव अन्तरङ्गत्वात् णत्वसिद्ध्या शङ्काया एवाभावः; आगमेन शङ्कायामपि तथा समाधेर्वक्तव्यतया न्यायेन तत्साधनं व्यर्थमेव स्यादिति भावः । ननु वैयादिकेऽन्तरङ्गे एतदप्रवृत्त्या 'पूर्वत्र—' इति णत्वासिद्धया पुगभावादाविति भाष्य युक्तमेव । किं च सन्न्यायकृततस्त्वेन पुकोऽपि तत्त्वम् । एवं चोभयोरन्तरङ्गयोर्नित्यत्वात्पुक् । किं च तद्भाष्यप्रामाण्यात्तुरीयात्तृतीयस्य प्राबल्यमिति चेत्, न; तत्र पक्षे णिच एवादौ दोर्लभ्यात् । एवं च तन्निमित्तस्यैव सत्त्वेन तत्सिद्धिस्तदानीं तत्र पक्षे । सिद्धान्ते तु तद्विना साधनप्रत्ययासंभवेन तेन तदाक्षेपेण तस्य भावार्थकत्वेन पूर्वमुत्पत्तिरिति न्यायं विना न तत्सिद्धिरिति दिक् । एवं भाष्यसंमते सूत्रसंमतिमपि ध्वनयन्नाह— अत एवेति । उक्तार्थानुरोधादेवेत्यर्थः । अन्यथेति । उक्तार्थानङ्गीकार इत्यर्थः । अयोभयत्र तुरीयापरिभाषयान्तरङ्गत्वं बोध्यम् । पदार्थकल्यादाविदमेवान्तरङ्गत्वं बोध्यमिति पूर्वविरोधः । नन्वेवम् 'न धातु—' इति सूत्रभाष्यविरोधोऽत आह— यदुपेति । तत्रान्वयव्यतिरेकाभ्यामुपसर्गस्य तद्धात्वर्थाश्रितामात्रेणापि निमित्तता बोध्या; न तु सूत्रस्य तत्त्वेनोल्लेखोऽपेक्षित इत्याग्रहः । अत एव तत्र षत्वादिसिद्धिरिति बोध्यम् । साक्षादर्थप्रयत्नस्य सर्वत्राभावादाह— विशिष्टेति । समुदायेत्यर्थः । एवं धात्वर्थपरिमाणर्थस्यापि निमित्तत्वं बोध्यम् । यत्तु न तथेति । उपसर्गार्थसंबन्धिकार्यं उपसर्गाश्रितत्वेन श्रुतो तदर्थाश्रितत्वं नेत्यर्थः । तत्र तद्विषये । पूर्वागतेति । एवं च धात्वागतपदान्तरनिमित्तकस्य सङ्खोरेत्यादौ नान्तरङ्गत्वमिति भावः । साधनेति । साधनप्रयुक्तप्रत्ययेत्यर्थः । एतेन भिन्नपदसाध्यकारकसंबन्धनिमित्तकत्याहृतिः । उक्तमिति । न धात्विति निषेधस्यान्तरङ्गत्वज्ञापकत्वादिति भावः । यत्त्विति मते दोषान्तरमाह—

किं च पूर्वमुपसर्गयोगे धातूपसर्गयोः समासे ऐकपद्यैकस्वर्यापत्तिरिति 'उपपदम्—' इति सूत्रे भाष्ये स्पष्टम्। भावार्थप्रत्ययस्यापि पूर्वमेवोत्पत्तिः; अत एव 'पर्यध्ययने वृत्तम्' इति निर्देशः संगच्छते। इदं च सामान्यापेक्षं ज्ञापकम्, भावतिङोऽपि पूर्वमुत्पत्तेः। अन्यथा तत्र समासापत्तिः। तिङि स्वनिमित्ते निषेधान्न दोषः, यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम्। यत्तु— विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गम्, विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात्। यथा 'रुदादिभ्यः सार्वधातुके' इत्यत्र रुदादित्वं सार्वधातुकत्वं च। तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानम्, प्रत्ययस्य प्रत्ययत्वज्ञानं चा-

---

किं चेति। 'यतः' इति शेषः। **समासे** सहेति योगविभागेन कुगतीति वा। आदिना ऐकपद्यपरिग्रहः। नन्वेवमपि अध्ययनमित्याद्यसिद्धिः, तत्र साधनप्रत्ययाभावादत आह— **भावार्थेति**। तदर्थककृतोऽप्येत्यर्थः। **पूर्वमिति**। 'उपसर्गसंज्ञकशब्दयोगात्' इति शेषः। एवं चान्तरङ्गत्वात्तत्रापि तत्कार्ये उपसर्गयोग इति ततस्तत्कार्यमिति नाधिना धातोः समास इति भावः। नन्वेवमपि उक्तनिर्देशस्य सजातीयापेक्षज्ञापकत्वेन भाव-तिङन्ते दोष एवात आह— **इदं चेति**। उक्तनिर्देशरूपमित्यर्थः। **उत्पत्तेरिति**। अस्य 'इष्टत्वात्' इति शेषः। अन्यथा पूर्वं तदुत्पत्त्यनङ्गीकारेणोपसर्गयोगे। **तत्र** तद्विषये। 'धातुनोपसर्गस्य' इति शेषः। वस्तुतो विशेषापेक्षत्वेऽपि न दोषस्तत्र तद्यो-गस्यैवाभावादित्याह— **यदीति**। अत्रेदं बोध्यम्— 'नेर्विशः' 'संपृच—' इत्यादि-न. परस्वयोग्याद्विशेः सपूर्वत्वयोग्यात् पृचेरित्यादिक्रमेणार्थः। बोसदाय इत्यादावपि सद्यो-त्यार्थविशिष्टाद्धातोः कर्मणि बोद्धे उपपदे अणि ततः समा योगे गतिसमासे उपपदेन योगे उपपदसमासो बोध्यः। सर्वत्रापि भिन्नपदवाच्यकारकबोधकपदसंनिधस्तत्क्रमगतद्योप-सर्गसंज्ञकशब्दयोगोत्तरमेव, 'संप्रसारणाच्च' इति सूत्रस्थोक्तभाष्यप्रामाण्यादिति तत्त्वम्; तदाह— **अलमिति**। दीक्षितोक्तिं खण्डयति— **यत्त्विति**। **अधिकस्य** सामान्य-धर्मतः। **कत्वं चेति**। 'निमित्तम्' इति शेषः। तत्र सामान्यधर्मनिमित्तकत्वमप्यस्ती-त्याह— **तत्रेति**। [उक्तसूत्र इत्यर्थः; धातोः [प्रत्ययस्य] चाधिकारात् धातुविहित-प्रत्ययसंज्ञकतिङादेस्तत्संज्ञाविधानादिति भावः। इतिर्हेतौ। तथा च यत्सामान्यधर्मा-पेक्षयात्वापेक्षया कश्चिद्विशेषधर्मोऽधिको निमित्तकोटौ यत्र विशेषापेक्षशास्त्रेऽस्ति, तत् ततो बहिरङ्गमिति फलितम्। एवं चेद् बहिरङ्ग इति यावदुक्तस्तत्त्व सिद्धम्; तदाह—

वश्यकमिति यासुडन्तरङ्ग । एतेन यत् 'अनुदात्तङित —' इति सूत्रे कैयटेनोक्तम्— स्यात्रापेक्षतयान्तरङ्गास्तिवादय, लकारविशेषापेक्षत्वाद्बहिरङ्गा स्यादय ' इति, तत्परास्तम्, विशेषापेक्षत्वेऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्वस्य दुरुपपादत्वात् परनिमित्तकत्वेन स्यादीना बहिरङ्गत्वा चेति; तन्न, विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात् भाष्ये एवंविधान्तरङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च । यत्तु— मतुप्सूत्रे भाष्ये पञ्च गावो यस्य सन्ति स पञ्चगुरित्यत्र मतुप् प्राप्नोतीत्याशङ्क्य, प्रत्येकमसामर्थ्यात् समुदायादप्रातिपदिकत्वात् समासात्समासेनोक्तत्वादिति सिद्धान्तितोक्ते, 'नैतत्सारम् । उक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धित , यथा— पाञ्चनापितिः ' इति

---

यासुडिति । एतेनेत्यस्यार्थमाह— विशेषेति । तस्य स्यादावर्थे । तत्त्वस्य बहिरङ्गत्वस्य । ननु 'अनुदात्तङित —' इति प्रकरणस्य लादेशाश्रितस्त्वकथितापेक्ष 'यदि पुन ' इत्यादिना भाष्योक्ते भावस्थायाः स्यादय इति पक्ष विहितविशेषणत्वेन लिङ्ङादेशोऽपि पक्षान्तरे सहपक्षत्वेन लिङादेशाना बहिरङ्गत्वाभावेन स्यादिषु निवाह इत्यत आह— परेति । तथा च प्रागुक्तरीत्या विपरीत तत्त्व न तु तथा; सहपक्षत्वेन तस्य तु नैवोक्तरामात भाव । अनुमानेनेति । तत्र तस्यैव समवायादिति भाव । तस्य व्यापकस्य । मानेति । शब्दानुपात्तत्वादतिप्रसङ्गादरभावाद्यात भाव । अधिकेति । एकैक पञ्चम्यन्तमुभयत्र नामसामात समानानामसत्कत्वात् प्रकारान्तर तु नैवाभात भाव । ननु सम्भवमात्रेण तस्य निमित्तसमूहाश्रियत इत्यासदर्थमन्यथानुपपत्त्यात आह— भाष्य इति । यासुट् तु नित्यत्वात्तत्र बाध्य । आडटौ तु यासुटि कृते असवृत्तत्वनाप्राप्त्या अनित्यावपीति तत्त्वम् । नन्वन्यवहृत्वमस्तु , मतुप्सूत्रे भाष्य एव तस्य स्पष्टत्वादित्याशङ्कानिरास ध्वनयन् दूषयितु तद्भाष्यमनुवदति— यत्त्वित्यादिकैकपदइतीत्यन्तेन । आशङ्क्य आशङ्का श्रुत्वा । ननु एक समासाद्योपाचत अथ वा वाक्यात्? अन्त्येऽपि किं प्रत्येकम्, उत समुदायात्? तत्र न मध्यम इत्याह— प्रत्येकमिति । असामर्थ्यात् मिथ्यापक्षत्वेन । नान्त्य इत्याह— समुदायादिति । नाद्य इत्याह— समेति । 'न' इत्त शेष । हि यत । पञ्चाना नापितानामपत्यमिति ताव्वनाधिकृतार-

पूर्वपक्षयुक्ति । 'द्विगोर्लुगनपत्ये' इति लुग्विधानात्तद्धितार्थद्विगोस्तद्धितो भवति । पञ्चगुशब्दश्च द्विगुरिति तदाशय कैयट । ततो द्वैमातुर पाञ्चनापितिः पञ्चसु कपालेषु संस्कृत इत्यादौ सावकाशाद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद्बाध इत्याशयेन 'नैष द्विगु । कस्तर्हि? बहुव्रीहि' इति सिद्धान्तिनोक्ते, तमवकाश-मजानान 'अपवादत्वाद्द्विगु प्राप्नोति' इति पूर्वपक्षी । 'अन्यपदार्थे सुबन्त-मात्रस्य विधीयमानबहुव्रीहे सङ्ख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहि-तत्वाद्बाधक प्राप्नोति' इति कैयट । तत्र सिद्धान्त्येकदेश्याह— 'अन्तरङ्ग-त्वाद्बहुव्रीहि । कान्तरङ्गता? अन्यपदार्थे बहुव्रीहि । विशिष्टेऽन्यपदार्थे द्विगु । तस्मिंश्चास्य तद्धिते अस्तिग्रहण क्रियते' इति । अधिकारत्वयाऽपेक्षमन्त्वर्थनि-मित्तो द्विगुर्बहिरङ्ग.' इति कैयट । नैषा सिद्धान्त्युक्ति, एतावताप्यपवाद-

---

पत्ये इत 'अनपत्ये' इति निषेधान लुङ् । यद्यपि तावतार्थं इति विषयसप्तमी सिद्धान्ते न तु वाच्य इति । अत एव तत्र नाक्ति, तथापि पूर्वपक्षी वाच्य इत्येवाय मन्यत इति न दोष । पूर्वपक्षयुक्तिरिति । अत्र 'द्विगा' इति पाठ । विधानात् । 'दाप-कात्' इति शेष, अन्यथोक्तास्य घातदभावे तद्बोधश्च स्पष्टम । 'तावतर्थंद्विगा' इति पाठ । ननेवमपि पञ्चगुशब्दो बहुव्रीहिर्न द्विगुरत आह— पञ्चेति । समासान्त-स्तु अनित्यत्वात् । 'द्विगोर्लुक्' इति मतालुगिति तु न, अप्रादीपतीयत्वादिति भाव । तदाशयं पूर्वपक्षयुक्त्याशयम् । कैयट इति । अस्य 'आह' इति शेष । एवमप्यऽपि उक्तस्य पूर्वपक्षयुक्तत्व दर्शयति— तत इति । अस्य 'उक्त' इत्यना-न्वय । सावकाशेति । तत्राप्रसमान्तत्वेन बहुव्रीह्यप्राप्त । प्रकृते पञ्चगुरित्यादौ । 'प-रत्वात्' इति युक्त पाठ । तमिति । द्वैमातुर पाञ्चनापितिरित्यादिरूपमुक्तमित्यर्थं । ननु द्विगोरपि अतद्धितार्थे सावकाशत्वात्कथ तत्त्वम्? अतोऽपवादत्वमुपपादयति— अन्येति । तथा च अपवादत्वादस्यस्य विशेषविहितत्वमात्रादित्यर्थ इति भाव । सिद्धान्त्येकेति । किंचिदंशे तत्त्वम्, किंचिदंशे अतत्त्वमिति भाव । पूर्वोक्त-रीत्येतद्युक्तित्व तदवकाशाज्ञानादेव । अन्यपदार्थे तन्मात्रे । विशिष्टे विशेषणविशिष्टे । ननु कथ तत्र द्विगु? तद्धितार्थ इत्येव हि तत्रोक्तमत आह— तस्मिन्निति । अस्य द्विगोरपद्वारा निमित्तभूते तस्मिंस्तद्धिते मत्वर्थविधायक अस्तिग्रहण क्रियत इत्यर्थ ।

३ अधिकेति । बहुव्रीहिनिमित्तान्यपदार्थापेक्षया अधिका याऽपेक्षान्तरापेक्षा या मत्वर्थ-

स्वाहानेः अच्सामान्यापेक्षयणो विशिष्टसवर्णानपेक्षदीर्घेण बाधदर्शनात् किं च उक्तरीत्या परत्वेनैव बाधसिद्धेः । किं चात्राधिकापेक्षत्वेनैव बहिरङ्गत्वं न केवलविशेषापेक्षत्वेनेति नैतद्व्याप्यारूढं विशेषापेक्षस्य बहिरङ्गत्वम् । अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिः, तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये । न चार्थकृतबहिरङ्गत्वानाश्रयणादिदमयुक्तम्, एकदेश्युक्तित्वेनादोषात् । अत एवास्मिग्रहणं नोपाध्यर्थम् । किं त्वस्मिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य, सिद्धान्तिना 'मत्वर्थे द्विगोः प्रतिषेधो वक्तव्यः'

---

र्थनिमित्तक इत्यर्थः । **इति कैयट इति** । अस्य बहुव्रीहिस्वीकर्तृत्वेन सिद्धान्तित्वोक्त्यसम्भवे एकदेशित्वमिति भावः । एवमनूद्य खण्डयति— **नैवेति** । यत्तु तत्सूत्रे भाष्ये 'ततोऽन्तरङ्गत्वात्' इत्यादि आह, एषा सिद्धान्त्युक्तिर्नेत्यर्थः । **एतावता** अधिकार्यापेक्षत्वेन बहिरङ्गत्वेऽपि । **अपेति** । पूर्वपक्ष्युक्तापवादत्वाहानेरित्यर्थः, तद्रीत्याधिकापेक्षत्वेऽपि बाधपरत्वमित्येतावन्मात्रेण वा । तत्र हेतुमाह— **अजिति** । **विशिष्टेति** । विशिष्टः अधिकः सवर्णः तत्पदार्थप्रवृत्तिनिमित्तं सावर्ण्यं तद्विशिष्टो योऽच् तदपेक्षेत्यर्थः । यद्वा विशिष्टत्वं सवर्णस्यो विशेषणम् । अन्तरङ्गबहिरङ्गभावस्तु नात्र, सिद्धान्ते सवर्णकृततरत्वानाश्रयणादिति बोध्यम् । इदमभ्युपेत्य; वस्तुतोऽपवादत्वमेव नास्तीत्याह— **किं चोक्तेति** । सावकाशत्वस्य तत्रोक्तिरूपयेत्यर्थः । एवं चान्तरङ्गत्वपर्यन्तानुधावनं व्यर्थमेवैतत्सिद्धान्तोक्तिरेवेयं प्रकाराश इति भावः । नन्वस्यैकदेश्युक्तित्वेऽपि अनेन 'सामान्यापेक्षं विशेषापेक्षादन्तरङ्गम्' इति सूचितमेव, अन्यथा उक्तसम्भव एव न स्यात्; एवं च कैयटदीक्षितायुक्तिर्युक्तेत्यत आह— **किं चात्रेति** । द्विगावित्यर्थः । **अधिकेति** । अधिकनिमित्तत्वेनेत्यर्थः, तस्यापि प्राक् खण्डितत्वात् । यद्वा एकदेश्युक्तित्वेन तदनुरोधेनेदमिति यथाश्रुतमेव । **बहिरङ्गत्वमिति** । 'अस्ति' इति शेषः । **केवलेति** । अधिकापेक्षत्वशून्येत्यर्थः । **विशेषेति** । 'केवल' इत्यादि । एवं च भाष्यस्योक्तिसम्भव इति न तथाङ्गीकार इति भावः । नन्वभयसत्त्वे तदेवाभिमतम्; तत्र किं मानमत आह— **अत एवेति** । तदनभिमतत्वादेवेत्यर्थः; अन्यथा तदप्युक्तं स्यात्, प्रथमोपस्थितत्वात्तदेव वोक्तं स्यादिति भावः । **इदम्** इदमपि तथा योजनमपि । **अत एव** एकदेश्युक्तित्वादेव । **नोपेति** । तदभावेऽपि स्वामान्याद्बहुव्रीहिपदस्यार्थविषयत्वलाभादिति भावः । **मतुबिति** ।

इति वचनेनैतत्सिद्धमित्युक्तम् । अत एव 'तदोः सः सौ—' इति सूत्रेऽन्त्ययोरिति चरितार्थम्; अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यस्यात्वेऽनन्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । 'पादः पत्' इति सूत्रे भाष्यकैयटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु । नन्वेवमसुस्रुवदित्यत्र लघूपधगुणात्सुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादिति चेत्, न; तत्रान्तःकार्यत्वरूपान्तरङ्गत्वसत्त्वात् । अन्तःकार्यत्वं च पूर्वोपस्थितनिमित्तकत्वम्, अङ्गशब्दस्य निमित्तपरत्वात् । इदमन्तरङ्गत्वं लोक-

---

अस्तिमानित्यादौ । **त्यदमीति** । सिद्धान्त्येकदेश्यभीत्यर्थः; उक्तरीत्या तयोः समस्तादिति भावः । अविरपशादस्वसमुदायरूः । **सिद्धान्तिना** तत्त्वेन तथाभिमतेन एकदेशिना । **एतत्** पञ्चगुरित्यादिरूपम्; अस्य सिद्धान्तत्वे तु उक्तरीत्या परत्वेनैव निर्वाहे वचनाङ्गीकारो निष्फल एव स्यात्; तस्मादुक्तस्थले सावकाशाद्द्विगोः परत्वात्तत्र बहुव्रीहिणा बाध इति तत्त्वमिति भावः । सूत्रानारूढत्वं तस्याह— **अत एवेति** । **अन्यथा** तदङ्गीकारे । **प्रत्ययेति** । विभक्तीत्यर्थः । भाष्यानारूढत्वमप्याह— **पाद इति** । **एतदन्तरङ्गेति** । सामान्यापेक्षत्वरूपान्तरङ्गेत्यर्थः । तत्र हि निर्दिश्यमानपरिभाषाप्रयोजनकथनावसरे अद्दितामित्याद्याविद्तामायाः सम्प्रधारणाया परत्वादिष्टमाशङ्क्य अन्तरङ्गत्वं तामादीनामुक्तम् । कैयटेन च प्राक्तनादेशेभ्यो षष्ठ्यधिकारात्तेषां तत्त्वमुपपादितम् । तत्त्वे तु तदधिकारेऽपि तेषां तत्र सिद्धमेनेति तथोक्तिरफला स्यादिति भावः । **एवमिति** । प्रागुक्तज्ञापकद्वयेन जाततत्कालप्राप्तिकयोरिव यथासिद्धान्तरङ्गत्वादेरङ्गीकार इत्यर्थः । तत्राद्यज्ञापकेन जातस्येत्यस्यैव पूर्वोपस्थितत्वाल्पनिमित्तत्वयोर्लाभः । अल्पनिमित्तत्वमपि सख्यया लभ्यम् । 'येन विधिः—' इति सूत्रस्थोक्तभाष्यप्रामाण्यात् घटकत्वेनैयस्यापि लाभः । अल्पनिमित्तस्य तत्त्वे अनैमित्तिकस्य तत्त्वं कैमुतिकन्यायेन सिद्धमिति तस्यापि लाभ । द्वितीयज्ञापकेन प्रक्रियाक्रमेण पूर्वोपस्थितनिमित्तकत्वस्य लाभ इति बोध्यम् । **इत्यत्र** इत्यादौ । **निमित्तेति** । इदमुपलक्षणम्— प्रागुक्तप्रकारमात्रस्य । प्रस्तुतगुणस्य प्रक्रियाक्रमेण प्रागुक्तं तदस्तीति स एव स्यात् । **तत्र** उवङि । अन्तःकार्यत्वस्याविकथनात्प्रागुक्तरीत्या तस्य सत्त्वस्य दुर्वचत्वादाह— **अन्तःकार्यत्वं चेति** । **पूर्वोपेति** । लौकिकप्रयोगीयोच्चारणक्रमेण पूर्वश्रुतनिमित्तकत्वमित्यर्थः । यथाश्रुतं तस्य प्रागुक्तत्वेन प्रक्रियायां गुणनिमित्तस्यैव प्रागुपस्थित्या चासंगतिः स्पष्टैव । ईदृशस्यैव ग्रहणे प्रागुक्तमपि स्पष्टत्वाय नियामकमाह— **अङ्गेति** । नन्वस्य पूर्ववत् ज्ञापकसिद्धत्वम्

न्यायसिद्धमिति 'मनुष्योऽयं प्रातरुत्थाय प्रथमं स्वशरीरकार्याणि करोति ततः सुहृदाम्। ततः संबन्धिनाम्। अर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितः। तत्क्रमेणैव तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्कार्याणीति पट्व्येत्यादावन्तरङ्गत्वात्पूर्वं पूर्वयणादेशः, परयणादेशस्य बहिरङ्गतयाऽसिद्धत्वात्' इत्यनेन 'अचः परस्मिन्—' इति सूत्रे भाष्ये स्पष्टम्। तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव; यथा—पट्व्येत्यत्र पदस्य विभज्यान्वाख्याने; न तु जातस्य बहिरङ्गस्य तादृशेऽन्तरङ्गेऽसिद्धतानियामकम्, प्रागुक्तलोकन्यायेन तथैव लाभादिति 'वाह ऊठ्' इति सूत्रे कैयटे स्पष्टम्। अत एव वाय्वोरित्यादौ वलिलोपो यणः स्थानि-

---

किंचात्र आद्गुणसिद्ध्यर्थेन न निर्वाहः, तत्र प्रक्रियया पूर्वोपस्थितत्वस्यैव धर्मिग्राहकमानसिद्धत्वात्। पट्व्येत्यादौ यद्यपि तत्संभवोऽस्ति; तथापि तदप्रवृत्ति, परयणादेशाभावापत्तेस्तत्रासिद्धत्वस्य बाध्यताप्रयोजकत्वात्, यत्रान्तरङ्गे कृते बहिरङ्ग न तत्रैव तद्विघातस्य तन्मानलभ्यत्वाच्च प्रादुरुपदित्याद्यसंगतेश्च, एवं च कथमेतत्तत्त्वमत आह— **इदमिति**। **शरीरेति**। तस्य सुखादिसाक्षात्कारायतनत्वात्। **सुहृदामिति**। तस्य प्रथमोपस्थितिहेतुत्वात्। **संबन्धिनामिति**। अवश्यकर्तव्यत्वादिति भावः। **कल्पित इति**। अनेन वस्तुतो युगपदुपस्थितिः सूचिता। अनेन तु प्रकारेण निमित्तस्य प्रागुपस्थित्यान्तरङ्गत्वप्रतिपादनम्; दृष्टान्तोऽप्येनमेव। **तत्क्रमेणैवेति**। बोधक्रमेणैवेत्यर्थः। **पट्व्येत्यादाविति**। विभज्यान्वाख्याने इति भावः। **अन्तरङ्गत्वात्** पूर्वोपस्थितनिमित्तकत्वात्। **पूर्वं पूर्वेति**। परयणादेशात्पूर्वमित्यर्थः। **बहिरङ्गेति**। पश्चादुपस्थितनिमित्तकत्वेनेत्यर्थः। **असिद्धत्वात्** प्रागप्राप्तेः। **इत्यनेनेति**। भाष्येणेत्यर्थः। **तदपीति**। तत्र भाष्ये स्पष्टमुक्तमन्तरङ्गत्वमपीत्यर्थः। **युगपदिति**। प्रादुरुपदित्यादावपीति भावः। **पूर्वेति**। 'अन्तरङ्गस्य' इत्यादि। अत्र दृष्टान्तमाह— **यथेति**। **पट्व्येत्यत्र** पट्व्येत्यादौ। पूर्वेणोभयोरुभयं व्यवच्छेद्यमाह— **न त्विति**। तादृशे पूर्वोपस्थितनिमित्तकत्वरूपे न भाष्योक्ते कर्तव्ये। तत्रापीष्टसिद्धेः सत्त्वादाह— **प्रागुक्तेति**। मनुष्योऽयमित्यादिसंबन्धिनामित्यन्तेत्यर्थः; तस्य युगपदुपस्थितत्वादिविषयत्वात्। एवं चानन्तरं यदि बहिरङ्गप्राप्तिस्तर्हि भवत्येव तत्। अन्यथा नेति दृष्टान्ततो लभ्यम्, न ह्यन्यदेव क्वचित्स्वप्रवर्तकं क्वचित्स्वनिवर्तकं तदिति भावः। **अत एवेति**। तस्य तत्र तदनियामकत्वादेवेत्यर्थः; अन्यथा असिद्धत्वाद्धारणे तदसंगतिः स्पष्टैव। न चैतदपि प्रागुक्तरीत्या 'असिद्धम्—';

चत्वेन वारित 'अत्र परस्मिन्—' इत्यत्र भाष्यकृता । क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वम्, बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूप बोध्यम् । यत्त्वेवरीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति, तच्चिन्त्यम्, स्रग्विष्ठ इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य 'प्रकृत्यैकाच्' इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फल्यापत्ते स्वदुक्तरीत्या विन्मतोर्लुको बहिरङ्गासिद्धत्वेनानायासतस्तद्वारणात् भाष्ये ईदृशरीत्या बहिरङ्गत्वस्य क्वाप्यनाश्रयणाच्च परिभाषायामङ्ग

---

इत्यस्या प्रवृत्तिर्दुर्वारेति वाच्यम्, परनिमित्तकत्वेनाभयो समत्वेनातत्त्वाप्रकारान्तरस्याभावाच्च प्रस्तुत पूर्वस्थितनिमित्तकत्वस्य यणि सत्त्वाच्च । 'न पदान्त—' इति निषेधस्तु न, 'स्वरदीर्घयलोपेषु—' इति निषेधादिति भाव । मन्त्वेवमपि क्रमेणान्वाख्याने कथ परिभाषया निर्वाहो भाष्यायुक्तोऽत आह— क्रमेणेति । उक्तोदाहरणे पट्व्यादौ । पूर्वमेति । असरिन्धप्रथमेन्यर्थं, प्रादुद्रवदित्यादौ तूभयथापि प्रागुक्तरीतिरेवेति बोध्यम् । पूर्वमेति । असरिन्धप्रथमेन्यर्थ , प्रादुद्रवदित्यादौ तूभयथापि प्रागुक्तरीतिरेवेति बोध्यम् । अप्राप्तीति । 'पूर्वयणादेशाय बोध्यम् । तत्र वर्त य परयणादेशस्य' इति शेष । युगपत्क्रमेण चापस्थितिविषयत्वेऽपि 'तदानीम्' इत्यादि । एव चोक्तभाष्यस्य साधारण्येन अन्तरङ्गप्रवृत्त्युत्तरबहिरङ्गप्रवृत्तिविषयत्वम्, अन्त्येन तु बहिरङ्गप्रवृत्त्युत्तरान्तरङ्गप्रवृत्तिविषयत्वमिति नैव व्यवस्थेयप्रागुक्तग्रन्थविरोध । अत्रान्तरङ्गत्व न प्रागुक्तरूपम्, असम्भवात् । पूर्वप्रवृत्तिकत्वेन तु न तत्त्वम्, अङ्गशब्दस्य निमित्तपरत्वात् । किंतु पूर्वस्थितनिमित्तकत्वरूपम्, अत एव तु प्रवृत्त । पूर्वत्व च यथाक्रमाख्यात, तस्य साधारण्यात् । अत एव दृष्टान्तसङ्गति । दृष्टान्तेऽपि अत्र पक्षे क्रमेणोपस्थितावप्यासत्तिवशादेव पूर्वं पूर्वं तत्तदुपस्थितिरिति बोध्यम् । दीक्षितमत खण्डयति— यत्त्विति । स्रग्विष्ठे स्रग्विन्शब्दान्मतुप् । लुकीति । 'विन्मतो—' इति विनो लुकि सतीत्यर्थ । यद्वा आदिना गविष्ठपाद परिग्रहाद्यथाश्रुतमेव । एवमग्रेऽपि । टिलोपेति । स्वम इति भाव । ननु विषयभेदेन टिलोपस्य भिन्नत्वात्पूर्वं टिलोपबाधेऽप्यपरबाध कथमत आह— जातीति । अत्र क्षितविषयभेद टिलोपशास्त्र लुका बाध्यते, तन्न्यायस्य तत्रैव सत्त्वात् । तथा च प्राप्ते टिलोपत्वे आरभ्यमाण इति न्यायसञ्चार । प्रयासेति । तस्य स्वरसतोऽनाभादिति भाव । कृतस्येति । प्रकृत्यैकाजिति सूत्र इति भाव । बहिरिति । धर्मपरम् । प्रयासपदोत्तराह— अनायासत इति । तद्वारणादिति । पुनष्टिलोपवारणसम्भवादित्यर्थ । ननूपायस्योपायान्तरादूषकत्वम्, 'उपाया—' इति 'उपय—' इति च हयुक्तेरत आह— भाष्य इति । नन्वत्रमप्यप्रतिषिद्धमनुमतमिति न्यायेन तदप्यस्तु अत आह—

शब्दस्य निमित्तपरत्वाच्च । इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधिकेति 'इष एकाचोऽम्—' इति सूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति सा नादर्तव्या । परंपत इत्यादावनुस्वारे नासिद्धत्वं शुभम्, त्रिपाद्यां तदप्रवृत्तेः । नव्यमतेऽपि यथोद्देशपक्षाश्रयणेन अन्यथासिद्धोदाहरणदानेन तस्य तद्युक्तित्वमावश्यकमित्याहुः । आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्वम-

---

परेति । इयमिति । 'असिद्धं बहिरङ्गम्—' इति चेत्यर्थः । पूर्वपक्ष्युक्तिरिति । पूर्वपक्षिण उक्तिरित्यर्थः । इतीति । तत्र या उक्तिः, सा पूर्वपक्षिण इति हेतोर्नादर्तव्येत्यन्वयः । समासेऽप्युद्देश्यविधेयभावप्रतीतेर्नाक्षगतिः । तत्र हि कथं भाष्यमिहेति प्रश्ने भिन्नमन्यमिति सिद्धान्त्युक्तौ, 'स्वमोः —' इति लुक् कुतो नेति पूर्वपक्ष्युक्तौ नामार्थे लुगि अस्यारम्भात् 'लुगो धातु—' इतिवत् 'स्वमोः—' इत्यस्यापि बाध इति वाक्यसामान्यचिन्तया सिद्धान्त्युक्तौ, वाक्यविशेषचिन्तया आद्यस्य नामाभिन्नान्यस्येति चेत्यन्यमिति तदुक्तौ, पूर्वोपस्थितनिमित्तकमन्तरङ्गं परोपस्थितनिमित्तकं बहिरङ्गम् । पूर्वपदादि च यथाकथञ्चिदित्याद्यधिकारात् तथापि असिद्धं बहिरङ्गमिति निर्णीतं इति सिद्धान्त्युक्तौ, चेदुत्तरपदाधिकारे विरतु शङ्क्या । द्विपतपः पातेत इत्यत्रापि दोषः स्यात् । तस्मात् भिन्नम्भिन्नेयं भाष्यस्थ उक्तिः पूर्वपक्षिणः, वार्तिककारपक्षेऽपि प्रत्यादिरन्तरङ्गे एतदप्रवृत्तिनियमो-यत्सूत्रे भाष्ये वार्तिककारमतसिद्धान्त्युक्तेः यथोद्देशपक्षेण तस्य शुभावकाशमिति भावः । एतदेव ध्वनयन्नाह— परमिति । इदं शुभम् इति । अत्र तत्त्वं बोध्यम् । तदप्रवृत्तेरिति । सर्वथा तदप्रवृत्तेरित्यर्थः । नव्यमतेऽपि दीर्घमतादेनेऽपि । अन्यथा-

सिद्धत्वादित्यसिद्धवत्सूत्रे भाष्ये स्पष्टम् । एवं मिनि वृद्धेर्येननाप्राप्तिन्यायेन अन्तरङ्गबाधकत्वमूलकम् 'न सिच्यन्तरङ्गमस्ति' इतीति 'इको गुण–' इति सूत्रे भाष्ये स्पष्टम् ॥

नन्वेवमभ्यूरित्यादौ बहिरङ्गस्य उङोऽसिद्धत्वादन्तरङ्गो यण् न स्यादत आह—

॥ नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५२ ॥

अत्र 'षत्वतुकोरसिद्ध' इति सूत्रस्य तुग्ग्रहणं ज्ञापकम्; अन्यथा अधीत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्या-ल्ल्युत्पत्तिपर्यन्तमध्यसंहितया अवस्थानासंभवेन एकादेशे ल्यपि तुगपेक्षया

---

परिभाषाया अपि भाष्यप्रामाण्यादिति समानाश्रयत्वं बोध्यम् । अत एव परतया निमित्त-त्वेन तत्त्वं काचित्कं प्रागुक्तम् । आङ्पादीनामन्तरङ्गत्वं तु अल्पनिमित्तकत्वेन पूर्व-स्थितनिमित्तकत्वेन च बोध्यम् । पर्वं पूर्ववत् । सिचिवृद्धेरित्यस्य बाधकत्वेऽन्वयः । अन्तरङ्गेति । गुणेत्यर्थः । तस्य च तत्त्वं सख्यया घटकत्वेन च बोध्यम् । ज्ञापकं चात्र— 'अतो हलादे—' इत्यत्राद्ग्रहणम्, णिश्विप्रतिषेधश्च । अन्यथा अकोषीदित्यादौ गुणेऽन्त-गुरुत्वात्, अश्वयीदित्यादौ गुणायादेशयोरान्तर्यात्तदभावसिद्धिरिति तज्ज्ञापकम् । तेनानैनादी-दित्यादौ वृद्धिसिद्धिः, अन्यथा गुणायादेशयोर्यान्तर्यात्र स्यादिति बोध्यम् ॥

एवं सिजाभीयन्निपाद्यन्यत्र प्रागुक्तान्यतमान्तरङ्गत्वेन तत्प्रवृत्त्यङ्गीकारः । बहिर-ङ्गेति । यण्निमित्ताचो बहिर्भूतानिमित्तकस्योठ इत्यर्थः । अत्र च परस्थितनिमित्तक-त्वस्य बहिरङ्गत्वम्, पूर्वस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं च बोध्यम् । अत्र परिभाषा-याम् । यद्यपि भाष्ये 'यदयं षत्वतुकोरसिद्ध इत्याह' इत्युक्तम्; तथापि षत्वग्रहणं समासनिर्दिष्टत्वात्; न तु ज्ञापकम्, वक्ष्यमाणयुक्तेः; अत आह— तुग्ग्रहणमिति । तत्त्वमुपपादयति— अन्यथेति । परिभाषानङ्गीकार इत्यर्थः । समासस्य पूर्वत्वे हेतुमाह— समेति । तत्र समासे । अपिना तदनन्तरं सुनाग तत्सम्भूत सूचित । तन्नियत

पदद्वयसंबन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयासिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव। पदद्वयसंबन्धिवर्णद्वयापेक्षं बहिरङ्गमिति भेद्य इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन 'न धातुलोपे—' इति सूत्रे, 'संयोगान्तस्य लोपः' इति सूत्रे च भाष्ये स्पष्टम्। यत्तु— षत्वग्रहणमपि ज्ञापकम्; अन्यथा कोऽसिचदित्यादौ पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति; तन्न, इणः पूर्वपदसंबन्धित्वेन षत्वस्यापि पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात्। एकादेशस्य परादिवत्त्वेन ओसिचदित्यस्य पदत्वेऽपि सकारस्य पदादित्वाभावात्त 'सात्पदाद्योः' इत्यनेन निषेधः, अैपादिकेऽन्तरङ्गे कार्यकाल-

---

तदसंभवे हेतुः। तद्वैयर्थ्ये तुग्ग्रहणवैयर्थ्यम्। ननु पदद्वयसंबन्धिवर्णद्वयापेक्षत्वं बहिरङ्गत्वे हेतुः; तदेव दुर्ग्रहम्, भाष्यानुक्तत्वात् प्रागुक्तबहिरङ्गत्वलक्षणाभिमतत्वाच्च; अत आह— पदेति। आदिना उपेत इत्यस्य संग्रहः। तृतीयान्तमव्ययहितेनैवान्वेति। लोप इति सूत्र इति। तत्र हि आर्धधातुकनिमित्ते लोपे गुणवृद्धी भेद्यते भेद इत्यादावतिप्रसङ्गमाशङ्क्येत्य समाहितम्। ननु तत्र नेदृशं बहिरङ्गत्वम्; किं तु 'यदुपसर्गनिमित्तकम्' इत्यादिना प्रागुक्तरूपम्; अत एव वस्तुतस्तथास्थितमपि तथा तत्र नोक्तमत आह— संयोगान्तस्य लोप इति सूत्रे चेति। तत्र हि यणो लोपमाशङ्क्य प्रतिषेधमुक्त्वा 'दध्यत्रेत्यादौ बहिरङ्गो यणादेशः, अन्तरङ्गो लोपः' इति समाहितम्। तत्र चैक-पदीयवर्णाश्रयस्य लोपस्य, पदद्वयसंबन्धिवर्णद्वयाश्रितत्वं यणः स्पष्टमेव। यद्यपि तत्र न पदद्वयस्य तत्त्वमुक्तम्; तथापि तल्लक्ष्ये पदद्वयाश्रयो यण्। 'द्वे परे आश्रित्य सवर्णदीर्घो गुणोऽपि' इति भाष्यस्य 'सप्र-' इति सूत्रस्थभाष्यादिदमेव तात्पर्यम्। एवं भाष्यमपि। एवं च न तत्त्वेन तत्त्वम्; किंतु तन्निमित्तकत्वेन। अधीन्ये यादौ अन्यथा घटकत्वेन वाक्यनिमित्तत्वे-मान्तरङ्गत्वं बोध्यम्। पदद्वयसंबन्धिवर्ण विशेषणस्य तत्रानुपादानेऽपि लक्ष्ये वस्तुतस्तथाभूतत्वेन विशेष्यस्य तत्त्वेन घटकत्वनिर्वाहः। कैयटदीक्षिताद्युक्तिं खण्डयति— यत्त्विति। अपिना प्रागुक्तसमुच्चयः। आदिना कोऽस्येत्यादिपरिग्रहः। एकादेशस्य पूर्वं जातम्; तं विना तस्यैवाप्रवृत्तेः। षत्वाप्रवृत्तौ इण. एकत्वाभावात्। इणः ओकारस्य। अजर्थिम-ध्येऽन्तर्गतः। अपिरेकादेशसमुच्चायकः; तदाह— उभयोरिति। ननु समत्वेऽपि मास्तु षत्वग्रहणम्; सिचादिघटकैकदेशानिमित्तत्वेन पदत्वेन 'सात्पदाद्योः' इति निषेधे-प्रसिद्धिरित आह— एकेति। परादीनि। 'सकारस्य' इति शेषः। पूर्वं च तदर्थ-

पक्षेऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च । परिभाषार्थन्तु— अन्योऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्प्रकृतिर्न— बहिष्पदेन बहिरङ्गं तस्य भावो बहिरङ्गत्वं तत्प्रयुक्तासिद्धत्वस्य न प्रवृत्तिः न प्राप्तिरिति, 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्युक्त्वा 'नाजानन्तर्ये—'

---

मेव । अथ तत्प्रतिबन्धोऽपि शास्त्रीय कार्यम्, तर्हि उक्तरीत्या ओमिचादिदस्य पक्षेनैनः पूर्वपदासवर्णदीर्घत्वेन द्वयोरसमत्वात् ज्ञापक युक्तमेव । किं च न पदद्वयसम्बन्धिवर्ण- द्वयापेक्षत्वेन तन्यम्, उक्तहेतोः; क्तित्वल्पनिमित्तत्वादिनेति तत्र पक्षस्यैव तत्तद्- त्तमत्र तत् । तथा घटकत्वाङ्गीकारे न मानम् । तुको ज्ञापकत्वे इत्यपतिबध्यते । अत एव सामान्यतो भगवतोक्तमत आह— चैपेति । अणिर्यर्थादेशसमुदायक । यत्तु हरदत्तसीरदेवादयः— द्विवचनान्तेन समास । 'द्वयम् अस्ति' इत्यध्याहारः । अर्थगमनान्तर्ये यत्र द्वयमस्ति— बहिरङ्गं प्रवृत्तमन्तरङ्गं प्राप्नोति, अन्तरङ्गम् प्रवृत्त बहिरङ्ग वा; तत्र बहिरङ्गपरिभाषा नेति परिभाषार्थः । तथा चान्तरङ्गे बहिरङ्गे उभयत्र वाचोऽजानन्तर्ये बहिरङ्गपरिभाषाप्रवृत्तिर्नेति फलितमित्याहुः; तन्न, एतज्ज्ञापकपरकृतितद्ग्रहणवैयर्थ्यापत्तेः पक्षावेदमित्याद्यसिद्धबाधापत्तेः 'न धातुलोपे—' इति सूत्रस्थभाष्यविरोधापत्तेः' धर्ममाह- क्रमानविरोधापत्तेश्च । यदपि सीरदेवाद्य— संहिताधिकारीयकार्ये कर्तव्ये प्रागुक्तस्थले तस्य तदानन्तर्ये तदप्रवृत्तिरित्यर्थान्तरमाहुः, तदपि न, अक्षरमर्यादया तदर्थालाभात् उक्तान्यदोषावारणात् ज्ञापितेऽपि तस्याचारितार्थ्याच्च । यत्तु कैयटमाम्यादय— एक- वचनान्तेन समासः; न तु तथा, गौरवात् फलाभावाच्च । एव चोत्तरकालप्रवृत्तिकेऽच्य आनन्तर्ये तत्प्रतियोगिकानन्तर्ये निमित्तत्वेनाश्रिते तदप्रवृत्तिरित्याहु ; तन्न, अनुपदोक्ता- न्यदोषद्वयापत्तेरत आह— परीति । अच इति सम्बन्धसामान्ये षष्ठी, न तु स्थानषष्ठी, मूलविरोधापत्तेः । अन्तरङ्गे आनन्तर्ये चान्वयोऽस्य । तत्र अच्प्रतियोगिकानन्तर्यं इत्यर्थः । ज्ञापकस्य सजातीयविषयत्वादाह— जातस्येति । परिशेषादाह— बहिरङ्गस्येति । यद्यपि तादृशेऽन्तरङ्गे कार्ये बहिष्ट्वशब्देन परिभाषा गृहीता तदप्राप्तिरित्यर्थः सुवचः; तथापि त्वासमतिर्जातस्येति सजातीयार्थालाभश्च स्यादत आह— बहिष्पदेनेति । भाव इति । अग्रे 'बहिष्ट्वम्' इति शेष । शक्तिग्राह्य एव एव । तदर्थमाह— बहिरिति । प्रमाणापि तस्य निषेद्धुमशक्यत्वादाह— तन्त्रेति । अन्तरङ्गे इत्यस्य लाभे उक्तार्थस्य लाभ ; स एव न, अक्षरमर्यादया तदलाभेः । ऐच्छिकसंकल्पे तु किमि- 'ति प्राचीनोक्तार्थत्यागोऽत आह— असिद्धमिति । इति अन्तरङ्ग इति । विशिष्ट-

इति वक्ष्यामि' इति भाष्योक्त्या तत्रत्यस्यान्तरङ्ग इत्यस्यानुवृत्तिसूचनात् । तेन पपाविद्मित्यादौ न दोषः, अन्तरङ्गस्याच्चयानिकार्यस्यैतस्यान्यानन्तर्यनिमित्तकस्वाभावात् । जातस्य बहिरङ्गस्येत्युक्त्या अयजे इन्द्रं धियतीत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम् । अत एव 'इग्यणादिशीनामाद्गुणः सवर्णदीर्घत्वात्'

---

भाष्योक्तरीत्यर्थः । तथा च भाष्यानुपूर्व्येऽवगतीति तत्र वक्ष्यप्रत्ययेन तदानन्तर्यमनुवृत्त्यर्थमुक्तम्; अन्यथा वक्ष्यमाणसर्वतः स्पष्टम्; तदाह— तत्रेति । यद्दर्शन वारणं तत्सूचयितुं तद्रूपं तेनेत्यस्यार्थमाह— अन्तरङ्गेति । यद्यपि धातोरिति प्रकृतम्, तथापि तद्विहितविशेषणम् । एवं च तत्र तत्त्वमनैमित्तिकत्वेन पूर्वनिमित्तकत्वेनान्यनिमित्तकत्वेन वा बोध्यम् । जातस्येतिमात्रस्य फलमाह— जातेति । यत्तु सांप्रदायिकाः— असिद्धमित्येकस्या एवाङ्गीकारे अयजे इन्द्रमित्यादौ दीर्घोच्चारः परसंस्कारपक्षेण । यदाहु:— 'सुविधायं परस्यार्थे वाक्यं गृह्णन्ति सूरयः' इति । युक्तं चैतत्; अन्यथा तत्र पक्षे भिन्नपरिभाषाङ्गीकारेऽपि शब्दपरविप्रतिषेधेनान्तरङ्गत्वाभावात् गुणं बाधित्वा दीर्घ एव स्यात्, न्यायतो वचनस्य प्राबल्यादित्याहुः; तन्न, तावताप्यन्यत्रानिर्वाहात् अन्ततः परत्वमादाय विप्रतिषेधसूत्राप्रवृत्तेः 'अचः पर—' इति सूत्रे भाष्ये ध्वनितत्वाच्च; तदेतद्ध्वनयन् तस्य फलान्तरमाह— धियतीति । आदिना प्रादुद्रुवदित्यादिसंग्रहः । अत एवात्रोभयत्र तत्रावतमेवान्तरङ्गत्वं बोध्यम् । यद्यपीयङ्विधावजादौ प्रत्यय इति धातोर्विशेषणमिति न तस्यान्यानन्तर्यम्, तथापि विशेषणतया तदस्त्येव । यदि तु प्राधान्येनाच एवान्यानन्तर्यं स्यादर्थः, संभवात् । इयङ्विधौ तु न तथेति विभाव्यते, तदाद्यमेव प्रत्युदाहरणम् । अत एवोद्घातविरोधो न । 'पुगन्त—' इत्यत्र सिद्धान्ते प्राधान्येनाप्राधान्येन च न तस्य तदाश्रयणमिति णौङ्ग्रहणज्ञापकत्वपरभाष्यासंगतिः । दीक्षितमते अयमपि तत्र दोषो बोध्यः । एतेनेयङ्विधावचोऽन्यानन्तर्यानाश्रयणादिदं फलं चिन्त्यम् । यथा कथंचित्तत्वे प्रागुक्तणौङ्ग्रहणज्ञापकपरत्वमन्याविरोध इत्यपास्तम् । ननु प्रादुद्रुवदित्यादौ 'सार्वधातुक—' इति गुणात्प्राक् नित्यत्वाच्चङि 'द्विर्वचनेऽचि' इति निषेधादुवङभावे द्विर्भावपरत्वाल्लघूपधगुणो दुर्वार इति चेत्, न; अन्तरङ्गत्वाद्द्वित्वस्यैव प्राप्तेः । तस्य तत्त्वं च प्रयोगीयोच्चारणेत्याद्युक्तरीत्या । द्वित्वादुपधाकार्यप्राबल्येऽपि यथा न दोषस्तथान्यत्र स्पष्टम् । दीर्घेति । सवर्णदीर्घलघूपधगुणादेरित्यर्थः । अत्रार्थे वार्तिकमपि प्रमाणयति— अत एवेति । जातस्येत्यर्थाङ्गीकारादेवेत्यर्थः । एवमग्रेऽपि । अत्राद्यम् 'विप्रतिषेधे—' इति सूत्रस्थम्, अन्त्यम् 'क्ङिति च' इति सूत्रस्थम् । आदिना 'बहिरङ्गेण सिध्यति' इत्यादिपरिग्रहः ।

'शच्ङन्तस्य अन्तरङ्गलक्षणत्वात्' इत्यादिकं संगच्छते। अत एव 'ओमाङोश्च' इत्याङ्ग्रहणं चरितार्थम्। तद्धि शिव आ इहि इति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद्गुणे वृद्धिबाधनार्थम्। न चाक्षधूरित्यत्र यणि कृते ऊठोऽसिद्धत्वाद्वलिलोपापत्तिरिति वाच्यम्, अचोऽन्यानन्तर्यनिमित्तके अन्तरङ्गे कर्तव्ये, कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति तत्र च कर्तव्ये, नासिद्धत्वमित्येतदर्थात्। असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे स्वस्या वैयर्थ्यम्, तेनैव सिद्धे। अत एव 'नलोप सुप्—' इति सूत्रे कृति तुग्ग्रहणं चरितार्थम्; अन्यथा वृत्रहभ्यामित्यादौ बहिर्भूतभ्यान्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया

---

सूत्रमप्यत्रार्थे प्रमाणयति— अत एवेति। अन्यथा तदानर्थक्यं ध्वनयितुमाह— तद्धीति। निमज्यान्वाख्याने इदम्। धातूपेति। क्रियाया साध्यतया धातुत प्रतीत्या सर्वत प्राङ् साधनाकाङ्क्षानीयत्वेन तद्बोधकप्रत्ययोत्पत्त्यनन्तर प्राक् स्वार्थद्योतकत्वेन साकाङ्क्षतया धातोरुपसर्गयोगे तत शिवशब्दस्य समुदायेन योगाङ्गस्यान्तरङ्गत्वमिति 'सम्प्रसारणाच्च' इति सूत्रभाष्योक्तया धातूपसर्गकार्येऽपि प्रक्रियाक्रमेण पूर्वोपस्थितनिमित्तकत्वेनैवान्तरङ्गत्वम्, न तु तत्त्वेन। एतेन पक्षमान्तरङ्गत्वस्याभावेनेद चिन्त्यमित्यपास्तम्। 'मध्येऽपवादाः—' इति न्यायेनास्य तादृशार्थज्ञापकतापि प्रागुक्ता अविरुद्धा, अन्यथा आनर्थक्यमेवेति भाव। हरदत्तादिकैयटादिमतसाधारणं दोष स्वमतेनाशङ्कते— न चेति। अत एवैवमित्यनुक्ति। असिद्धत्वात् परस्थितनिमित्तकत्वेन बहिरङ्गत्वेन 'असिद्ध बहिरङ्गम्—' इत्यनेन। निषेधस्तु न कस्यापि मते, पूर्वस्थितनिमित्तकत्वेन अन्तरङ्गलापस्याघ्सन्धिकार्यत्वाभावात्। यणस्तेनैवासिद्धत्व तु न, समत्वेनातत्त्वात्। कैयटहरदत्तादिमतेन माधत्ते— अच इति। कृते चेति। 'न मु ने' इतिवदिति भाव। एतदर्थात् उक्तपरिभाषार्थात्। एतदङ्गीकर्तृबृहद्वृत्तिकारोक्तिं खण्डयति— असिद्धेति। अनित्यत्वेनेति। अस्याप्राप्त्येति शेष। तद्वारणे लोपापत्तिवारणे। अस्याः नाजानन्तर्य इत्यस्या। तेनैव अनित्यत्वेनैव। इष्टापत्तिं खण्डयति— अत एवेति। परिभाषास्वरसाश्रयं। अन्यथा अनित्यपरिभाषयैव निर्वाहादेतदनङ्गीकारे। स्वाश्रयत्वेन तन्निमित्तत्वेन। तया च परम्परया निमित्तत्वेन बहिरङ्गत्वस्य क्वाचित्कस्यात्रापि स्वीकार इति भ्यान्निमित्तकत्वेन परनिमित्तकत्वाद्बहिरङ्गत्व बोध्यम्। 'नलोपस्यासिद्धवचन' इति पाठ। न चानित्यत्वात्तदप्रवृत्ति, इष्टस्थलेऽप्यप्रवृत्तौ न्यायस्य निष्प्रयोजनतापत्ते। अत एवायुक्तमर्थ-

नलोपस्यासिद्धत्वेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव । मम तु तुकि अजानन्तर्यसत्त्वान्न दोषः । न चैवं सति 'ह्रस्वस्य पिति—' इति सूत्रभाष्यविरोधः; तत्र हि ग्रामणिपुत्र इत्यत्र 'इको ह्रस्वोऽङ्यः—' इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्; 'नाजानन्तर्ये—' इत्यस्य सत्त्वे तत्र तदप्राप्तेरसंगतिः स्पष्टैवेति वाच्यम्, तेन भाष्येणास्या अनावश्यकत्वबोधनात् एतज्ज्ञापकेन अन्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात् । अत एव 'अचः परस्मिन्—' इति सूत्रे भाष्ये पटु ई आ इत्यत्र परयणादेशस्य तया असिद्धत्वात्पूर्वयणादेशः साधितः । अत एवैषा भाष्ये पुनः क्वापि नोल्लिखिता । अत एवान्तरङ्गपरिभाषामुपक्रम्य, विप्रतिषेधसूत्रे 'अस्या बहूनि प्रयोजनानि सन्ति;

---

माह— मम त्विति । परिभाषाङ्गीकर्तुरित्यर्थः । तुकि तद्विधायके 'ह्रस्वस्य—' इति सूत्रे । अजेति । अचोऽव्यानन्तर्याश्रयणसत्त्वादित्यर्थः । तया चानसिद्धत्वेन तद्वारणाय तदावश्यकमिति भावः । चैवं सति परिभाषाङ्गीकारे सति । तुकमिति । प्रत्ययलक्षणेन क्विपमाश्रित्येति भावः । बहिरिति । ततो बहिर्भूतोत्तरपदनिमित्तकत्वेन परनिमित्तकत्वादिति भावः । एवं सतीष्टमुक्तार्थमाह— नाजेति । तत्रेति । ग्रामणिपुत्र इत्यत्र ह्रस्वे बहिरङ्गासिद्धत्वाप्राप्तेरुक्तभाष्यासंगतिरित्यर्थः । अस्याः नाजानन्तर्य इत्यस्याः । ननूक्तादिफलानां ज्ञापकानां च सत्त्वात्कथमनावश्यकत्वमत आह— एतदिति । 'नाजानन्तर्ये—' इत्येतज्ज्ञापकत्वाभिमतेन 'षत्वतुकोः—' इति तुग्ग्रहणेनेत्यर्थः । न्याय्यत्वादिति । वचनानारम्भलाघवादिति भावः । एषः परिभाषायाः पृथक्छेदाय । न्याय्यत्वमेवोपपादयति— अत एवेति । अस्या अनावश्यकत्वेनासत्त्वादेवेत्यर्थः । तया असिद्धपरिभाषया । साधित इति । एतत्सत्त्वे तु निषेधात्तदसंगतिः स्पष्टैव । ननु नेदं युक्तम्, एतत्सत्त्वेऽपि प्रायुक्तरीत्या तत्राप्राप्तेरत आह— अत एवेति । उक्तोऽर्थः । पुनः क्वापि विप्रतिषेधसूत्रातिरिक्ते । अन्येषामपि तत्र फलार्थमुल्लेखेनावश्यकत्वमेव; न हि बहुप्रयोजन आवश्यकत्वसाधकोऽतिप्रसङ्गापत्तेरत आह— अत एवान्तेत्यादिभाष्य इत्यन्तेन । 'सम्प्रसारणाच्च' इति सूत्रे भाष्येऽन्तरङ्गपरिभाषामुपक्रम्य इत्युक्तमित्यन्वयः । इतीति किम्? तदाह— विप्रेति । 'इदं तर्हि प्रयोजनम्— वृक्षा अत्रेत्यत्र विभज्यान्वाख्याने वृक्ष अस् अत्र इति स्थिते रुत्वे उत्वसवर्णदीर्घयोर्युगपत्प्राप्तौ प्रादुर्भावदशायामेवोत्वादन्तरङ्गत्वात्पूर्वं सवर्णदीर्घः । तत्रावश्यमिदमेव फलम्' इत्यादिः । अस्याः अन्तरङ्गपरिभाषायाः । ननु नैतावतैतदभा-

तदर्थमेषा परिभाषा कर्तव्या। प्रतिविधेयं दोषेषु' इत्युक्तम् 'संप्रसारणाच्च' इति सूत्रे भाष्ये। प्रतिविधानं च परिभाषाविषये अनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥

---

यसिद्धि, अनेन फलानामन्यप्रतिविधानाना च तत्रोक्तत्वमत्राजानन्तर्य इत्यस्या अपि तत्त्वेन तत्रोक्तत्वादत आह— प्रतीति । परिभाषाविषये असिद्धपरिभाषायें । एतेन विप्रतिषेधसूत्रोक्तप्रतिविधाननिरास । ध्वनितमिति। 'प्रतिविधेय दोषेषु' इति विधिप्रत्ययान्तप्रकृतिकैकवचनान्तबहुवचनान्तदोषश दप्रयोगेण' इति शेष, तथेष्टत्वे तु दोषेषु प्रतिविधानान्युक्तानीति वदेत, तत्रोक्तत्वादत्र नैव वा वदेत । तस्मादसर्वदोषेष्वेक प्रतिविधान ततोऽयत्कार्यमिति तदर्थ । तथा तु तदनित्यत्वमेव नान्यथा, विप्रतिषेधसूत्रस्थभाष्योक्तिरेकदेशिन इति तत्तात्पर्यम् । तथा प्रतिपादरसीरदेवादयोऽपि चिन्त्या एव। अक्षद्यूरित्यादावनित्यत्वादेव निर्वाह इति तदर्थमावश्यकत्ता न। अत एव निर्मूलापि, मूलशैथिल्यात् लुगेकादेशयो प्रत्येक निमित्तद्वयापेक्षत्वेन समत्वात् अन्यस तत्त्वस्य दुर्वचत्वाच्च तथापठकत्वाङ्गीकारेऽतिप्रसङ्गापत्तेश्च । एव चैतज्ज्ञापकपरम् 'विप्रतिषेधे—' इति सूत्रस्थ भाष्यमनर्दयुक्तिरेव। अत एव तत्र भाष्ये ज्ञापकानुपादान सामान्योक्तिश्च । अत एव लुग्ग्रहणमावश्यकमेवेति भाव । नन्वेव बृहद्विवरणासेरीपत्समर्थनेऽपि कृति लुग्ग्रहणवैयर्थ्यापत्तिरेवेति चेत्, इष्टापत्ते, सनिपातपरिभाषयेष्टसिद्धिमाश्रित्य भाष्ये तस्य प्रत्याख्यानादिति केचित्। तस्या अनित्यत्वमेव तेन ज्ञाप्यत इति न वैयर्थ्यमिति सीरदेवादय । वस्तुतस्तु सन्नाकृत बहिर्भूतनिमित्तकसन्नाकृत व्यवहितनिमित्तकृत च बहिरगत्व नाश्रीयते इत्यर्थज्ञापकतया तत्साफल्यस्य प्रागुक्तत्वेनासिद्धपरिभाषया सिद्धयभाव । तया सिद्धिमाश्रित्यैतत्प्रत्याख्यातमित्यन्यदेतदिति न दोष । एव चासिद्धेत्यादिनिरोप इत्यन्ततया सिद्धिमाश्रित्यैतत्प्रत्याख्यातमित्यन्यदेतदिति न दोष । अत एव पूर्वापरग्रन्थविरोधो न। प्रागुक्ति प्राचा तथा बहिरङ्गत्वमङ्गीकुर्वतामनुरोधेन । अत एव पूर्वापरग्रन्थविरोधो न। किंचैतत्सत्त्वेऽपि 'कृते च' इत्यादिद्वितीयार्थानुपयोग, अक्षद्यूरित्यत्रोठोऽसिद्धत्वाद्वलिलोपप्राप्ते 'अच —' इति स्थानिवद्भावेन सुवारत्वात् प्रत्येषिषन्नित्यादौ जुसोऽभावाय पञ्चमीसमासस्यावश्यकत्वात् प्रतिगणय्येत्याद्यर्थे तदनित्यत्वेऽपीष्टस्थले प्रवृत्तेरप्रत्यूहत्वात् पूर्वस्मान्निमित्तत्वेनाश्रितादिति कैयटस्य दूषितत्वात् स्वविधाविषयस्य स्वोद्देश्यकविधौ प्रवृत्ते । न च 'न पदान्त—' इति निषेध, उक्तोत्तरत्वात्। एव च तथार्थकरण प्रागुद्द्योतादौ च पञ्चमीसमासानङ्गीकर्तृमतानुरोधेनेति न तद्विरोध इति बोध्यम्, तदाह— इत्यलमिति ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वा अन्तरङ्गत्वाद्धल्ङ्यादिलोपे नुमादयः स्युरत आह—

## अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥ ५३ ॥

अत्र च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रं ज्ञापकम्। त्वत्पुत्रमित्यादौ लुगः समासान्तरङ्गत्वाद्द्विपदाश्रितनिमित्तत्वेन 'त्वमावेकवचने' इत्यनेन सिद्धे इदं व्यर्थं सदेतज्ज्ञापकम्। ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेन्, एवं तर्हि अन्त्यमपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्याशयः। युष्मदादिभ्य आचारक्विप् तु न, संपूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात् 'ह्रस्वनद्यापः' इति ज्ञापकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विभा-

वाच्च । एवमनेकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकप्रकृतिकाणिनोऽप्यनभिधानं बोध्यम् । एतेन तदादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम् । ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था; न च 'उत्सर्गसमानदेशा अपवादाः' इति न्यायेनासिद्धत्वसूत्रस्थभाष्यसंमतेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम्, तस्य त्वमकजादौ व्यभिचारादिति चेत्, न; त्वमिमित्येन बहुनि पुरस्तादहणेन अग्रानि प्राचेटर्ग्रहणेन तस्य बाधेऽप्यप्रोत्सर्गस्य त्यागे मानाभावात् । अत एव 'तरिमन्नणि च—' इत्यनेन युष्माकायादेस्त्यागे

अजन्ता हलन्तेभ्य आचारक्विप्विधेरीय मतम्, 'सर्वप्रातिपदिकेभ्य — इत्यस्य तत्वात्, तस्मात्पक्षेऽपि एतद्व्याख्यानेभ्यस्तदभाव एव' इति न्यास । अवगल्भादौ त्वकारान्ततरस्य प्रक्षिप्तस्याभ्युपगन्तव्यत्वादाम हलन्ततेति तद्भाव । एवमिति । विनर्देश्यर्थं । प्रातिपदिकाभ्यां युष्मदस्मद्भ्याम् । इत्यन्तमतनिरासायाह— प्रातीति । तदा हि प्राग्युत्प्रत्ययतय भवेत् । अपिना अत्यन्तस्वार्थिकतद्धितोऽपि संग्रह । अनभिधानमिति । आत्तोरिति भाव । अत्र बोध्यमित्यनेन सूचितारुचिस्तु तसंकदर्युक्तत्वरूपांतेष्पति नेदन्तमिति । प्राचोक्तं दूषयति— एतेनेति । त्रिवचनेनेत्यर्थ । तयेति । हित्वमोरादेशार्थमित्यर्थ । यत्तु कैयटादय — तदनुवृत्ति केवला स्थानिका; तदभावे हि आदेशान्तराणामपि बाधकौ तौ सर्वादेशौ स्याताम्, अनेकाल्त्वात् । 'उत्सर्गसमान—' इति तु भ्रमादौ व्यभिचारितम् । तस्मात्तदादीना प्रकृते इत्यर्थद्वारा स्थानिप्रकल्पनया वा तत्रायनुवृत्ति, न तद्विना तदनुवृत्तिमायिना, केवला हि तदनुवृत्तिर्लाघवाय स्यात्; गरीयसी हि तत्रायनुवृत्त्या इत्यनिप्रतीतिरिति तत्सामनाय न भवेदिति; तदयुक्तमतिगुरुत्वादिति ध्वनयन्नाह— नन्विति । अपि सूत्रसमुच्चायक । अप्रामाण्यनिरासायाह— असिद्धत्वादिति । तदनुवृत्तिः मपर्यन्तग्रहणानुवृत्तिः । तस्य उत्सर्गसमानेति न्यायस्य । आदिना बहुचो ग्रहणम् । भ्रमीति । अव्ययकिनोऽधिकरण विवक्षया सप्तमी, यद्वा तस्य 'बाधेऽपि' इत्यनेनान्वय । अत एव बहुची यादिमदति' । पुरस्तादिति । तद्विधिसूत्र इति भाव । एवमग्रेऽपि । तस्य उत्सर्गेति न्यायस्य । अत्र त्वमयोः । उत्सर्गस्य बाधाभावे सर्वत्र प्रवर्तमानस्य 'उत्सर्ग—' इति न्यायस्य, अत एव वक्ष्यति— उत्सर्ग स्वीक्रियत इति । प्रत्युत तत्त्यागे एव मानमित्याह— अत एवेति । तस्य तादृश

शविधानं चरितार्थम्; अन्यथाकङादेशमेव विदध्यात्। आकङि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादेशत्वापत्तिः; अतस्तद्विधानम्। इदमेव च तज्ज्ञापकम्। यद्यपि विरोधे बाधकत्वमिति वार्त्तिकमतेऽयं न्यायः। भाष्यकारस्तु विनापि विरोधं सत्यपि संभवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमः; तथापि युष्माकाद्यादेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः। एतज्ज्ञाप्यमपि तत्स्वीकारे मानम्। एवं च मपर्यन्तानुवृत्तिस्त्वत्कृतमित्यादौ मपर्यन्तस्यादेशविधानार्था; तत्र च मपर्यन्तेऽन्तरङ्गत्वात् 'त्वमौ—' इत्येव सिद्धे व्यर्था सैनज्ज्ञापिका। ज्ञापिते स्वस्मिन्नेतद्विषये तवादी-

---

सार्वत्रिकत्वाङ्गीकारेणेत्यर्थः। अन्यथा व्यभिचारेण तस्यैवानङ्गीकारे। प्रतिपादितलाघवायाह— आकङीति। अन्यथा आकङमेव विदध्यात्; अस्य ङित्त्वादन्त्यादेशत्वेऽप्यपवादयोस्तवकममकादेशयोरनेकाल्त्वात्सर्वादेशत्वसिद्धिरिति भावः। तद्दूषयन्नाह— आकङीति। 'क्रियमाणे सति' इति शेषः। उक्तेति। उत्सर्गेत्यर्थः। तद्विधानं युष्माकाद्यादेशविधानम्। ननु तस्य भाष्यसम्मतत्वेऽपि तत्साफल्यकारित्वयोरपि मूल एव कुठारः, अत आह— इदमेवेति। युष्माकाद्यादेशविधानमेव चेत्यर्थः। ज्ञापिते चरितार्थं सूक्तमेव। विरोधे सत्येव। अयमिति। उत्सर्गेत्यर्थः। विरोधो ह्यपवादस्यैव बाधे कारणम्, न विशेषविधानमेव; स च समानदेशत्वे सत्येव घटते नान्यथेति तन्मते तस्यावश्यकत्वमिति भावः। अपिना विरोधसमुच्चयः। बाधकत्वमिति। 'विशेषविधानमात्रेण' इति शेषः; तक्रकौण्डिन्यन्यायमूलकेन तेन नेति न्यायेनेति भावः। ननु सत्यपीत्याद्यभिप्रायमसंभवस्यापि बाधहेतुत्वस्वीकारात्कान्याय आवश्यकोऽत्र मते दुर्वचोऽत आह— नायं नियम इति। एवं च तेनानिर्धारितान्यपर्यन्तानुवृत्तिः सफलेति कथं ज्ञापकतेति भावः। उत्सर्गः उक्तोऽर्थः। एवेतीति। अन्यथा तद्वैयर्थ्यापत्तिरिति भावः। प्रकृते त्वादिविषये। ननु यथोत्तरं मुनीनां प्रामाण्यादनियम एव युक्तः; नोत्सर्गस्वीकारोऽत आह— एतदिति। मपर्यन्तग्रहणानुवृत्तिज्ञापकपरसूत्रभाष्येत्यर्थः। एवं च द्वयोः समन्वयेष्टतो व्यवस्थया युष्माकाद्यादेशविधानसहकृतभाष्येण प्रकृते तथैवाङ्गीक्रियत इति तदनुवृत्तिज्ञापकता सुलभा; तदाह— एवं चेति। प्रकृते तन्न्यायाङ्गीकारेण त्वत्पुत्र इत्यादौ बाध्यबाधकभावेन सूत्रेण निर्देशेन सूत्रसाफल्ये चेत्यर्थः। विधानार्थेति। अस्य चाप्येति शेषः। तत्र च त्वत्पुत्रमित्यादौ च। अन्तरङ्गत्वादिति। 'उत्तरीत्या सुवर्णभया' इत्यादिः; तत्र तदनुवृत्तेः सत्त्वादिति भावः। अस्मिन् 'अन्तरङ्गानपि—' इति न्याये। एतद्विषये मपर्यन्तर-

अन्ये— अन्तरङ्गांश्च विधीन् सर्वोऽपि लुग्बाधते, न सुब्लुगेव। अत एव सर्नीलस इत्यादौ नलोपो न भवति। पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादावेकादेशात्प्रागेव टापो लुक्। अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयटे उक्तम्। एतद्विरोधात्, यत् 'तद्राजस्य—' इति सूत्रे कैयटेनोक्तम् अङ्गानतिक्रान्तोऽत्यङ्ग इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात् 'तद्राजस्य' इति लुङ् न स्यादिति शङ्कापरभाष्यव्याख्यानावसरे— 'अन्तरङ्गानपि—' न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्कय सुब्लुक एवानेन बलवत्त्वं

---

प्रधान था। लुक् तु समुदायनिमित्तक इति भेदादिति केचित्। अन्ये तु तस्य प्रसक्तवर्णादर्शनमात्र निमित्तम्, लुकस्तु प्रत्ययादर्शननिमिति भेदेन तस्यमित्याहु.। वस्तुतस्तु अन्तरङ्गानपि विधीन् बाधमानो लुक् बलवानिति अतुल्यबलेन लोपेन स्पर्धा नार्हतीति विप्रतिषेधो नोपन्यसनीय इति हि तत्र कैयटेनोक्तम्। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इत्यस्य भाष्यांशस्तेऽत्यन्त ज्ञापितत्वासिद्धमिति विप्रेति सूत्रे उक्तम्; तस्याय भावः— आभ्यां परनित्ययोः समप्रहारपरनिरवकाशान्तरङ्गबाधकत्वेनापवादतुल्यत्वप्रतिपादने विप्रतिषेधसूत्रादीना तद्विषयेऽप्राप्तिरिति न तस्यान्तरङ्गाद्यपेक्षेति। अत एव तत्रान्तरङ्गत्वानुपपादनमिति बोध्यम्। अन्ये 'न यासयो.' इत्यादौ। चोऽप्यर्थे। उक्तार्थं द्रढयति— **अत एवेति**। न्याये लुङ्मात्रग्रहणादेवेत्यर्थः। अस्योभयत्रान्वयः। **नलोप इति**। अन्यथा यङन्तादपि पूर्वोपस्थितनिमित्तकत्वेन अन्तरङ्गत्वात् 'यङोऽचि' इति लुकः प्राक् 'अनिदिताम्—' इति स्यादिति भावः। **एवेति**। अत्र 'टापा सह' इत्यादिः। **लुगिति**। लुक् च भवतीत्यर्थः। अन्यथा अत्रोक्तरीत्या न्यायाप्रवृत्तौ। **कृतैकादेशस्येति**॥ टाप इत्यर्थं। विभक्त्यन्वाख्याने प्रमाणान्वाख्याने च एकेत्यादावन्तरङ्गत्वादिति भाव.। 'आदिमत्त्वाद्यप्रहणेन प्रहणाल्लुक्तद्धितेति' इति शेष'। तत्र हि 'ह्यकाः प्रतिषेधः' इति वार्तिकखण्डनाय 'मृदास्तिकन्' इतीत्वनिर्देशस्य ज्ञापकत्वे भाष्योक्ते ज्ञापकताखण्डनाय पञ्चमृत्तिक इत्यादौ क्रीतार्थठकः 'अध्यर्ध—' इति लुकि 'लुक्तद्धित—' इति टापो लुकि ह्रस्वमात्रादित्वाप्राप्तावित्वनिर्देशः सफल इत्युक्त्वा तदुपपादनाय अन्तरङ्गाद्येत्युक्त तेन। नन्वेत्र कैयटयोः पूर्वापरविरोधोऽत आह— **एतदिति**। उक्तसभाष्यकैयटद्वयेत्यर्थः। अत्र च प्रोक्ते हेतुः। तत्सूत्रे तदवसरे इत्याशङ्कय, इति यत्तेनोक्त तदुक्तविरोधात्प्रोक्तमिति द्रष्टव्यमित्यन्वयः। **अङ्गानिति**। अत्र 'प्रत्ययग्रहणेपक्षे 'इत्यादिः। सुपः शसः। अयं लुक् 'तद्राजस्य—' इति लुक्। एव च

परस्य' इति वृद्धिनिषेधो व्यर्थः । अन्तादिवद्भावस्तु उभयत आश्रयणे निषिद्धः । किं च वृद्धिरप्यत्र न प्राप्नोति, अन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वेन एकादेशविशिष्टे पूर्वपदत्वे न्द्रशब्दस्यैकदेशविकृतन्यायेन 'उभयत आश्रयणे नान्तादिवत्' इत्यस्याभावेन तदाश्रयणे वोत्तरपदत्वेऽपि तस्यानच्कत्वात् एकस्यैकादेशेना परस्य नित्येन 'यस्य—' इति लोपेनापहारात् । न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम्, उत्तरपदाद्यच्स्थानिकत्वाद् वृद्धेस्तदभावेनाप्राप्ते ताद्रूप्यानतिदेशात्, अन्यथा खट्वाभिरित्यादावपि पूर्वान्त-

---

**अन्तादीति** । **उभयत इति** । पूर्वपरशब्दाभ्याम् अन्तादिशब्दाभ्यां च विरोधस्य पुरःस्फूर्तिकत्वाद्विरुद्धातिदेशद्वयस्यैकत्र युगपदसम्भवः, यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्विप्रदेशकार्ययोः प्रेरितोऽविरोधार्थी कस्यापि कार्यं न करोति, तद्वदिति न्यायसिद्धमिदम् । ननूभयत आश्रयणेऽन्तादिवत्त्वाभावेऽपि तद्रूपत्वे व्यपवर्गाभावेऽपि वा विकारविशिष्टे सौमेऽ-न्यन्तवद्भावेन पूर्वपदत्वे न्द्रशब्दे 'एकदेश—' इति न्यायेनेन्द्रशब्दत्वात्सामर्थ्यादस्य 'देवता—' इति प्राप्तवृद्धिनिषेध एवास्तु, अत आह— **किं चेति** । अपिरेवार्थे । अत्र सौमेन्द्र इत्यत्र । **अन्तादीति** । एतद्रूपोभयेत्यर्थः, उक्तनिषेधादिति भावः । न्यायेनेत्यस्य उत्तरपदत्वेऽपीत्य-त्रान्वयः । ननु 'उभयत आश्रयणे—' इति निर्मूलम्, घटितघटितशास्त्रस्याहार्यारोपबाध-कत्वेन तस्य च विरुद्धविषयस्यापि युगपत्सम्भवेन लौकिकन्यायनात्रेतास्य सिद्ध्यभावात् अन्तादिवत्त्वेऽपि व्यपवर्गाभावेनोपसर्गात्परत्वस्येण्यभावाभावायादित्यादिसिद्धेश्च । 'उपसर्गस्यायतौ' 'अन्तादिवच्च' 'न पदान्त—' 'गोस्त्रियो—' इत्यादिसूत्रभाष्ये तदुक्तेस्तु एकशासन इति स्पष्टमुक्तत्वादत आह— **उभयत इति** । **तदाश्रयणे चेति** । अन्तादिवत्त्वोभयाश्रयणे इत्यर्थः । यद्यपि पक्षद्वयेऽप्याहार्यारोपबाधकत्वेना यपवर्गो दुर्निरूपः, तथापि मूलमत्र नेत्याह— **तस्येति** । न्द्रशब्दस्येत्यर्थः । एवं च न्द्रशब्दस्येत्येव पूर्वं पाठो बोध्यः । अस्योपादानेन सम्यक्पाठो वा । अनच्कत्वे हेतुमाह— **एकस्येति** । प्रथमस्येत्यर्थः । अत एवाह— **अपरस्येति** । ननु परत्वाद्वृद्धिरस्तु, अत आह— **नित्येनेति** । **एकेति** । एन्द्रशब्दस्यैवेत्यर्थः, एवकारस्यात्रान्वयात् । यद्वा यथाश्रुत एव, एकादेशविशिष्टस्य पूर्वपदत्वव्यवच्छेदकः सः । एवं चार्थान्मान्त 'एकदेश—' इति न्यायेन पूर्वपदत्व बाध्यम् । तत्सम्भव वृद्धिप्राप्तिसम्भवः । एवं च निषेधः सफलः । तदभावेन आदिवद्भावेन । तत्त्वादित्त्वस्थानि तदभावेनाऽप्राप्ते, आह— **ताद्रूप्येति** । पूर्वान्तपरादिवत्त्वाभ्यामा-द्यन्तवत्त्वाभ्यां ये व्यवहाराः प्रत्यय प्रातिपदिकत्वसुबन्तत्वादयः, त इतीकारत्वादयोऽपि स्युः इति भावः । अन्यथा ताद्रूप्यातिदेशे । अपि शब्दात्स्य इत्यादिसमुच्चायकः ।

वत्त्वेनादन्तत्वे भिम ऐमापत्तिरिति भाष्ये स्पष्टम् । अत एव पूर्वपुरामशाम इत्यादावन्तरङ्गत्वादाद्गुणे वृद्धिर्न स्यादित्याशङ्कितम् । तदेकदेशमात्रस्य विकाराभावाच्च । तदुक्तं भाष्ये— 'इन्द्रं द्वावचौ । एको यस्येति लोपेनापहृत, अपर एकादेशेन । अतोऽनच्क इन्द्र' संपन्न । तत्र कः प्रसङ्गो वृद्धे' इति ।

मरुदादिभिरिन्द्रस्य द्वंद्वे इन्द्रस्यैव पूर्वनिपातोऽत आह—

**पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न ॥८४॥**

अत्र च 'नेन्द्रस्य—' इति निषेध एव ज्ञापक इति 'अन्तादिवच्च' 'विप्रतिषेधे परम्—' इति सूत्रयोर्भाष्ये स्पष्टम् ॥ ८४ ॥

नन्वेवमपि प्रधाय प्रस्थायेत्यादावन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यप् स्यादत आह—

---

त्त्वेति । भिसादीनामिसाद्यापत्तिरित्यर्थः । भाष्ये 'अन्तादिवच्च' इति सूत्रे । अत एव द्गुण्यानतिदेशेनाद्वित्वाभावादेव । पद्मेत्यादिवदन्तरङ्गत्वम् । वृद्धि. 'प्राचां ग्राम—' इत्यनेन । इषुग्रामशमीवादस्य प्राग्ग्रामत्वाधिक्यात् । आशङ्कितम् उभयत्र भाष्ये । समाधिस्तु परिभाषारूप एव । ननु सोमेन्द्रे यथा 'एकदेश—' इति न्यायेन मान्तस्य पूर्वपदत्वम्, तथैकदेशविशिष्टस्योत्तरपदत्वमपि स्यादिति वक्ष्यमाणभाष्यासंगतिरेवात आह—

तदेकेति । गुणरूपविकारस्योत्तरपदैकदेशमात्रसम्बन्धित्वाभावात्तस्योभयस्य निकत्वादित्यर्थः । एवं च यत्रानन्यत्वम्, तदेकदेशमात्रविकारस्य तत्र ग्रहणमिति भावः । तेन कर्तुमशक्यमिति भाव । तदुक्तम् तदेतत्सर्वमभिप्रेत्योक्तम् । भाष्ये 'अन्तादिवच्च' इति सूत्रस्थे । ननु माहेन्द्रमित्यत्र हलन्तपूर्वपदत्वेनैकादेशाभावाद्विभक्तौ निषेधः सफलोऽस्त्विति चेन्न, ज्ञापकपरोक्तभाष्यासंगत्यापत्त्या तेषामनभिधानादत आह— मरुदादिभिरिति । ननु पूर्वनिपातप्रकरणस्यानित्यत्वात्तथेति चेन्न, ज्ञापक-आह— द्वंद्वेति । निमित्तेति । बहुव्रीहिः । निमित्तत्वं च यथाकथंचित् । नेति । अस्य 'प्रवर्तते' इति शेष । अत्र च उक्तपरिभाषाया च । यथा चैतत्, तथात्रतत्र एवोक्तम् । भाष्य इति । तत्र ह्युक्तभाष्यादौ 'पश्यति त्वाचार्यः— पूर्वोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति । ततो नेन्द्रस्येति निषेधं शास्ति' इत्युक्तम् ॥

एवमपि स्थलत्रये निर्वाहेऽपि । आदिना प्रस्थाय प्रस्थन्येत्यादिसंग्रहः । अन्तरङ्गत्वात् अनेकपदाश्रयसमासनिमित्तकल्यपपेक्षयैकपदीयप्रकृतिप्रत्ययापेक्षत्वेन घटकत्वेन तत्त्वात् । द्वित्वादिषु 'दधातेर्हिः' इत्यादिषु । आदिना 'द्यतिस्यति—' 'जनसन' इत्यादिपरिग्रहः । स्यादिति । एवं चानिष्टरूपापत्तिरिति भाव. । अपि. कैमुतिकन्यायेन

## अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यप् बाधते ॥ ५५ ॥

'अदो जग्धि:—' इति सूत्रे क्तीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमिति 'अदो जग्धि:—' इत्यत्र भाष्ये स्पष्टम् ॥ ५५ ॥

नन्वेवमपि इयायेत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात्सवर्णदीर्घत्वे तदसिद्धिरत आह—

## वार्णादाङ्गं बलीयो भवति ॥ ५६ ॥

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः । 'अभ्यासस्यासवर्णे' इति इयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम् । तद्धि ईयतुरित्यादावियङादिव्यावृत्त्यर्थम्; एतत्परिभाषाभावे तु ईयतुरित्यादावन्तरङ्गेण सवर्णदीर्घेण

---

प्राग्वत्स्वरादिसमुच्चयाय । **स्पष्टमिति** । ननु स्थानिवत्सूत्रेऽल्विधौ स्थानिवत्त्वाभावे ज्ञापकमिदमुक्तं भाष्य इति तयोर्मिथो विरोध इति चेत्' न; 'यावता विना यदनुपपन्नं तस्य सर्वस्य ज्ञाप्यत्वम्; न त्वेकैकमिति नियमः' इति कैयटेनैवोक्तत्वात् ॥ ५५ ॥

**एवमपि** ल्यब्विषये निर्वाहेऽपि । 'द्विर्वचनेऽचि' इति निषेधेन द्वित्वात्प्राङ्न वृद्धिरित्याह— **द्वित्व इति** । **अन्तरङ्गत्वात्** पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वात् । **दीर्घत्वे** 'कृते' इति शेषः । **तदसिद्धिः** इयायेत्यसिद्धिः, आयेत्यस्यैव प्राप्तेः । **तेनेति** । वचनाङ्गीकारेणेत्यर्थः । तदेव प्रतिपादयितुं तत्फलमाह— **तद्धीति** । यतोऽसवर्णग्रहणमित्यर्थः । आदिना ऊयतुरित्यादिपरिग्रहः । **इयङादीति** । 'क्त्वादिगुणाभावे सवर्णे अचि परत' इत्यादिः । आदिनोवङ्परिग्रहः । **भाषाभावे त्विति** । अत्राकारप्रश्लेषः । एवमग्रेऽपि । **बाधादिति** । अस्य 'इयङुवङोः' इत्यादिः । तथा च तयोरप्रसिद्ध्याऽसवर्णग्रहणं व्यर्थं सत्तत्कार्यज्ञापकमिति भावः । ननु परनिमित्तकत्वस्य तुल्यत्वात्कथं तत्त्वमत आह— **इयङिति** । हि यतः । 'सवर्णे' 'असवर्णे' इति विशेषणयोरपि तुल्यत्वादाह— **अभ्यासेति** । संज्ञाकृतबहिरङ्गत्वानाश्रयणादाह— **संबन्धेति** । स्थानिना स्वतुल्यस्य धातोरेव, नाभ्यासस्येति तत्सम्बन्धस्य निमित्तत्वं सुवचम्; तथा च तन्निमित्तसमुदायाद्-

चाभ्यासत्वद्वयर्थम् । इयङुवङो ह्यभ्याससम्बन्धनिमित्तकत्वाद्बहिरङ्गौ । न चेयङादि- रपवाद, येन नाप्राप्तिन्यायेन इयर्तीत्यादिमहल्लक्ष्यप्राप्तयणपवादत्वस्यैव निर्ण- यादिति भाव । परे तु— एतत्परिभाषाभावे 'अभ्यासस्य—' इति सूत्रमेव वयर्थम् । न चेयेपेयायेत्यादौ चरितार्थम्, तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृ- द्धेश्च 'द्विर्वचनेऽचि' इति रूपातिदेशेनापहारे द्वित्वे कृते पुन प्राप्ते गुणवृद्धी बाधित्वान्तरङ्गत्वात्सवर्णदीर्घापत्ते । न चेयर्तीत्यादौ तच्चरितार्थम्, तावन्मात्रप्र- योजनकत्वे 'उ' इत्येव ब्रूयात्; य्वोरिति वर्तते, 'इणो यण्' इति साहच- र्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम्; अतेरिवर्णस्येयङित्यर्थ । 'अभ्यासस्यतौ'

---

हिर्भूतनिमित्तकत्वेन सत्यया तत्त्वमिति भाव । अपवाद इति । सवर्णदीर्घापवाद इत्यर्थ , प्रकृतलक्ष्ये तस्यात्रय प्राप्तेरिति भाव । स्वविषयत्वावच्छेदेनोत्सर्गप्राप्तौ येन ेत्यस्य विषय ; न चेह तथेत्याशयेनाह— येनेति । आदिना इयतुरित्यादिसंग्रह । चस्यैव 'इयङादे ' इति शेष । प्राप्तश्च सीरदेवादय । अनेन सूचितामरुचिं प्रकटयन्, सिद्धान्तमतमाह— परे त्वित्यादिना आहुरित्यन्तेन । एवेनासवर्णपदमात्रव्यवच्छेद । तयोः इयेपेयायेत्यनयो । अपि आदिप्राप्तयोर्वास्त्वित्यादे. समुच्चायक । पूर्वेति । 'द्वित्वात्- इति शेष , परत्वादिनेति भावः । अपहारे 'सति' इति शेष । पुन प्राप्ते इति । पाद्धित्वस्य द्विःप्रयोगरूपत्वेनात्रिकारत्वेन लक्ष्यभेदादिति भाव । 'द्विर्वचनेऽचि' इत्यस्या- जादेशनिषेधकत्वपक्षे न्याय्यतया लक्ष्यानुरोधेनत्रिविधमेवाश्रयतमिति तत्त्वम् । अन्तरङ्गत्व पूर्वोपस्थितनिमित्तकत्वरूपम् । दीर्घापत्तेरिति । एवं चाधे अचपरत्वाभावादेव तदप्राप्तेरिति भाव । द्वितीयादौ विशेषो वक्ष्यते । आदिना इयृत इत्यादिपरिग्रह । तत् सूत्रम् । एवेन 'अभ्यासस्य—' इति सपूर्णसूत्रव्यवच्छेद । नन्वियमर्तेरित्यादावपि तदापत्तिरत आह— य्वोरिति । 'अचि श्नु—' इत्यत इति भाव । नन्वेवमपि ऋधातोरेव ग्रहणे किं मानम्? ऋकारान्तस्याङ्गस्येत्यर्थेऽधातोरपि ग्रहणसम्भवात् । तथा च पित्र्यर्कोदित्यादौ च्यन्ते दोषापत्तिरत आह— इण इति । नन्वेतदपेक्षया अव्यवहितश्रिया इति साहचर्यात्ताद्दृशा- धातोरेवग्रहण स्यात् । किं च व्यवहितसूत्रान्तरसाहचर्ये मानाभावश्चात आह— व्याख्येति । एतदेशो स्वरितत्व प्रतिज्ञाय 'अचि श्नु—' इत्यतो धातुपदानुवृत्तेरित्यर्थ । ननु तथा सत्यपि ऋकारान्तधातुमात्रग्रहणापत्ति, अतो व्याख्यानादेव लब्ध स्पष्टप्रति- पत्तये वाक्यार्थमाह— अर्तेरिति । विशेषणविशेष्यभावे कामचारेण धातोरियस विशेषणत्वम्, अत एव श्तिपा निर्देशेन तदभिव्यक्त्या व्याख्याने तत्प्रवेश । उकार-

'अभ्यासस्यर्ते' इति वा गुरुत्वान्न युक्तम् । न च ए ऐ ओ औ शब्देभ्य आचारक्विबन्तेभ्यो लिटीयङार्थं तत्सूत्रमावश्यकम्; तथा ओणृधातोर्ण्वुलन्तादिच्छायां क्यजन्तात्सनि उवोणकीयिषतीत्याद्यर्थमावश्यकमिति वाच्यम्, षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात् अन्त्ये द्वितीयद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात् । एवं च संपूर्णसूत्रस्य ज्ञापकता युक्ता । यद्यपि भाष्ये 'यदयमभ्यासस्यासवर्णे इत्यसवर्णग्रहणं करोति' इति ग्रन्थेन असवर्ण-

---

स्यासभवत्वस्यात्र, समासनिर्दिष्टत्वाद्विशेषणाननुवृत्तिरिति भावः । कैयटहरदत्तसीरदेवप्रक्रियाप्रकाशकौस्तुभकृदायुक्तिं खण्डयति— **अभ्यासेति** । विनिगमनाविरहादाह— **अभ्यासेति** । यत्तु एवं पाठे श्तिपा निर्देशाद्यङ्लुकि न स्यादिति पूर्वोक्ता, तन्न, 'भवतेः' इतिवत्तत्सत्त्वात् 'श्तिपा शपा—' इत्यस्य भाष्येऽदर्शनाच्च, तद्दूषणमनाह — **गुरुत्वादिति** । मात्रागौरवस्य पदद्वयकृतगौरवस्य च सत्त्वादिति भावः । ए ऐ इत्यादौ मि सन्धिरभावरूपबोधनाय सन्धिर्न कृतः । हलादित्वाभावेन यङोऽप्राप्तेराचारक्विबन्तेभ्यः सनोऽनुपपत्तेश्चाह— **लिटीति** । तथा उक्तवत् । आदिना इयेजरीयिषतीत्यादिसङ्ग्रहः । अपिरुक्तसमुच्चायकः । क्वचित्तदपाठ एव । न च 'इजादेः—' इत्याम्प्रत्ययापत्तिदोषः सुवारः, इजादित्वगुरुमत्त्वयोरतिदेशेनालाभात् यन्निमित्तविकल्पकृतोपदेशाप्राप्तावतिदेशो मृग्यते तन्निमित्तान्यनिमित्तकत्वस्य तत्राङ्गीकारात् । न च धातुत्वस्याच्छब्दान्यत्वे सत एव, तथा सति 'अनृच्छ' इति पर्युदासात् अज्झलात्मकसमुदायादेव तद्विधेयत्वीकारात् । न च 'धातुप्रत्ययात्—' इति प्राप्तिः, प्रत्ययग्रहणापनयनवादिमते तदसम्भवात् । किं च तदपनयवादिना एकाज्भ्योऽनभिधानात्क्विपनुत्पत्तेरेव वाच्यत्वेनादोषात्;' अन्यथा सूत्रघातक्यो फलभेदापत्तेः । अधिकमन्यत्र द्रष्टव्यम् । 'इको गुण—' 'वदव्रज—' 'ओतः श्यनि' 'आदेच —' इत्यादिसूत्रस्थभाष्यप्रामाण्यादेजन्तेभ्य आचारक्विबभावः । एतेन पर्युदासलभ्यार्थानङ्गीकारेण तेन तदापत्त्या प्रत्ययग्रहणसत्त्वमिति सिद्धान्तिमते तेन तदापत्त्या च दोषः सुवार एवेत्यपास्तम् । तदेतत्सर्वं हृदि निधाय तथैवाग्रे आह— **षाष्ठेति** । षष्ठाध्यायप्रथमपादप्रथमाह्निकचरमसूत्रस्थभाष्यसाङ्गानित्वेतत्सूत्रस्योक्तज्ञापकप्रमाण्येत्यर्थः । अन्यथा तत्र चारितार्थ्ये ज्ञापकत्वासङ्गतिः स्पष्टैव । **तेषां** सन्ध्यक्षरप्रकृतिकाचारक्विबन्तानाम् । अन्त्ये उवोणवीयिषतीत्यादौ । **द्वितीयेति** । 'अजादेर्द्वितीयस्य' इत्यादि; 'यथेष्टम्—' इत्यस्याधिकसमहार्थत्वेनाप्राप्तेः नामशब्दस्य सुबन्तपरतया तत्प्रकृतिक एव [ति] प्राप्तेश्चेति भावः । **एवं च** अन्यथाचारितार्थ्ये च । अत्र मते भाष्यविरोधमाशङ्क्य परिहरति— **यद्यपीत्यादिना स्यादित्यन्तेन** । भाष्ये 'दाधाघ्वदाविति सूत्रस्थे । अत्र ग्रन्थे अन्वयः' । एतेन

ग्रहणस्यैव ज्ञापकता लभ्यते; तथापि 'न ह्यन्तरेण गुणवृद्धी असवर्णपराभ्यासो भवति' इति तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते। अग्रेऽपि 'नैतदस्ति ज्ञापकम्। अर्थवदेतत्स्यात्' इत्यनेन सूत्रसार्थक्यमेव दर्शितम्। असवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात्। न चाकृतपरिभाषया इयेषेत्यादौ सवर्णदीर्घप्राप्तिः यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति संभावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं संपूर्णसूत्रस्य ज्ञापकतेति वाच्यम्, तस्या असत्त्वात् सत्त्वे वा एतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च। न च— अन्तरङ्गत्वाद्दीर्घेऽपि इयायेत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णलि असवर्णे इयङ्विधानेन सूत्रं चरितार्थम्; न च 'अचिश्नु—' इत्यनेन सिद्धिः, वृद्धिबाधनार्थत्वात्— इति वाच्यम्, प्रत्यासत्त्या असवर्णपदेन अभ्यासोत्तरखण्डसंबन्ध्यसवर्णाच एव ग्रहणात् शास्त्र-

---

सूत्रव्यवच्छेदः। **तदुपेति**। ज्ञापकोपेत्यर्थः। इत्थं हि तदाकूतम्— असवर्णाच्पराभ्या-सवर्णादीनामियङादिविधानं तथा सति व्यर्थमेव स्यात्। न चासवर्णग्रहणाकरणेनापीदं सिद्धम्, इयतुरित्यादावपि इयङाद्यापत्तेः। एवं चासवर्णग्रहणविशिष्टं सूत्रमेतदर्थज्ञापकम्; उपक्रमेऽपि बहुव्रीहिणा सूत्रमेवाभिमतमितीति भावः। तुरुक्तव्यवच्छेदे। 'तत्खण्डनावसरे' इति शेषः। **तद्व्यावर्त्येति**। असवर्णपदव्यावर्त्येत्यर्थः। उभयत्र कौस्तुभकृदाद्युक्तिं खण्डयति— **न चेत्यादिना स्वीकाराच्चेत्यन्तेन**। **अकृतपरेति**। अकृतेति परीत्यर्थः। आदिनेयायेत्यादिपरिग्रहः। ननु दीर्घे गुणाप्राप्त्या भाविनिमित्तविनाशाभावेन कथं तत्प्राप्तिरत आह— **यदीति**। गुण इत्युपलक्षणं वृद्धेरपि। सिद्धान्तरीत्या समाधत्ते— **तस्या इति**। असत्त्वस्या इत्यर्थः। कैयटादिरीत्या समाधत्ते— **सत्त्वे वेति**। वाशब्दोऽनास्थायाम्, न तु विकल्पे। **एतद्भाष्येति**। 'न ह्यन्तरेण' इत्यादिसंभाष्येत्यर्थः। द्वितीये तदुक्तिं खण्डयति— **न चेति**। अन्तरङ्गत्वात् पूर्वोपस्थितनिमित्तकत्वेन तत्त्वात्। **दीर्घे** सवर्णदीर्घे। **इवर्णेति**। अस्य 'स्वतः' इत्यादिः। **णल्यसेति**। णलूरूपे असवर्णेऽचीत्यर्थः। **वृद्धीति**। 'अचो ञ्णिति' इत्यनेनेति भावः। अत एवात्र शङ्कायां प्रागुपात्तस्येयायेत्यस्य त्यागः, तत्र तदप्रवृत्तेश्च। **असवर्णपदेन** असवर्णाच्पदेन। **अभ्यासोत्तरेति**। यत्किञ्चित्पूर्वत्वमादायाभ्यासस्य तदवच्छिन्नोत्तरेत्यर्थः। ननु प्रत्यासत्तिन्यायाद्व्याप्तिन्यायस्य प्राबल्यमत आह— **शास्त्रेति**। वृत्तिविधीत्यर्थः। तथा हि सति

बाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैव औचित्याच्चेत्याहुः । सा चेयं धर्मिग्राहकमानादङ्गवर्णयोः समानकार्यित्व एव । यत्तु— समाननिमित्तकत्वरूपसमानाश्रयत्व एवेयमिति; तन्न, ज्ञापितेऽपि इयायेयेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च । स्योन इत्यत्र तु वक्ष्यमाणरीत्यास्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः । न चैवमपीययेत्यादावियङ् दुर्लभस्तत्र कर्तव्ये वृद्ध्यादेः स्था

---

इयायेत्यादिलक्ष्यासिद्धौ व्याप्तिन्यायविरोधः स्यादिति भावः । तदभ्युपगमाह— औचित्यादिति । ननु परिभाषाज्ञापनं केवलासत्त्वपदेनापि सिद्धमिति तच्छास्त्रबाधाधमसा स्वत आह— चेत्याहुरिति । यत्र 'कृदतिङ्' इति सूत्रस्यभाष्योक्तरीत्या 'अथ पर—' इति स्थानिवत्त्वेन तदप्रवृत्तिरित्यस्य समुच्चयः । कदाचिन्मतमाह— सा चेयमिति । सपूर्वोक्तसूत्रज्ञापितोक्तपरिभाषेत्यर्थः । धर्मी परिभाषा तद्ग्राहकं मानमुक्तं सूत्रम् । समानेति । वर्णस्याङ्गकार्यिकार्यित्व इत्यर्थः । 'प्रवर्तते' इति शेषः । अत एव 'सार्वधातुकमपित्' इति सूत्र अपिदिति पर्युदासपक्षे च्यवन्त इत्यादौ गुणात्पूर्वं नित्यत्वादन्तरङ्गत्वाच्चेनादेशे कृते पिदपित्वं परत्वादपित आश्रितत्वाच्छब्दफललाभाय परस्य कार्ये प्रत्ययाश्रितत्वादपित्त्वेन ङित्त्वप्रवृत्त्या गुणनिषेधः स्यादित्युक्तम्, अन्यथा तु तदसङ्गतिः स्पष्टैवेति भावः । एवं यच्छब्दं सीरदेशादिमतं खण्डयति— यत्त्विति । लक्ष्यं तु इयायेत्यादि कुम्भकार इत्यादि च बोध्यम् । एतेनोक्तव्यवच्छेदः । शेषं प्राग्वत् । असिद्धेरिति । असमाननिमित्तकत्वेन परिभाषाया अप्रवृत्त्या दीर्घे आयतादापत्तेरिति भावः । इष्टापत्तिमभ्युपेत्याह—]सूत्रेति । 'अभ्यासस्य—' इति सूत्रेत्यर्थः । एवं च स्वस्मिन्चारितार्थ्येन ज्ञापकत्वासङ्गतिरिति भावः । ऊखतुरूचे इत्यादासिद्धपापत्तिश्च, ह्रस्वस्य प्रत्ययाश्रयत्वेऽपि सवर्णदीर्घस्य तदनाश्रयत्वेन तदभावादेतदप्रवृत्त्यान्तरङ्गत्वात् सवर्णदीर्घे ह्रस्वापत्तेः । सिद्धान्ते तु लक्ष्ये लक्षणमिति न्यायेन नेत्यपि बोध्यम् । केचिन्मतेऽस्त्विति प्रत्ययमाह— स्योन इति । अत एव तु प्रयुक्तं । सिवेर्णादिके नप्रत्यये ऊठि यणि गुणे च रूपम् । वक्ष्यमाणेति । अत्र 'अनुपदम्' इत्यादि । अस्याः वार्णादित्यस्याः । यणादेश इति । एतेनाङ्गत्वाल्लघूपधगुणोऽत्र स्यादित्यपास्तम् । चैवमपि उक्तपरिभाषया आदौ वृद्धिगुणादिप्रवृत्तावपि । यत्तु सारदत्तादयः— परत्वाद्गुणे कृते 'द्विर्वचनेऽचि' इति स्थानिव-

निवत्त्वेन 'असवर्णे' इति प्रतिषेधादिति वाच्यम्, सूत्रारम्भसामर्थ्यादेव स्थानि-
वत्त्वाप्रवृत्तेः। तच्च सामान्यापेक्षम्— अभ्यासकार्ये तदुत्तरखण्डादेशस्य
तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति। अत एव आरतीत्यादौ यणादेशस्य स्था-
निवत्त्वादभ्यासस्य 'दूलोपे—' इति दीर्घो दुर्लभ इत्यपास्तम्। अरियियादि-
ष्वत्र स्थानिवत्त्वेनेयङ् भवत्येव, तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वा-
भावात्। इयं चाङ्गसंबन्धिन्याङ्ग एवेति 'स्वरितो वा—' इति सूत्रे भाष्ये;

---

स्थानिवत्त्वमित्यत्र मूलमिति; तन्न, रूपातिदेशस्यैव भाष्यसिद्धान्तत्वेन दोषतादवस्थ्यात्। यत्तु भाष्ये द्वास्थानित्यत्रैवमेवोक्तम्, तत्तु 'द्विर्वचनेऽचि' इति कार्यातिदेश एवाशयक-मिति न दोषः; तदुपपादनायाह— सूत्रेति। 'अभ्यासस्य—' इति सूत्रेत्यर्थः। अधि-कलक्ष्यसंग्रहायाह— तथेति। 'अभ्यासस्य—' इति सूत्र चेत्यर्थः। सामान्यापेक्ष-मिति। अस्य 'ज्ञापकम्' इति शेषः, तदाह— अभ्यासेति। अतिप्रसङ्गनिरासा-याह— तत्कार्येति। वस्तुतोऽभ्याससम्बन्धिकार्यमात्रे कर्तव्ये अभ्यासादुत्तरस्य द्वितीय-भागस्य खण्डोऽवयवो य आदेशस्तस्य तत्कार्येत्यर्थः। 'दाधान्—' इति सूत्रस्योपयो-तस्याप्ययमेवार्थः। 'तदवयवधात्ववयवादेशस्य—' इत्यादिशेखरस्य तु अत्र कार्येऽभ्या-सस्यावयवधातुसम्बन्धिताद्यावयवसावः, अभ्यासावयवकधातोर्योऽवयव उत्तरख-ण्डसम्बन्धी अभ्यासाद् व्यवहितपराङ्गरूपस्तस्य यो य आदेशस्तस्याभ्यासकार्यप्रतिबन्धकी-भूतस्थानिवत्त्व नेत्यर्थः। धातुत्वमुत्तरखण्डस्यैवेति ध्वनयितु तदवयवत्वेन तत्र बोध्यम्। अत एव यातिरित्यादिसिद्धिरिति भावप्रकाशे स्पष्टम्। अत एवेति। सामान्यापेक्षत्वा-देवेत्यर्थः। आरतीति। यङ्लुगन्तम्। एवमग्रेऽपि। यणादेशस्य उत्तरखण्डादेशस्य। अभ्यासेति। 'रुत्रो रो रि इति लोपे सति' इति शेषः। तत्कार्यप्रतिबन्धकीभूतेत्यस्य फलमाह— अरीति। तस्य तत्प्रतिबन्धकत्वादिति भावः। यदि त्वन्तरङ्गत्वेन रिङ् प्रागेवेयङ्, तदैतद्विशेषणं निष्फलमिति बोध्यम्। यत्तु न्यासकारादयः— ध्यायते-पीय प्रवर्तते, 'यज्ञयाच—' इति नङो ङित्करणाज्ज्ञापकात्। 'प्रश्ने चासन्न—' इति निर्देशेन सम्प्रसारणस्यानिष्टत्वेन विश्न इत्यत्र गुणनिषेधार्थं क्रियमाणं तद्धि तत्र ज्ञापकम्, अन्यथान्तरङ्गत्वात्तुकि गुणाप्रसङ्ग एवेति तद्वैयर्थ्यं स्पष्टमेव। अत एव च्यवन्ते प्रवन्ते इत्यादावनया एकादेशात्प्राग्गुण इत्याहुः; तन्मतमपि परिष्कर्तुमाह— इयं चेति। आङ्गे अङ्गसम्बन्धिन्येव कार्ये प्रवर्तत इत्यर्थः। भाष्य इति। अस्य 'स्पष्टम्' इति शेषः।

तत्र हि कुमार्यैं इत्यादौ यणुत्तरमाडुक्तः। इयं चानित्या, 'च्छ्वोः—' इति सतुक्कनिर्देशात्; अन्यथाङ्गत्वात्पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं

---

तदेवाह— तत्र हीति । 'स्वरितो वानुदात्त—' इति सूत्रभाष्ये हीत्यर्थः । आडुक्त इति । तदुत्तरम् 'उदात्तयणः—' इत्युदात्तेन सह संप्रधारणां कृत्वा परत्वादाडुक्त इत्यर्थः । 'एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्योऽयाद्यर्थम्' इत्यत्र, आयु— कुमार्या इदम् । 'उदात्तयणः—' इति कृते उदात्तानुदात्तयोरेकादेश उदात्तः । तस्य सिद्धत्वादाद्यादेश उदात्तः सिद्ध इत्युक्त्वा, उक्तप्रयोजनलक्षणायोभयोरनित्ययोः परत्वादाटि उदात्तैकादेशयोः परीहारताऽनित्यत्वेऽपि अन्तरङ्गत्वादेकादेशः । वर्णाश्रयैकादेशः । विभक्तेरुदात्तत्वविधानात्परस्योदात्तत्वम्' इति हि तत्रोक्तम् । तत्र पूर्वं यणि सत्येव सम्भवति, नान्यथा । तत्राप्रवृत्तिकरणेन तत्रैवैतत्प्रवृत्तिरभिमता भगवत इति भावः । धर्मिग्राहकमानान्यैव लभ्यत इति तदाकूतम् । वस्तुतस्तु उक्तसूत्रेण परिभाषामात्रं ज्ञाप्यते, न तु विशिष्य समानाश्रय एवेत्यपि । अत एव ङतो ङित्करणमपि सफलमिति न तस्यानर्थक्यशङ्केवेति लाघवम् । इष्टानिष्टयोः प्रवृत्त्यप्रवृत्ती तु परिभाषानित्यत्वानित्यत्वाभ्यां बोध्ये । अनित्यत्वं च स्योन इत्याद्यर्थं केषाञ्चिन्मते न्यासकारादिमते चावश्यकमेवेति किं तया कल्पनया । पूर्वम् 'सा चेयम्–' इत्युक्तिस्तु यैः समानाश्रय एवेत्यपि ज्ञाप्यमित्युच्यते, तेषामपि मध्ये सीरदेवाद्युक्तमयुक्तं केषाञ्चिन्मतं युक्तमिति सूचयितुम्; न तु सिद्धान्तं प्रतिपादयितुम् । अत्र मते 'अङ्गसयन्निन्याङ्ग एव' इत्यपि कल्पना नेत्यपरं लाघवमिति सिद्धान्तो बोध्यः; तद्ध्वनयन्नाह— इयं चानित्येति । चस्त्वर्थे । पूर्वमिति । छनिमित्ततुकः पूर्वमित्यर्थः । अप्राप्त्या निमित्ताभावात् । तद्वैयर्थ्यं सतुक्कनिर्देशवैयर्थ्यम् । एतेन तेन निर्देशेन समानाश्रय एव प्रवर्तत इति ज्ञाप्यत इत्यपास्तम्; स्योन इत्याद्यसिद्धेः ऊखतुरित्याद्यसिद्धेश्च 'अङ्गस्य' 'आहआदीनाम्' इत्यादिसूत्रस्थभाष्यादौ षाष्ठप्रथमाह्निकान्ते च इयायेत्यादीनां व्याश्रयसाधारणानां प्रयोजनानामुपन्यासाच्चेति दिक् । अन्तरङ्गपरिभाषापवाद इयम् । नन्वेवमपि अध्येयातामित्याद्यसिद्धिः, लायस्थायामटिति पक्षे परेऽङो निमित्तसंश्रयाभावेन ततः प्राक् पूर्वस्थितनिमित्तकत्वेनान्तरङ्गत्वाद्गुणापत्तेः उक्तपरिभाषायास्तयोर्युगपत्प्रवृत्त्या अप्राप्तेः तयोर्युगपत्प्रवृत्तावपि प्रवृत्तिरिति कथंचिदाश्रयणेऽप्यनेकाच्त्वाभावापत्तेः; न चाटोऽसिद्धवत्त्वान्न यण्, अत्र पक्षे 'असिद्धवत्—' इति सूत्रस्य भाष्ये प्रत्याख्यानात् । न च 'एरनेकाचः–' इति योगं विभज्य 'इणो यण्' इत्यनुवर्त्य अडादिसहितानेकाचश्चेयण् तर्हिवर्णान्तेन एवेति नियमान्न दोष इति कौस्तुभाद्युक्तं युक्तमिति वाच्यम्, शब्दमर्यादया अलाभात् उक्तरीत्याडादिसहितानेकाजिणो यण् एवाभावाच्चेति चेन्,

स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५६ ॥

नन्वेवं सेदुष इत्यादौ क्वसोरन्तरङ्गत्वादिटि ततः संप्रसारणेऽपि इटः श्रवणापत्तिरिति चेत्, अत्र केचित्—

## अकृतव्यूहाः पाणिनीयाः ॥ ५७ ॥

न कृतो व्यूहो विशिष्टो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः । 'भावि-निमित्तविनाशे' इत्यध्याहारः । बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सं-

---

न ; रूपस्यैवासत्त्वात् । तथा हि— भाष्येऽसिद्धवत्सूत्रप्रत्याख्यानेऽस्य योगविभागस्य विध्यर्थ-त्वमाश्रित्यैतत्सामर्थ्यात् आद्यन्निरत्र पूर्वमाडित्युक्तम् । तस्मादीदृशे विषये पक्षयोः फलाभे-दाय इड्धातोर्लोकेऽनभिधानमेव । 'सम्प्रसारणाच्च' इति सूत्रोदाहृतमध्यैतामित्यादि तु छान्दसम् । तत्र हि 'बहुल छन्दस्यमाङ्योगेऽपि' इति बहुलग्रहणादादेशोत्तरं परत्वादियादि तत आदि वृद्धिः । न चाग्निलः, इयङोऽपि तत्त्वात् अन्तरङ्गया वृद्ध्या बाधेऽपि लक्षणा-न्तरेण निमित्तविघाते निरवकाशत्वाद्धकारादिति बोध्यम् । केचित्तु— लाक्षणायामपिति पक्षेऽपि वार्णादाङ्गमिति न्यायेनाङ्गस्य तन्निमित्तभूतादेशानां च पूर्वं प्रवृत्त्या न दोषः; यथाऽन्तरङ्गानपीति न्यायो लुकस्तत्प्रयोजकसमासादीनां च प्राबल्यबोधकः, तद्वदत्रापि अङ्गीकारात् । अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इत्याहुः । परे तु— 'असिद्धवत्' इति सूत्रारम्भस्यैव ज्ञापकत्वेन तत्पक्षसीनाभावेनादेशोत्तरमाङपेक्षया परत्वादियङि आदि वृद्ध्य, रूपसिद्धिमाहुः । तदेतदभिप्रेत्याह— इत्यन्यत्रेति । शेखरादावित्यर्थः ॥ ५६ ॥

एवम् उक्तेनैवान्तरङ्गपरिभाषया अप्रवृत्तौ । आदिना पपुष इत्यादिपरिग्रहः । अन्तरङ्गत्वात् पूर्वोपस्थितनिमित्तकत्वात् । एवमग्रेऽपि । ततः विभक्त्युत्पत्त्यनन्तरम् । 'निमित्तसत्त्वात्' इति शेषः । यत्तु 'उत्तरपदान्तात्' इति पाठस्य भविष्यतीति; तन्न, 'अतो गुणे' इत्यतोऽस्ति इत्यनुवृत्तेरत आह— अवर्णेति । केचित् सीरदेवदीक्षितादयः । ऊह इत्यस्य व्याख्या— निश्चय इति । वैशिष्ट्यमेवाह— शास्त्रेति । यैः पाणिनिप्रोक्ताध्ये-तृभिः । नन्वेवम् 'निमित्तं विनाशोन्मुखं दृष्ट्वा' इत्यस्य कुतो लाभोऽस्त आह— भावीति । इति सप्तमी । नन्वेवमपि तत्र संप्रसारणाद्यप्रवृत्तिरित्येवार्थः कुतो नेत्यत आह— बहिरङ्गेणेति । सम्भावनाया अपि निमित्तत्वस्य वक्ष्यमाणत्वादाह— संभावित इति ।

भाविते अन्तरङ्गं नेति यावत्। अत्र च ज्ञापकम्— 'समर्थानां प्रथमाद्वा' इति सूत्रे समर्थानामिति। तद्धि सुत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्; अन्यथा अन्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव; तत्र हि भाविन्यादिवृद्ध्या सवर्णोच्चत्वविनाशः स्पष्ट एव। न चात्रैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्या एकादेशे कृते आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम्, तद्द्वारैव तन्निमित्तविनाशसत्त्वेनास्ततेः। न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम्, समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात्। यत्तु— समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत

---

तत्रापीत्यर्थः। अत एव वक्ष्यति— 'विनाशाभावः' इत्यादि। अन्तरङ्गं नेतीति। तथा च तदपवादत्वादस्यास्तयार्थो नेति भावः। यत्त्वत्र— 'गोस्तद्धितलुकि' इति तद्धितग्रहणं ज्ञापकम्। तद्धि राजकुमारीयतीत्यादौ लुक्लुकि निषेधो माभूदित्येवमर्थं क्रियते। अस्य अभावे त्वन्तरङ्गत्वाद्ध्रस्वो भाव्यमिति तदानर्थक्यमेव। ज्ञापिते तु भाविलुकः सन्वेयाल्लुप्-पनिमित्तविनाशाद्ध्रस्वः स्यादिति तत्सफलमिति सीरदेवादयः; तत्र, 'अन्तरङ्गानपि—' इति न्यायप्राप्तानिष्टवारणेन साफल्यादिति केचित्; तदुभयमप्याह— अत्रचेति। उक्तपरिभाषायामित्यर्थः। तत्त्वमुपपादयति— तद्धीति। समर्थग्रहणं हीत्यर्थः। अन्यथा एतद्वचनाभावे। प्रत्ययेति। इञादेरित्यर्थः। तद्वैयर्थ्यता समर्थपदव्यर्थता। ज्ञापिते चारितार्थ्यमाह— तत्र हीति। अस्या ज्ञापितत्वे हीत्यर्थः। सवर्णोच्चत्वविनाशः सवर्णोच्चनाशः। यथा चैतत्तथा स्पष्टमन्यत्र। एव च तत्रैतदप्रवृत्त्यर्थं समर्थग्रहणं कार्यमिति भावः। चारितार्थ्यं विघटयति— न चेति। अत्र सुत्थितादौ। वृद्ध्येति। अस्य 'निमित्ताभावात्' इत्यादिः। आदेशे दीर्घरूपे। 'इकुलप्तौ' इत्यादिः। तन्निमित्तेति। एतेन सादीर्घनिमित्तभूतह्रस्वसवर्णाजित्यर्थः। तद्द्वारैवेति। आदेशाश्रितविनाशद्वारैवेत्यर्थः। पुनरन्यथा तस्य क्षास्त्रव्यवच्छेदः। तन्निमित्तेति पाठः; अर्थः प्राग्वत्। एवमग्रेऽपि। पुनरन्यथा तस्य विघटयति— न चेति। 'घटस्वरेन पूर्वस्थितत्वेन वा अन्तर्भूतनिमित्तकत्वेनान्तरङ्गाहत-परिभाषाप्रवृत्तौ' इति शेषः; एवं चाचारितार्थ्येनाज्ञापकत्वात्समर्थग्रहणं व्यर्थमेवेति भावः। अत एवाह— समर्थेति। एतद्विषये अकृतेतिविषये। तस्याः अन्तरङ्गपरिभाषायाः। अपिरतत्परिभाषासमुच्चायकः; यावता विनेति न्यायेनेति भावः। ननूक्तं कृतमनया, तदनित्यत्वेनैव सेदुष इत्यादिसिद्धेरित्याशयेनाह— यत्त्विति। एतेनैतत्परिभाष्यप्रवृत्तिः।

इति; तन्न; असिद्धपरिभाषया समानकालप्राप्तबहिरङ्गस्य पूर्वं जातबहिरङ्गस्य च अन्तरङ्गे कर्तव्ये असिद्धत्वं बोध्यते, न तु जाते अन्तरङ्गे तस्य तत्त्वं बोध्यते, मानाभावात्फलाभावाच्च; एवं च सुत्थितादावेकादेशस्य परिभाषान्तरसाध्यत्वाभावेन तदनित्यत्वज्ञापनासंभवात्। 'अन्तरङ्गानपि विधीन्—' इत्यादेरस्यामेवान्तर्भावः। एतत्प्रवृत्तौ च निमित्तविनाशसंभावनापि निमित्तम्।

---

तन्नेति। अत्र 'असंभवात्' इत्यन्तो हेतुः। बहिरङ्गस्य चेति। प्रागुक्तज्ञापकद्वयादिसत्त्वादिति भावः। ननु प्रागुक्तकाकाक्षिन्यायेन क्रमेणान्वाख्याने पद्धत्येत्यादाविव पूर्वस्थितनिमित्तकत्वेनान्तरङ्गे तत्र कार्ये भाविबहिरङ्गस्यासिद्धत्वमपि परिभाषार्थ इति यथेमेतदिति चेत्, न; चकारेण तस्यापि संग्रहात्। तदुक्तमयमाह— न त्विति। अत्र कथने तात्पर्यम्, न तत्रेति भावः। तस्येति। बहिरङ्गस्यापीत्यर्थः, तत्त्वम् असिद्धत्व पश्चात्प्राप्तप्रवृत्तिनिषेधरूपम्। कृते इत्यपि शेषपूरणेनायमर्थो लभ्यः; स च धर्मिग्राहकमानविरुद्ध इत्याह— मानेति। नन्वेवमपि फलबलात्कल्प्यतेऽत आह— फलेति। अनन्यथासिद्धलक्ष्यसिद्धिरूपप्रसिद्धफलाभावादित्यर्थः। यद्यपि सुत्थितादावादौ निमित्ताभावादन्यकार्याप्राप्त्या दीर्घप्रवृत्तावपि परिभाषासंचारे तेन तदनित्यत्वज्ञापनासंभवादित्येव हेतुः सुवच इति असिद्धेत्यादिभाषायत्नमन्यानुपयोगः; तथापि यदि तयाप्यर्थः स्यात्सदान्तरप्राप्तप्रवृत्तिनिवारकत्वेनैकादेशाश्रवणकसिद्धप्रयोगोऽपि तत्परिभाषाफलमिति तदनित्यत्वज्ञापनं तेन सुकरमिति तदर्थाभावप्रतिपादनम्; तदाह— एवं चेति। तदर्थाभावे चेत्यर्थः। परेति। अन्तरङ्गपरेत्यर्थः। तदनित्येति। अन्तरङ्गपरिभाषानित्यत्वेत्यर्थः। 'समर्थग्रहणेन' इत्यादिः। नन्वेवमपि पद्धत्येत्यादिवदनुपदोक्तरीत्या परिभाषासंचार एवांन तेन तदनित्यत्वज्ञापनं सुवचम्। अत एव 'अन्तरङ्गत्वात्' इति 'बहिर—' इत्यादि च प्रागुक्तिः सङ्गच्छते। पूर्वमते तु तदुक्तगौणत्वं कल्प्यं स्यादिति चेत्, न; एकदेश्युक्तित्वेनादोषात् विप्रतिषेधसूत्रभाष्यविरोधापत्तेश्च। वक्ष्यते चेदम्; तदेतदभ्यनयबेतदर्थाकारे 'अन्तरङ्गानपि— इत्याद्युच्छेदापत्तिं निराचष्टे— अन्तरङ्गानपीति। आदिना प्रागुक्तसमाश्रितपरिग्रहः। अपिः 'कृतमपि—' इत्यादिसमुच्चायकः। अस्याम् अकृतव्यूहपरिभाषायाम्। एवेनातिरिक्तत्वनिरासः। नन्वेवमपि सेदुष इत्यादौ साक्षान्निमित्तविनाशसत्त्वेनात्र तादृशनिमित्तविनाशग्रहणे मानाभावेन सुत्थितादौ तथा असत्त्वेनैतदप्रवृत्त्या अचारितार्थ्येनाज्ञापकत्वासमर्थग्रहणं व्यर्थमेवात आह— एतदिति। चेति। अस्य किं चेत्यर्थः, प्रयोजनं च। संभावना एककोटिकनिश्चयः। अपिः स्वरूपसद्विनाशसमुच्चायकः, समर्थग्रहणज्ञापक-

अत एव गोमद्दण्डीत्यादौ हल्ङ्यादिलोपो न; अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः । अस्ति च तत्रापि यदि लोपो न स्यात्, तर्हि लुक् स्यादिति संभावना । 'अल्लोपोऽनः' इति सूत्रस्थतपरकरणं तु परिभाषाऽनित्यत्वज्ञापनेन चरितार्थम्; तद्धि आन इत्यादौ लोपवारणाय; अन्यथा दीर्घाभावे लोपसंभावनयैतत्परिभाषाबलाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः । 'समर्थानाम्—' इति सूत्रे कैयटस्तु— समर्थवचनेनेयं परिभाषा ज्ञाप्यते— अकृतव्यूहाः पाणिनीया इति । तेन एपुष इत्यादावन्तरङ्गत्वात्पूर्वं कृतोऽपीडागमो निवर्तत इति वदन्, न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशोऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति । निमित्तापाये नैमित्तिकस्या-

---

पराकरप्रामाण्यात्तद्ग्रहणाच्च । तथा च यदि एकादेशो न स्यात्तर्हि धुम्बि- स्यादेवेति तत्संभावनास्तीति भावः । नन्वेवं तस्योऽप्यपादितरीत्योपपत्तिरत आह— **अत एवेति** । तत्संभावनाया अपि तन्निमित्तत्वाङ्गीकारादित्यर्थः । **गोमद्दण्डीति** । कर्मधारयः । आदिना भवद्दण्डीत्यादिपरिग्रहः । **अन्यथा** संभावनाया अनिमित्तत्वे । **अप्राप्त्या** निमित्ताभावात् । **तदुत्तरं चेति** । हल्ङ्यादिलोपोत्तरमित्यर्थः । **आपत्तेरिति** । तथा सति लुमान् स्यात्, अत एवापत्तिरिति भावः । 'अन्तरङ्गानपि—' इत्यादि तु नातिरिक्तमित्युक्तमेव । तथाऽङ्गीकारे त्वाह— **अस्तीति** । चस्त्वर्थे, संभावनापदोत्तरं योज्यः । क्वचित्तथैव पाठः । **तत्रापि** गोमद्दण्डीत्यादावपि । यदि लोपो न स्यादिति पाठः । एवं चात्र परंपरया निमित्तविनाशस्य न महत्त्वमिति तात्पर्यम् । नन्वेवमकृतेत्यङ्गीकारे 'अल्लोपोऽनः' इत्यत्रत्यतपरकरण व्यर्थमत आह— **अल्लोपोऽन इतीति** । **परीति** । अकृतेति परिभाषा । भाषानित्यत्वेत्यत्राकारप्रश्लेषः; तदेतदाह— **तद्धीति** । तपरकरण हीत्यर्थः । **आन इति** । अनितेः क्विप् । अन्त्यं तत्तेन देशविकृतन्यायेनेति भावः । **अन्यथा** एतदनित्यत्वाभावे । **दीर्घेति** । यदि दीर्घो न स्यात्तर्हि लोपः स्यादिति संभावनयेत्यर्थः । **परिभाषाबलात्** तत्प्रवृत्तिबलात् । **इत्याहुरिति** । केचिदित्यनेनान्वयः । परिभाषासत्त्वेऽप्यर्थभेदान्मतान्तरमाह— **समर्थेति** । अत एव तु प्रयुक्तः । 'कैयटः' इत्यत्राभिप्रैतीत्यनेनान्वयः । **तेन** परिभाषाज्ञापनेन । 'निवर्तते' इत्यत्रान्वेति । **अन्तरङ्गत्वादिति** । उक्तोऽर्थः । 'वार्णादाङ्गम्—' इति तु समानकालप्रसक्तिविषयमिति भावः । **वदन्निति** । कैयटविशेषणमेतत् । वैशिष्ट्यमेवाह—**निमित्तेति** । तत्फलितमाह— **निमित्तेति** । अत्र पक्षे समर्थ-

प्यपाय इति यावत् । सुस्थितादित्ति वृद्धौ दीर्घनिवृत्तौ सानुस्थितिर्मा भूदिति–समर्थानामिति । लोकन्यायसिद्धश्चायमर्थ; तथा हि— लोके निमित्तं द्विविधं दृष्टम्— कार्यस्थितौ नियामकं तदनियामकं च । आद्यं यथा— न्यायनये अपेक्षाबुद्धि', तन्नाशे द्वित्वनाशाभ्युपगमात्; वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्व च प्रसिद्धमेव । द्वितीयं यथा— दण्डादि, तन्नाशेऽपि घटादिनाशादर्शनात् । शास्त्रे लक्ष्यानुरोधाद्व्यवस्था । भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायः, नापि संप्रतिपन्नो दृष्टान्तः । 'समर्थानाम्' इत्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसंभवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम् । परे तु— सेदुष इत्यादौ पदावधिकेऽन्वाख्याने

---

पदस्य चारितार्थ्यमाह— सुस्थितादिति । वृद्धौ 'सत्याम्' इति शेषः । निवृत्ताविति । तथा च परम्परया तन्निमित्तविनाशसत्त्वेनैतत्प्रवृत्तावेकादेशो न स्यात्; तदाह— सावितिति । कि चेति पक्षे तु यणेकादेशो न स्यान्तर्हि वृद्धि' स्यादेवेति निमित्तविनाश-*सभावनासत्त्वेन कृतदीर्घनिवृत्तिरीति बोध्यम् । ज्ञापकानपेक्षत्वेन लाघवमत्र पक्ष इति* इदमेव युक्तम्, नावमतमित्याह— लोकेति । चोऽप्यर्थे । स्थिताविति । स्वस्थितौ कार्यस्थितिसंपादकं स्वास्थितावपि तत्स्थितिसंपादकमिति क्रमेणार्थः । बुद्धिरिति । द्वित्वरूपकार्यस्थितौ नियामिका स्वस्थितावेवेति भाव । वेदान्तीति । अस्य 'तथा' इत्यादिः । विक्षेपः संसारः । येन उपाधेः स्फटिकलौहित्यादिस्थितिनियामकत्वसमुच्चय । नन्वेवमपि शास्त्रे वैपरीत्यं कुतो नेष्यत आह— शास्त्र इति । एवमत्र तत्सिद्धत्वमुक्तार्थं नेत्याह— भाविनीति । विनाशे यथाकथंचित् । न कश्चिदिति । ननु 'प्रक्षालनाद्धि—' इति न्यायसत्त्वमिति चेत्, भ्रान्तोऽसि, नहि तेनोक्तार्थो बोध्यते, किंतु पूर्वमकरण पश्चान्निवर्तनमित्यनयोर्लघुत्वगुरुत्वे बोध्येते इति भाव ; अत एवाह— नापीति । संप्रतिपन्नः युक्त । ननु न्यायाद्यभावेऽपि ज्ञापकसिद्ध' सोऽर्थोऽस्त्वि आह— समर्थेति । तादृशेति । प्रागुक्तादेरर्थ । तदाशय इति । कैयटाशय इति बोध्यमित्यर्थः । क्वचित् 'तदाशय इति' इति पाठः । तत्रेतिर्मतसमाप्तौ । 'केचित्' 'कैयटोऽभिप्रैति' इति सूचितामुभयपक्षीयामरुचि कथयन् सिद्धान्तमाह— परे त्वित्यादिना दिगित्यन्तेन । *क्रमेणान्वाख्याने* दोषोक्तेराह— पदेति । पदघटकविभक्तिपर्यन्तेऽन्वाख्येयत्वेनादौ संस्थाप्य इत्यर्थ; पदस्य विभक्तिपूर्वकं संस्थापन इत्येति

सेट् वस् अम् इति स्थिते इट्संप्रसारणयोः प्राप्तयोः प्रतिपदविधित्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति स्पष्टं 'समर्थानाम्—' इति सूत्रे कैयटे । असिद्धवत्सूत्रे च कैयटे स्पष्टमेतत् । यद्यपि 'प्रतिपदविधित्व-मनवकाशत्वे सत्येव बाधकत्वे बीजम्; तथापि पूर्वप्रवृत्तौ सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः । निरूपितं चैतद्बहुशः शब्देन्दुशेखरे ।

---

यावत् । वाक्यस्याप्रत्युपयोगात्ययात्; तदेवाह— सेडिति । प्रकृतानुपयोगादेवमुक्तम्; अन्यथा सडित्युक्तं स्यात् । यद्वा पदस्य विभज्यान्वाख्यानमिति पक्षे तत्र स्थित इत्यर्थः । यत्तु 'संप्रसारणं तदाश्रयं च बलीयः' इति पूर्वं संप्रसारणमिति कैयटस्वीरोधाद्यः; तन्न, 'लिड्यभ्यासस्य—' इति सूत्रस्थभाष्यविरोधापत्तेः; तद्ध्वनयन्नाह— प्राप्तयोरिति । 'शीघ्रोप-स्थितत्वात्' इति शेषः । संप्रसारणे परत्वे चेत्यपि बोध्यम् । तत्सिद्धिरिति । 'असिद्धवत्—' इति परिभाषासाध्यार्थसिद्धिरित्यर्थः । एतत् 'संप्रसारणं तदाश्रयं च कार्यं बलीयः' इति तदुक्तप्रकारान्तरसूचितोक्तप्रकारेण तत्साधनम् । न चोक्तरीत्या पूर्वं संप्रसारणेऽपि अन्तरङ्ग-परिभाषया तत्सिद्धत्वात्स्यादिडेवेति वाच्यम्, तस्या अनित्यत्वात् प्रतिपदविधिविषये तदप्रवृत्तेश्च । अत एव 'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वम्' इति 'प्रत्ययोत्तर—' इति सूत्रस्थकैयटसङ्गतिः । तथा चापवादत्वमक्षु-ण्णमस्य; तद्ध्वनयन्नाह— यद्यपीत्यादि । सत्येवेति । 'शेषाद्विभाषा' इति सूत्रस्थ-भाष्यप्रामाण्यादिति भावः । प्रवृत्ताविति । एतत्सर्वमनुपदमेव मूले स्फुटीभविष्यति । तदाशयः कैयटाशयः । मन्मते प्रतिपदविधित्वेन शीघ्रोपस्थित्या पूर्वप्रवृत्त्यङ्गीकारे इया-येत्यादौ 'द्विर्वचनेऽचि' इति 'इणो यण्' इत्यस्य निषेधाद्बाधित्वे 'वर्णादाङ्गम्—' इति सवर्णदीर्घबाधकवृद्धेरुक्तरीत्या प्राक् 'इणो यण्' इति स्यादिति चेत्, अत्र केचित्— लक्ष्याधिकरणकपदसंज्ञाप्रयोजकसुप्तिभक्तिप्रकृतिविशेषमुच्चार्य विहितत्वं प्रतिपदविधित्वम्; त्त्वे च न क्वापि दोष इत्याहुः । वस्तुतस्तु 'इणो यण्' इत्यादीनां प्रतिप्रसवविधित्वम्, इको यणचि' इत्यस्य बाधकसवर्णदीर्घयणादिबाधनार्थत्वात् । एवं चानेकाचः 'एरने-ाचः—' इति यणा सिद्धा 'उत्सर्गसमान—' इति, 'प्रकल्प्य—' इति, 'पूर्वं हि—' ति न्यायैरेकाज्मात्रविषयकस्य यन्तीत्यादिलक्ष्यकस्य 'इणो यण्' इत्यस्येयायेत्यादावप्राप्त्या ासस्य 'एरनेकाचः—' इत्यस्य पदत्वात् 'अचो ञ्णिति' इत्यनेन बाधाद्वृद्धौ 'अभ्यास य—' इति इयङि इयायेत्यादिसिद्धिरिति न शङ्कावसर एवेति बोध्यम् । तदेतद् हृदि निधा ाह— निरूपितमिति । बहुशः बहुषु स्थलेषु । मन्मते समर्थग्रहणानर्थक्यापत्तिः

'समर्थानाम्—' इति सूत्रस्थसमर्थग्रहणं तु विपुण इत्यादावकृतसंघे प्रत्ययदर्शनेन सर्वत्र तथा भ्रमवारणाय न्यायसिद्धार्थानुवाद एव। ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये; तत्र हि वैक्ष्माणिरित्यन्तरङ्गपरिभाषोदाहरणमुक्तम्। किं च विभज्यान्वाख्याने तु उत्थित अस् इ इति स्थिते 'वार्णादाङ्गं बलीयः' इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव सूत्रे कैयटे स्पष्टम्। अत एवासिद्धवत्सूत्रे 'वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यम्। पपुष इत्यादौ वसो संप्रसारणे कृते आतो लोपो यथा स्यात्' इति भाष्ये उक्तम्। पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं संप्रसारणे इटोऽप्राप्त्या तन्निमित्तक एवातो लोप इति तदाशयः। अन्यथा अन्तरङ्गत्वादिटि तन्निमित्तक

---

आह— **समर्थानामिति। विपुण इति।** न च वार्तिकं दृष्ट्वा सूत्रकृताऽप्रवृत्तेरिदमनुक्तमिति वाच्यम्, तददर्शनेऽपि प्रयोगदर्शनस्याविघ्नत्वात्। अत एव वार्तिकानुल्लेखः। **सर्वत्र** तदन्यलक्ष्येषु दर्शनेनैन्येनैन प्रत्यक्षस्य सर्वतो बलवत्त्वात्तया भ्रमयोग्यता सूचिता। **सर्वत्र** तद्धितविषये। **तथा** अकृतसंघे प्रत्यय इति। अत एव 'पदस्य विभज्यान्वाख्यानेऽकृतसंधेरपि प्रत्ययः स्यात्' इति कैयटेनोक्तम्। **न्यायेति।** अन्तरङ्गन्यायस्येत्यर्थः। ननु द्विविधान्वाख्यानेऽपि प्रागुक्तरीत्यान्तरङ्गपरिभाषाविषयत्वस्य स्वात्सदानित्यत्वस्योपक्रमवास्तु समर्थग्रहणमिति कथमनुवादत्वमत आह— **ध्वनितमिति। इदमिति।** तदनुवादत्वसूचनद्वारा तत्प्रत्याख्यानमित्यर्थः। **इतीति।** इत्यादीत्यर्थः। **अन्तरङ्गेति।** 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीय' इति परिभाषेत्यर्थः, 'वृद्धेरेकादेशोऽन्तरङ्गत्वात्— वैक्ष्माणि' इत्यादिनेति भावः। वार्णपरिभाषा त्वनित्यत्वान्न प्रवर्तत इति तदाशयः। इदमेव द्रढयितुं तस्य परिभाषाज्ञापकत्वं विघटयितुं च 'वार्णात्—' इत्यस्य प्रवृत्तिमभ्युपेत्याह— **किं चेति। प्रासेति।** अस्य 'एकादेशं बाधित्वा' इत्यादि। अत्रैव प्रागुपक्रान्ते 'समर्थानाम्—' इति सूत्र एव। एवं चानित्यत्वाद्वार्णादाङ्गमित्यस्याप्रवृत्तौ तथा, प्रवृत्तौ त्वेवमिति सर्वथा अकृतपरिभाषाभावः सिद्ध इति भावः। तदभावमेव द्रढयति— **अत एवेति।** अकृतपरिभाषाभावादेवेत्यर्थः। **पूर्वोक्तेति।** प्रतिपदविधित्वादितीत्यर्थः। **इटोऽप्रेति।** अवत्यादित्यादिति भावः। एतौ मिथो ध्यवच्छेदकौ। एवं च समानाश्रयत्वात्प्राप्तासिद्धत्ववारणाय वार्तिकं सफलमिति भावः। **अन्यथेति।** पूर्वोक्तकैयटरीत्यनङ्गीकार इत्यर्थः। **तन्निमित्तक एवेति** एव चातो लोपोत्तरं संप्रसारणे तन्निमित्तकलोपाभावेन तस्यासिद्धत्वाप्राप्त्या ततः प्राक् संप्रसारणे ततः आतो लोपे तस्यासिद्धत्वेऽपि इट् सत्येन तन्निमित्तक एवातो लोप इ

एवातो ज्ञाप्ये इति तदसंगतिः । अत एव 'चौ प्रत्यङ्गस्य प्रतिषेधः' इति वचनं वार्तिककृता आरब्धम्; भाष्यकृता च न प्रत्याख्यातम् । प्रत्यङ्गम् अन्तरङ्गम् । अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव । अत एव 'च्छ्वोः—' इति सूत्रे 'अवश्यमत्र तुगभावार्थो यत्नः कार्यः; अन्तरङ्गत्वाद्धि तुक् प्राप्नोति' इति भाष्ये उक्तम् । एतत्सत्त्वे तु तुकोऽप्राप्त्या यत्नावश्यकत्वकथनमसंगतमिति स्पष्टमेव । न चैतदनित्यत्वज्ञापनार्थमेतदिति तदाशयः, अवश्यमत्रेत्यक्षरस्वारस्यभङ्गापत्तेः । किं च अनयैव 'प्रत्ययोत्तरपदयोश्च' 'अदो जग्धिर्ल्यप्ति किति' इत्यनयोश्चारितार्थ्येन तज्ज्ञापकत्ववशाल्लुको ल्यपश्चान्तरङ्गबाधकता भाष्योक्ता भज्येत । किं चैषा भाष्ये न दृश्यते । तदुक्तमसिद्धवत्सूत्रे कैयटेन— 'निमित्तापाये नैमित्तिकस्याप्यपाय इति परिभाषाया भाष्यकृता क्वाप्यनाश्रयणात्' इति । पदसंस्कारपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छती-

---

उभयथापि क्रियमाणं सिद्धत्वार्थं वार्तिकं तद्भाष्यं च दत्तजलाञ्जलि स्यादिति सा प्रतिपक्षयन्तीति भावः; तदाह— **तदसंगतिरिति** । **अत एवेति** । अस्योभयत्रान्वयः; उक्तोऽर्थः । नन्वज्ञानादारम्भेऽपि प्रत्याख्यानाभावे सद्धेतुरित्यत आह— **भाष्येति** । चौ भिधनम्, न प्रत्याख्यातं चेत्यर्थः । प्रत्यङ्गशब्दस्य अनेकार्थत्वादाह— **अन्तरङ्गमिति** । **अस्याम्** अकृतेत्यस्याम् । **तद्वैयर्थ्यं** वार्तिकवैयर्थ्यम् । अनयैव भाष्यकारानिवृत्त्या यणादिनिवृत्तिसिद्धेरिति भावः । **सूत्र इति** । अस्य भाष्य इत्यत्रान्वयः । **अत्र** प्रच्छेरित्यादौ । **यत्नः** सतुक्कनिर्देशरूपः । **एतत्सत्त्वे** 'अकृत—' इति सत्त्वे । क्षीरदेवदीक्षितायुक्तिं खण्डयति— **नचैतदिति** । अकृतेत्यर्थः । **एतत्** सतुक्कनिर्देशरूपयत्नावश्यकत्वकथनम् । **तदाशयः** भाष्याशयः । दोषान्तरमाह— **किं चानयैवेति** । अकृतेत्यनयैवेत्यर्थः । **अनयोरिति** । मपर्यन्तग्रहणानुवृत्तिल्यब्ग्रहणविशिष्टयोरित्यर्थः । **भाष्योक्ता** विनिष्योक्ता; तयोरत्रैवान्तर्भावेऽपि तदुक्तिभङ्गो दुरुद्धर एवेति भावः । दोषान्तरमाह— **किं चैवेति** । **न दृश्यते** कथमपि न दृश्यते; तदाह— **तदुक्तमिति** । वपुष इति प्रतीकं धृत्वान्तरङ्गत्वादिदमाप्य संप्रसारणे कृते तन्निवृत्तिरित्याशङ्कानिवृत्तौ हेतुत्वेनोक्तमित्यर्थः । ननु 'अकृत—' इत्यस्याभावे अनिष्टापत्तिः । अतः फलबलकल्प्येयमावश्यकीत्यत आह— **पदेति** । **हरिरित्यादाविति** । आदिना स्त्यादिपरिग्रहः । **विसर्गे कृते** अवसानसत्त्वात् ।

त्यादिसंबन्धे हरि गच्छतीत्याद्येव साधु । तद्विषये पदसंस्कारपक्षानाश्रयण येनि दिक् ॥ ५७ ॥

## ॥ अन्तरङ्गादप्यपवादो बलीयान ॥ ५८ ॥

तत्रापवादपदार्थमाह—

## ॥ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ॥ ५९

प्राप्त इति भावे क्त । येन नाप्राप्त इत्यस्य यत्कर्तृकप्राप्त्यप्राप्तावित्यर्थ, नन्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । एव च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छि

---

एवेन हरिर्गच्छतीत्यादिव्यावृत्ति । तथा प्रयोगादर्शनात्पक्षान्तरमाह— तद्विषय इति । पदान्तासपदद्वयपदसम्बन्धिविसर्गविषय इत्यर्थ । एव च फलाभावेन न तद्बलकल्पनमन्या इति भाव । किं च सेदुष इत्यादा उत्तरीत्या पूर्वमिटि तत सम्प्रसारण नान्नानन्तय—' इति निषेधादनित्यत्वाच्च बहिरङ्गपरिभाषाया अप्रवृत्त्या यणि बहिरङ्गत्वेनैव सम्प्रसारणस्या सिद्धत्वेन वस्वन्ताव्ययकारलोपे तत्सिद्धि । यत्तु सीरदेवादय — साहतासनापक्षत्वेन बहिरङ्गतया यणादेशस्यैवासिद्धत्वेन तदभावात्कुतो वलि लोप । किंचैव वर्तेते वर्तेय इत्यादा 'आतो ङित' इति बाहरङ्गस्ययादेशस्यासिद्धत्वाद्वलि लोपो दुर्घट इति, तन्न, सुखाकृतबहिरङ्गत्वानाश्रयणात् अत एवयादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च । तस्मात्परिभाषाया अभाव एव । अत एव 'च्छ्वो —' इति सूत्र 'नहाद वचन नाप न्याय' इति हरदत्तेनोक्तम् । एव स्थिते अनित्यामेतामङ्गीकृत्याभाष्यसूत्रस्य कैयटादिमन्थान् गौरवात् 'कृतमपि—' इत्यभावपरतया कथंचिद्योजयित्वा भापकान्तरोपन्यासेनेमा दृढीकुर्वन्तो दीक्षितादयो भ्रान्ता एवेति बोध्यम्, तदाह —दिगिति ॥ ५७ ॥

**अन्तरङ्गादपीति** । अपिर्नित्यादिसमुच्चायक । तत्र पञ्चम्यपवादे, घटकसप्तम्यर्थ, उक्तपरिभाषैकदेशबोधके वाक्ये वा । कर्मार्थधातुप्रयोगादन्वयायोगाचाह— **येन नेति प्राप्त इतीति** । तथा च येनेति कर्तरि तृतीया, सतिसप्तमी चेयम्, तदाह— **येन नेति** । अत एव 'येन प्राप्ते' इति नोक्तम् । प्राप्त्यवश्यत्वलाभे बीजमाह— **नन्द्वयेति** । अत एव 'येन प्राप्ते' इति नोक्तम् । स्वारसिकवश्यत्व चापवादप्रवृत्ते पूर्वमनन्तर वा उत्सर्गस्य स्वारसिकसम्बन्धित्वम् । स्वारसिकत्वं चातिदेशप्रवृत्तिनिरपेक्षत्वम् । एतदर्थमेवैवमुक्तम्, तथा नोक्तम् । दृष्टान्ततोऽप्ययमेव लभ्यत इति तात्पर्यम् । फलितमाह— **एवं चेति** । तथा शब्दार्थे चेन्दर्थ । **विशेषे**

प्रवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः। तत्प्राप्तियोग्ये अचारितार्थ्यं ह्येनस्य बाधकत्वे बीजम्। किं चानेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये तद्बाधबोधनम्; अन्यथा अनवकाशत्वेनैव बाधे सिद्धे एतत्कथनवैयर्थ्यापत्तेः, तक्रकौण्डिन्यन्यायप्रदर्शनवैयर्थ्यापत्तेश्च। यथा— प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधः। यथा वा— आदेरपि प्रवृत्त्या

---

विशेषशास्त्रे उद्देश्यभूत यद्विशेषधर्मावच्छिन्न तन्निष्ठो यः सामान्यधर्मस्तद्विशिष्टमुद्दिश्य यत्र तादृशशास्त्रस्य प्रत्यासत्त्या तेन विशेषशास्त्रेण बाध इत्यर्थः। तथा च विशेषत्वसामान्यत्वे परस्परापेक्षे इति अन्यापेक्षयोस्तयोर्बाध्यबाधकभाव इति भावः। अत्र हेतुमाह— **तत्प्रेति**। सामान्यशास्त्रप्रेत्यर्थः। हि यतः, न तु विरोधादिरिति भावः। **एतस्य** अपवादस्य। नन्वचारितार्थ्यमित्येव सिद्धे 'तत्प्राप्तियोग्ये' इति विशेषणं व्यर्थमत आह— **किं चेति**। **अनेन** 'येन न—' इति न्यायेन। एवमग्रेऽपि। **तत्प्रेति**। सामान्यशास्त्र-प्रवृत्त्युत्तरमपीत्यर्थः। अपिना तत्पूर्वकालसमकालयोः समुच्चयः। तक्रकौण्डिन्यन्यायविषये द्वयोरेव समवतस्त्वेन तद्दृष्टान्तेनात्र द्वयोर्लाभेऽपि सभ्रमात्तृतीयमपि गृह्यते। अयमेव ततोऽत्र विशेष इत्येतदुक्तिसाफल्यम्; अन्यथा तेनैव सिद्धे येनेत्यपि न ब्रूयात्। **चारितार्थ्ये तथैव**। 'चारितार्थ्येऽपि' इति पाठे अपिरेवार्थे; तत्प्रवृत्त्युत्तरमचारितार्थ्य-समुच्चायकत्वं तु न, तत्र सर्वथानवकाशत्वाद्बाधस्य वक्ष्यमाणत्वेनैतदप्राप्त्या 'किं च—' इत्यादिसर्वमन्यासाङ्गत्यापत्तेः। तेन तत्समुच्चयेऽपि दृष्टान्ततया योजनम्; यथा तत्र सर्वथाऽनवकाशत्वाद्बाधस्तथात्रानेन बाध इति केचित्। 'तत्प्राप्ति—' इत्यादिसमुच्चायक इत्यन्ये। वस्तुतस्तु अपिर्युक्तक्रमे, तत्प्रवृत्त्युत्तरमपीत्यन्वयेन प्रागुक्तार्थलाभ इति बोध्यम्। सर्वथा तत्राचारितार्थ्ये सति तदुत्तरं तत्पूर्वे तत्समकाले वा स्वारसिकमातिदेशप्रवृत्तिनिरपेक्षे चारितार्थ्ये यत्र तत्रानेन बाध इति सिद्धम्। अत एव शेखरविरोधो नेति बोध्यम्। अन्यथा तत्र चारितार्थ्याभावे एव तत्त्वाङ्गीकारेण तद्विशेषणन्याये। **अनवकाशत्वेनैवेति**। सर्वथानवकाशत्वेनैवेत्यर्थः। **कथनेति**। 'भाष्ये' इति शेषः। नन्वनेन सर्वथाऽनवकाशत्व एव तस्य प्रकाश्यतेऽत आह— **तक्रेति**। अत्र 'दृष्टान्ततया लौकिक' इत्यादिः। तुल्यत्वे हि दृष्टान्ततेति भावः। स्पष्टार्थमस्योदाहरणद्वयमाह— **यथा प्रथमे-त्यादिना**। 'अजादिधातोः' इति शेषः। अपिर्युक्तक्रमे; तदुत्तरमपीत्यर्थः। ■ च प्राग्वत्। **आदेरपीति**। अपिरन्यप्रवृत्तिसमुच्चायकः। 'कालत्रये' इत्यादिः। उक्तार्थे भाष्यसंमति-

चारितार्थ्येऽपि तदप्यवकाशतां नाप्नोति यथैव । अत एव विप्रतिषेधेऽप्यपवादत्वम् । अत एव अभिरादेशेन नुटोऽपि अपवादत्वाच्छायाबाधमाशङ्क्य 'न तिसृ—' इति ज्ञापकेन समाहितं तृज्वत्सूत्रं भाष्ये । तेन विप्रतिषेधे अपवादत्वाभाव एव बोध्यत इति कश्चित्; तन्न, विप्रतिषेधस्य विप्रतिषेधशास्त्रेण बाधानापत्तेः । यत्तु— 'इणोर्द्विशि—' इति सूत्रे द्वित्वोत्तरे इयादेशस्य चारितार्थ्यं कैयटेनोक्तम्, तच्चिन्त्यम् । ध्वनितं न तेनापि तस्य नयत्वं तदुपलब्धत्वेन । 'असंभव एव बाधकत्वं विशेषस्य तद्वीजमस्मात्' इति वार्तिकमतं तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि । तक्रकौण्डिन्यन्यायेऽपि तद्बाधितविषये अन-

---

चरितार्थेन 'आदेः परस्य' इत्यनेन 'अलोऽन्त्यस्य' इत्यस्य बाधः'। 'तदुक्तम् 'मिदचोऽन्त्यात्परः' इति सूत्रे भाष्ये— 'सत्यपि संभवे बाधनं भवति' इति। अन्यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्, तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसंभवात्। अत एव 'आयादयः—' इति सूत्रे गोपायिष्यतीत्यादावायादीन्बाधित्वा परत्वात्स्यादयः प्राप्नुवन्तीत्याशङ्क्य 'अनवकाशा आयादयः। गोपायतीत्यादावपि शप् स्यादिः प्राप्नोति। न च सति शपि असति वा न विशेषः। अन्यदिदानीमिदमुच्यते— नास्ति विशेष इति। यदुक्तम्— आयादीनां स्यादिभिरव्याप्तोऽवकाश इति, स नास्त्यवकाशः' इति भाष्ये उक्तम्। एवमत्र तत्प्रवृत्त्युत्तरं

माह— तदुक्तमिति। सत्यपीति। अपिः सर्वथाऽनवकाशत्वसमुच्चायकः। भाष्येऽप्रेऽस्यान्वयमुखेनोपपादनसत्त्वेऽपि व्यतिरेकं विना दार्ढ्यासंभवादन्वयमुपेक्ष्य, व्यतिरेकमाह— अन्यथेति। अत एव बाधकत्वाङ्गीकार इत्यर्थः; सर्वथाऽनवकाशत्व एव तत्र इति यावत्। इत्यत्र 'प्रतिपादितः' इति शेषः; बाध इत्यत्रान्वयः। तद्दानोत्तरमिति। दधिदानोत्तरमित्यर्थः। उक्तार्थं द्रढयति— अत एवेति। तथा चारितार्थ्य एवानेन बाधाङ्गीकारादित्यर्थः। गोपेति। अस्य "यथाश्रुतसूत्रे परसप्तमीपक्षे सूत्रत्रयेण भिन्नवाक्यतापक्षे आयाद्यनुवृत्त्यैव सिद्धे पुनरुक्तिसामर्थ्यलभ्यया विपरिणामेन आयादेस्तदन्तात् यदार्धधातुकं ततः परे आयादीनां पक्षे निवृत्तिरिति पक्षे गुप्तिर्जुगोपेति न स्यात्। आयादय इति पदोक्तिसामर्थ्यात्पृथक्पाठसामर्थ्याच्च सूत्रत्रयस्यार्धधातुके एकवाक्यता, सार्वधातुके भिन्नवाक्यतेत्येवम् आयादिप्रकृतेर्यदार्धधातुकं तत्र परे पक्षे तेषामुत्पत्तिरिति पक्षे प्रागुक्तसिद्धावपि गोपायाञ्चकार गोपायेति इष्टं न सिध्यतीत्युक्त्वा स्वीकृते 'आयादयो वा' ततः 'सार्वधातुके नित्यम्' इति न्यासभेदपक्षे" इत्यादिः। परत्वादिति। लादेशप्रवृत्त्युत्तरं लतादौ इति पक्ष इदम्। तथा च 'सकृत्—' इति न्यायेनायादयो न स्युरेवेति भावः। अपवादविषये उत्सर्गाप्रवृत्त्या सार्वधातुकविषये सामान्यसूत्रतो नायादय। एतेन नित्यमित्यस्य परत्वाद्बाधेऽपि सामान्यसूत्रत्रयेण ते स्युः; न हि तेनापि विप्रतिषेधः, तस्यानिमित्तत्वेनान्तरङ्गत्वादित्यपास्तम्। तुल्यनिमित्तत्वादन्तरङ्गत्वनिरासः। स्यन्तस्योक्तमित्यत्रान्वयः। ननु गोपायतीत्यादिरवकाशोऽस्त्वत आह— गोपेति। स्याद्यन्तर्भावतः शप्प्राप्नोतीत्यर्थः। न विशेष इति। विशेषश्चेत्तत्र तदभावे न प्रवर्तेत इति मन्यते। [redacted] नास्त्येवेति।

रितार्थविषयो विधेयविषय एव चेति 'तद्धितेष्वचामादेः' 'धातोरेकाच्—' इत्यादिसूत्रेषु भाष्ये स्पष्टम् । क्वचित्तु सर्वथानवकाशत्वादेव बाधकत्वम्; यथा—ङेरामो याडादिबाधकत्वम् । न हि याडादिषु कृतेषु ङेराम् प्राप्नोति, निर्दि

---

तद्धितेष्विति । तत्र हि कौञ्चो आगत इत्यादौ अन्त्यापवादत्वमपृथक्त्वमुक्त्वा, उभ-
न्यायेन तयोरादिवृद्ध्या बाधमाशङ्क्य, दृष्टान्त नाप्राप्तिसत्त्वेऽपि सौश्रुत इत्यादौ तयोरप्राप्त्या
इह तस्माद इत्युक्तम् । 'सामान्यविशेषभावो बाधकहेतु, स चेह नास्ति' इति तत्र कैयट ।
निमित्तनाशे तत्सत्त्वेऽपि नाथेश तदभाव इति तदाकूतम् । धातोरेकाच इति ।
यद्यप्यत्र सूत्रे न किमपि भाष्ये उक्तम्, तथापि 'नित्य कौटिल्ये—' 'लुपसद—' इत्यत्र
'अधीतेभ्य नियासमभिहारे यङा भवितव्यम्' इति प्रश्ने, 'क्रियासमभिहारे च नेतभ्य'
इत्युक्तम् । तत्र पूर्ववार्तिकस्थस्य 'विशेषासप्रत्ययात्' इत्यस्य चकारेणानुवृत्ति । तथा च
भूया अप्रतीतस्यार्थविशेषस्य तादृशयङन्तादप्रतीतेर्नेति भाव । यत्तत्तुनाऽपि तन्न्यायम्-
धार. स्यान् तर्हि तथा वदेत, यतो नोक्तम्, अतस्तस्य विधेयविषयत्वम् । तत्र यङन्त-
स्तन्न्यायसरापरस्त्वयुक्त एव, विशेषाभिहितेन सामान्यविहितस्य बाध उत्सर्गापवादस्थले
इत्यनेनैतद्दृष्टान्तस्य 'मिदचोऽन्त्यात्—' इति सूत्रे भाष्ये उक्तत्वात् । किं च नहि विशे
षानुवादेन सामान्यानुवादबाधे दृष्टान्तो लौकिकोऽस्ति । नापि तद्विषये नियमेन तत्प्राप्तिरस्ति,
क्रियासमभिव्याहारविवक्षाया समवात् क्रियासमभिव्याहारार्थयङ्गोऽन्यतया तद्वृत्तधातोरित्यर्थ-
मानुवादत्व स्पष्टमेव । नित्यग्रहणं त्वनभिधानमाश्रित्य भाष्ये प्रत्याख्यातम् । तत्र यमलोपमा-
दिश्व [illegible] चिन्त्यमेव । तथा च 'इत्यादि—' इत्यत्र अतद्गुणसंविज्ञानबहुव्रीहिणा 'नित्य कौ-
टिल्ये—' इत्यादिपरिग्रह । तदुक्तस्तु प्राक्सामान्यशास्त्रोपस्थितेर्बाधनेन तस्यापि विषयत्वा-
भाति ध्येयम् । बहुवचनेन 'मिदचोऽन्त्यात्—' इति सूत्रपरिग्रह । तथाह प्राक् । एव
चैतद्भिन्नस्थले सर्वथानवकाशत्वमेवापेक्षितमिति तत एव बाधे नास्य प्रवृत्ति, तदाह—
क्वचित्त्विति । तु पूर्वैर्लक्षण्याय । सर्वथा तदप्राप्तियोग्य तत्प्रवृत्त्युत्तर चेत्यर्थ । एवः
स्पष्टार्थ । आदिना आट्स्याट्परिग्रह । निर्दिश्येति । ङारत्यर्थ । 'याडादिना' इति
शेष । 'यदागमा—' इति न्यायेन समुदायस्य तत्त्वेऽपि न निर्दिश्यमानत्वम् । न चागमा-
देशयोर्न तत्र भिन्नविषयत्वादिति वाच्यम्, उक्तोत्तरत्वात् 'अपवादो वुग्यत्र यस्य' इति
'दीर्घोऽकित' इत्यत्र भाष्ये तयोरपि तत्त्वोक्तेश्च । 'पाद पत्' इति सूत्रस्थम् 'शब्दान्तरप्रा-
प्त्या अनित्ययोराडामो पत्वादाम्' इति भाष्य त्वकृदयुक्तिरिति भाव । नन्वत्रापवादत्वा-
व्यवहाराद्बाधकताप्रयोजकेषु तत्त्वेनोक्तेभ्यादस्य तद्बहिर्भूतत्वात्कथं बाधकत्वम्? अन्यथा

श्रूयमाणस्य व्यवधानात् । तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः । बाधके प्रवृत्ते यत्रोत्सर्गप्राप्तिर्भवति, तत्र भवत्येव; यथा— तत्रैव याडादय अप्राप्तौ तु न; यथा— पचेयुरित्यादौ दीर्घबाधके निरवकाशे इयाः दीर्घाभावः ॥ ५९ ॥

तदेतदप्युच्यते—

## ॥ क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ॥ ६० ॥

इति । अपवादशब्दोऽत्र बाधकपरः । तदुक्तम् 'गुणो यङ्लुकोः'

---

न्यूनतापत्तिरतस्ताह— तत्रेति । सर्वथा निरवकाशस्यल इत्यर्थः । स्वस्य सर्वथा निरवकाशस्य । इतः अभेदे । एवः पूर्वोक्तबाध्यबाधकच्छेदे । तेषां यादेः । अत एव पूर्वतो वैलक्षण्यमिति ध्वनयन्नाह— तत्रेति । उक्तोऽर्थः । बाधके सर्वथा निरवकाशे । 'प्राक्' इति शेषः । तत्रैव हेराम्विषये रमायामित्यादावेव । अप्रेति । तत्र कृते उत्सर्गाप्राप्तौ तु स नेत्यर्थः । निरवकाशेति । अस्य 'सर्वथा' इत्यादिः । दीर्घाभाव इति । यत्रादिसार्वधातुकपरत्वेन 'अतो यञि' इति दीर्घाभाव इत्यर्थः ॥ ५९ ॥

तदेतदिति । तदुक्तप्राप्तिमदुत्सर्गकर्तृक भवनमित्येतदेवेत्यर्थः । 'आधुनिकैः' इति शेषः । तदप्राप्तौ तदभवनात् क्वचिदित्युक्तम् । ननु कोऽस्य वचनस्य विषयः, अत्रापवादशब्दस्यानन्तर तत्राभावात्त आह— अपवादेति । अत्र उक्तवाक्ये । बाधकेति । सर्वथा निरवकाशेत्यर्थः । एतेन, अस्यापवादविषये तस्यान्येन निषेधेऽपि उत्सर्गो भवतीत्यर्थः । यथा रामौ इत्यत्र दृक्षपवादपूर्वसवर्णदीर्घस्य 'नादिचि' इति निषेधेऽपि वृद्धिः । 'तौ सत्' इति निर्देशोऽत्र लिङ्गम् । 'मान्तः पादम्' इति पाठे सुजाते अश्वसूनृते इत्यादौ पूर्वरूपनिषेधेऽपि अयाद्यप्रवृत्तेः क्वचिदिति । यद्वा 'वा लिटि' इति ख्याञादेशस्य द्वित्वापवादत्वेऽपि तस्मिन्कृते द्वित्वं भवत्येन वचनेन । द्वित्वादेशविषये द्वित्वाप्रवृत्तेः क्वचिदिति । इदमेवाभिप्रेत्य ब्रह्मास्त्रत्वान्न पुनः प्रवृत्तिरिति तत्र तत्र पक्षद्वयमयोः कैयटादयः । जातिव्यक्तिपक्षमूलकं चैतत्पक्षद्वयमित्यन्यत्रास्तम् । अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेस्तद्विषये तस्याप्रवृत्त्या तस्य वृद्धिबाधकत्वायोगात् 'आर्धधातुकीयाः सामान्येन भवन्ति' इति सिद्धान्तेन बाध्यबाधकभावस्यैवाभावाच्च द्वित्वादेशस्यानार्धधातुकीयत्वेनादोषाच्च अष्टावसरन्यायानाश्रयणस्य वक्ष्यमाणत्वाच्चेति दिक् । उक्तार्थे प्रमाणमाह— तदुक्तमिति । 'इति मन्येन' इत्यस्या-

र्थ्याच्छिष्टस्यान्त्यस्येत्त्वमिति न दोषः । न च येननाप्राप्तिन्यायेनापवादत्वमप्यस्य सुवचम्, तस्य चारितार्थ्यविषयतया उक्तत्वात् । 'इको झल्' इति सूत्रे भाष्येऽपि ध्वनितमेतत् । तत्र हि 'अज्झन—' इति दीर्घे गुणोत्तरं फलाभावेनानवकाशत्वाद्गुणे बाधिते दीर्घोत्तरं गुणः स्यात् । दीर्घविधानं तु मिनोतेर्दीर्घे कृते 'सनि मीमा—' इत्यत्र मीग्रहणेन ग्रहणेऽर्थवत् तत्र पश्चात्प्राप्तगुणबाधनार्थम् 'इको झल्' इति कित्त्वमित्युक्तम् । अन्यथापवादत्वेन बाधे तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासंगतिरिति स्पष्टमेव ।

---

सामर्थ्यादित्यर्थः । एकदेशविकृतन्यायेन गस्य गत्वेन तदन्त्यानारस्यान्त्यत्वादिति भावः । यद्वा तत्सामर्थ्यात्प्रभवतीति न्यायबाधेनोच्चार्थं विहाय गस्यान्त्याभ्यासान्त्यस्येत्त्वमित्यर्थाङ्गीकारादिति भावः । तत्सूत्रोक्तस्यापवादत्वोक्तिं खण्डयति— **न चेति** । अपि सर्वथानवकाशत्वसमुच्चायकः । एवं चोक्तपूर्वपरिभाषयापि निर्वाह इति भावः । **तस्येति** । उत्सर्गे कृतेऽपि चारितार्थ्यस्येत्यपवादत्वमिति भावः । उक्तार्थे मानान्तरमाह— **इको झलिति** । भाष्येऽपीति पाठः । **तत्र हीति** । अस्य उक्तमिलनान्वयः । 'सूत्राभावे चिचीषतीत्यादौ' इति शेषः । सर्वथानवकाशत्वाय, संभावितं कृते चारितार्थ्यं निराचष्टे— **गुणोत्तरमिति** । नन्वेवं दीर्घविधानमनर्थं स्यादत आह— **दीर्घेति** । **ग्रहणे** 'सति' इति शेषः । न चास्य लाक्षणिकत्वम्, यत्र लक्षणानुसन्धानेन शब्दरूपाश्रयणं तत्र तत्प्रवृत्तावपि प्रयोगरूपाश्रयणे तदप्रवृत्तेः, अन्यथा 'गामादाग्रहणेषु—' इत्यस्यासङ्गत्यापत्तेः । मासाहचर्यान्मीशब्दांशेऽपि सा नेति तत्त्वम् । न चैवमप्यसति कित्त्वे एज्विषयत्वेनात्त्वप्रवृत्त्या 'गामादा—' इति वचनान्माग्रहणेन ग्रहणादिस् भविष्यतीति तत्र मीग्रहणमेवाव्यर्थमिति न तद्दीर्घविधानस्य फलमिति वाच्यम्, एवं सत्यनर्थकत्वेन तत्र गुणस्यैव मीप्सतीत्यादौ णिजेरस्यापि बाधापत्तेः । अथ स्थानिवत्त्वात्तत्र कृते स दुर्वारः बाधस्तु समानकालिकस्यैवेति चेत्, तर्हि तथैव तत्रापि उत्तरं गुणोऽपि स्यात् । दीर्घं च तु सामान्यग्रहणाविघातार्थमिति भावः । **तत्र** चिचीषतीत्यादौ । 'एवं च' इत्यादि । यद्वा तत्र तस्मिन्सति नस्य भाष्ये इति । प्रकृतमाह— **अन्यथेति** । सर्वथानवकाशस्थलेऽपि येन नेति न्यायेन बाधाङ्गीकार इत्यर्थः । 'प्रवृत्ते' इति शेषः । **अपवादत्वेन** तेनैव । **तद्विषये** अपवादत्वेन बाधविषये । **अप्रवृत्तेरिति** । अस्य 'सिद्धान्तितं येन' इति शेषः । **भाष्यस्य** पूर्वोक्तभाष्यस्य । **सूत्रस्य** 'इको झल्' इति सूत्रस्य । तस्मात् सर्वथा अनवकाशापवादविषये तदप्रवृत्ति

बोध्यः । अत्रेदं बोध्यम्— 'येन नाप्राप्ते—' इत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थः, तदा स्वविषये स्वेतरं यद्यत् प्राप्नोति, तद्बाध्यम्, विध्यन्तराप्राप्तविषयाभावात् । इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते । अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या, यत्नुदाहरणमस्ति, विनिगमनाविरहात् । यदि तु येनेत्यस्य लक्षणेनेत्यर्थः, कार्येणेत्यर्थो वा, तदा बाध्यविशेषचिन्ता । अनवकाशत्वेन बाधेऽपि एतद्भावेन सार्थक्यम्, उत तद्बाधेनेत्येव विशेषचिन्ता सम्भवति, यत्नुदाहरणमस्तीति ॥ ६० ॥

तत्र कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्ये प्राप्ते आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे निर्णीते किंशास्त्रविहितस्यैवेव तद्विशेषचिन्तायामाह—

---

छात्रा इतिवत् काचनस्ययमिति विवक्षा, तदा भवत्येव छ इति भाव । 'पुरस्तात्—' इत्यादिन्यायस्वरूप वक्तु येनेत्यत्र कश्चित्सिद्धान्तमाह— **अत्रेदमिति । स्वेतरेणेति ।** अपवादेतरत्वावच्छेदकावच्छिन्नेनेत्यर्थ । स्वम् अपवाद सर्वत्र । वीप्सितस्य तदा परामर्शाभ्र वाप्सा । **विध्यन्तराप्राप्तेति ।** बहुव्रीहि समानाधिकरण, आहिताग्न्यादित्वात्पर निपात, प्राप्तेति कर्तरि क्त । प्राप्तेति भाव क्त, व्यधिकरणबहुव्रीहिरिति कश्चित् । तदन्यासलक्ष्याभावादिति परमार्थ । **इयमेवेति ।** स्वेतरसकलबाधैवेत्यर्थ । अपवादस्थले एतामुक्त्वा, सर्वथानवकाशस्थलेऽप्येनामाह— **अनवेति । एषा** बाध्यसामान्यचिन्ता । **यत्नुदाहरणमिति ।** अनेन तदभाव सूचित । एवमग्रेऽपि । शक्यत्वे हेतुमाह— **विनेति । यदीति ।** तुर्वैलक्षण्यसूचक । 'येनेत्यस्य लक्षणेनेत्यर्थ कार्येण इत्यर्थो वा' इति पाठ । **लक्षणेनेति ।** शास्त्रविशेषेणेत्यर्थ । प्राधान्यादाह— **कार्येणेति ।** प्राग्वदाह— **अनवेति ।** 'सर्वथा' इत्यादि । इति समासो ॥ ६० ॥

नन्वेव पक्षभेदेऽपि कथं पुरस्तादित्यादिसिद्धिरत आह—**तत्रेति ।** तेषां त्रयाणां मध्यं इत्यर्थ । 'तत्र कार्येण' इति पाठ । कार्येणेत्यस्य कार्यविशेषेणेत्यर्थोऽपि कार्यतावच्छेदको यो विशेषधर्मस्तदवच्छिन्नसर्वकार्यग्रहणसम्भवादाह— **परेति ।** अत एव लक्षणेनेत्यर्थ न सम्भव इति तत्त्याग । **वृद्धे** 'एत्येधति—' इत्यस्या । **तद्बाधेति ।** पररूपबाधेत्यर्थ । **निर्णीते** पूर्वन्यायेन । **तद्विशेषेति ।** अवान्तरकार्यविशेष इत्यर्थ । एतेन 'येन न—' इति न्यायेन यत्रोभयबाधकत्वं प्राप्तम्, तत्रैव वक्ष्यमाणन्यायानां स्थिति

**पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान् ॥ ६१ ॥**

अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभावः, आकाङ्क्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् ॥ ६१ ॥

'नासिकोदरौष्ठजङ्घा—' इत्यस्य ओष्ठाद्यंशे ङीन्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किंविहितस्येत्याकाङ्क्षायामाह—

**मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् ॥ ६२ ॥**

तेन ओष्ठादिषु पञ्चसु 'असंयोगोपधात्' इति प्रतिषेध एव बाध्यते, न तु सहनञ्विद्यमानलक्षण इति 'नासिकोदर—' इत्यत्र भाष्ये स्पष्टम्। पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६२ ॥

ननु 'वा च्छन्दसि' इत्यनेन 'सेर्ह्यपिच्च' इत्यनन्तरस्यापित्त्वस्येव

---

बाधकत्वमिति सूचितम्। अस्य न्यायस्य युक्तिसिद्धत्वमाह—**अवश्यमिति**। **स्वपरेति**। स्वेन स्वान्यस्मिन्नित्यर्थः। **प्रथमेति**। यतोऽनन्तरमतः प्रथमोपस्थितमित्यर्थः। एवमग्रेऽपि। अत एव तत्र चानुक्तिः। **ततः** अनन्तरात्। **आकाङ्क्षाया इति**। बाधकस्य बाध्याकाङ्क्षाया इत्यर्थः। नन्वाकाङ्क्षा कथं पतामत आह— **विप्रेति**। **एतस्य** न्यायस्य ॥ ६१ ॥

'मध्येऽपवादा—' इति न्यायमवतारयति— **नासीति**। नासिकोदरयोरसंयोगोपधत्वादाह— **ओष्ठाद्यंश इति**। आदिना जङ्घादिपरिग्रहः। येन न्यायेनान्यथाभिप्रायेणैव प्रागवदाह— **ङीन्निषेधेति**। **तेनेति**। न्यायाङ्गीकारेणेत्यर्थः। उक्तसूत्रेणेत्यर्थ इति कश्चित्। एकव्याक्यतां स्पष्टार्थमाह— **न त्विति**। अत्र मानमाह— **पूर्वोपेति**। पूर्वज्ञानजन्यसंस्कारजन्यस्मृतिविषयेत्यर्थः। उत्तरस्य त्वननुभवात्स्मृत्ययोग इति भावः। **बाधेनेति**। अस्य 'चारितार्थ्ये' इति शेषः। बीजान्तरमपि प्रागवद्बोध्यम्। **अस्याः** न्यायरूपपरिभाषायाः। एते ज्ञापके वदन्तः सीरदेवादयः परास्ताः; युक्त्यैव सिद्धार्थेन चारितार्थ्ये ज्ञापकत्वासंभवात् 'अष्टाभ्यः—' इत्यत्रत्यैकपदविरोधापत्तेश्चेत्यनुपदमेव स्फुटीभविष्यति ॥ ६२ ॥

हेरपि विकल्पः स्यात्, तथा 'नेटि' इति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचिवृद्धिमृजिवृद्ध्योरपि स्यात्, अत उक्तन्यायमूलकमेवाह—

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ॥ ६३ ॥**

इति। अत एव 'सङ्ख्याव्ययादेः' इति ङीब्ग्रहणं चरितार्थम्, तद्धि अनन्तरस्य ङीपो विध्यभावाय, 'न क्तिचि—' इति सूत्रे दीर्घग्रहणं च चरितार्थम्, तद्धि अनन्तरस्य 'अनुदात्तोपदेश—' इत्यस्यैव निषेधाभावाय। मध्येऽपवादन्यायापेक्षया 'अनन्तरस्य—' इति न्यायः प्रबल इति 'अष्टाभ्यः—' इति सूत्रे कैयटः। प्रत्यासत्तिमूलकोऽयम्; लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम्। तत्र तत्र क्वचित्स्वरितत्वप्रतिज्ञानात्सामर्थ्येन वा

---

विधिमुक्त्वा निषेधमाह— तथेति। यद्यपि मृजिवृद्धयो मध्येऽपवादन्यायेन निर्वाहः, तथापि सिचिवृद्धयर्थमावश्यकेनानेन सिद्धौ तदाश्रयणमफलमिति ध्वनयन्नाह— **मृजिवृद्ध्योरपीति।** **उक्तन्यायेति।** अनन्तरप्रथमोपस्थितबाधेन मानस्य व्यवहित पश्चादुपस्थितबाधे मानाभाव इत्येतत्प्रथमन्यायमूलप्रत्यासत्तिन्यायमूलकमेवेत्यर्थः। एतेन ज्ञापकमूलकत्वनिरासः। **अत एव** न्यायाङ्गीकारादेव। अस्य चरितार्थद्वये अन्वयः। अत एव चर्समति तत्र विध्यभावफलमाह— **सङ्ख्येति।** निषेधाभावफलमाह— **न क्तिची-ति।** एतेन 'अनुनासिकस्य क्विझलोः—' इत्यस्य निरासः। एतेन तयोस्तयोरेतज्ज्ञापकत्व वर्णयन्तः सीरदेवादयः परास्ताः। आदिना पुरस्तादपवादन्यायसंग्रहः। **कैयट इति।** 'यो वा तस्मादनन्तर इति भाष्यव्याख्यावसर' इत्यादि। तयोर्न्यायमूलकत्वम्, अस्य ज्ञापकमूलकत्वमिति तद्भाव। कैयट इत्यनेनारुचि सूचिता। एतद्द्वयोरपि ज्ञापकसम्भवनार्धजरतीयानौचित्यरूपा। तत्रादौ ज्ञापकम्— 'परिमाणाख्यायाम्—' इत्यत्र सर्वग्रहणम्। तद्धि 'एरच्' इत्यस्यैव बाधो न, किन्तु 'ऋदोरप्' इत्यस्यापि द्वौ कारावित्यादाव श्रवणार्थम्। अन्ये 'बहुमाहिरूपण—' इत्यस्य सूत्रस्य 'अन उपधालोपिन—' इत्यत्रानुवृत्त्यर्थं कृत वृत्तिकारादिमतं स्वरितत्वप्रतिज्ञानम्। तेन घटोध्नी यादौ 'बहुव्रीहेः—' इति ङीपेव, न तु 'अन उपधा—' इति परो डाप्। अत एव पक्षान्तरमाह— **प्रत्येति।** तत्र प्रत्यासत्तिरुक्ता। अयम् अनन्तरेति न्यायः। अन्वेव नु बलाबलप्रबलदुर्बलभावांस्त आह— **लक्ष्येति।** वस्तुतः। तत्र तत्र बहुषु सूत्रेषु कैयटादौ। यत्र एव सर्वेषां कैयट

शन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । 'अपवादो यद्यन्यत्र चरितार्थः—' इति न्यायस्य तु नात्र प्राप्तिः, अन्वादेशाप्राप्तिविषये चारितार्थ्याभावात् ॥ ६४ ॥

लक्ष्यैकचक्षुष्कस्तु तच्छास्त्रपर्यालोचनं विनापि अपवादविषयं परित्यज्य, उत्सर्गेण लक्ष्यं संस्करोति, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः ; तदाह—

**प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते ॥ ६५ ॥**

---

कचक्षुष्काभिप्रायमित्याह— **लक्षणैकचक्षुष्को हीति** । अन्यथा उद्देश्यतावच्छेदकावच्छिन्ने सर्वत्रोत्सर्गकृतसंस्कारे । **विकल्पेति** । शास्त्रद्वयप्रामाण्यात्; सा च नेष्टेति भावः । ननु पर्यालोचनेरस्यार्थलाभः कुतः ? आदौ तत्प्रवृत्तेरेव लाभात् । किं च पूर्वमपवादप्रवृत्तिर्यत्र संभवति, तत्र [illegible] सर्वथानवकाशत्वेनैव सिद्धा । अत एव पश्चादुत्सर्गप्रवृत्तिरपि 'क्वचिदपवाद—' इति प्रागुक्तन्यायेन प्राप्तिसत्त्वे सिद्धेति तदर्थकमिदं व्यर्थम् । किं च दध्यत्रेत्यादौ असंभवोऽनिर्वाहश्चात आह— **असंभेति** । एवं च तं पर्यालोच्य तद्विषयत्वाभावेन निर्णीतविषये उत्सर्गो बुद्धिविषयः सन् लक्ष्यं संस्करोति । एवं चोत्सर्गप्रवृत्तौ तज्ज्ञानमेव कारणमिति भावः । अत्र दध्यत्रेत्यादौ । **असंभवादिति** । तस्य युगपत्प्राप्तिविषयत्वाभावेऽपि बोध्यम् ॥ ६४ ॥

द्वितीयामवतारयति— **लक्ष्यैकेति** । अत एव तुः । **तच्छास्त्रेति** । अपवादशास्त्रेत्यर्थः । ननु लक्ष्यैकचक्षुष्कस्य लक्षणापेक्षैव नेति कथमुत्सर्गस्यापि प्रवृत्तिरत आह— **तस्यापीति** । लक्ष्यैकचक्षुष्कस्यापीत्यर्थः । अपिरुक्तसमुच्चायकः । **एवेति** । एवेन तदन्यथाप्रयोगे धर्मोत्पत्तिनिरासः । स्पष्टं चेदं पस्पशाह्निके ; इदमपि तत्र गमकमिति भावः । एतेनापवादेनोत्सर्गस्य बाधाविशेषात्पक्षद्वयोपन्यासो व्यर्थ इत्यपास्तम् । 'प्रकल्प्य वा' इति पाठः । वाशब्दः पक्षविकल्पे । यथाक्रमं प्रकल्प्येत्यस्य बुद्ध्यारूढं कृत्वा ततस्तदनन्तरं स प्रवर्तते इत्यर्थे पूर्वतो भेदो न स्यात् । इष्टापत्तौ चासंगतिर्वक्ष्यमाणदोषश्च । अतो व्युत्क्रमेण 'प्रागपि' इति शेषपूरणेन व्याचष्टे— **तत इति** । तस्य क्रमान्तरपरामर्शकत्वाभावादाह— **अपवादेति** । अत एवाह— **परीति** । 'अभिनिविशते' इत्यस्य प्रवर्तते इत्यर्थः । एवं चापवादशास्त्रविषयं स्वयमेव त्यक्त्वा देवदत्तादिरुत्सर्गेण लक्ष्यं संस्करोतीत्यर्थः । प्रागेवोत्सर्गस्यापवादविषयान्यविषयं निर्णयनानि यावत् । तथा च पूर्वमते सर्वत्र प्राप्तस्योत्सर्गस्य विषयविशेषेऽपवादेन बुद्ध्यारूढेन निवृत्तिः ; अत्र तु प्रागेव तथेति भेद इति

प्रदीपोद्द्योते निरूपितम् । अत्र 'देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं न' इति न्यायस्य विषय एव नास्ति, हते देवदत्ते उन्मज्जनं न, देवदत्तहननोद्गतस्य तु हनने भवत्येवोन्मज्जनम् । प्रकृतेऽपि न पूर्वसवर्णदीर्घेण पूर्वेर्हननम्, किं तु हननोद्यमसजातीय प्रसक्तिमात्रम्, प्रसक्तस्यैव निषेधान । प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम् । स्पष्टं चेदम् 'शेषाद्विभाषा' इति सूत्रे भाष्ये । तत्र हि 'शेषग्रहणमनर्थकम् । ये प्रतिपदं विधीयन्ते, ते बाधका भविष्यन्ति' इत्याशङ्क्य, 'अनवकाशा हि विधयो बाधका भवन्ति । समासान्ताश्च कपभावे सावकाशाः' इत्युक्तम् ।

क्वचिदनवकाशत्वाभावेऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि, 'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वम्' इति 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे कैयटेन पाठात्। अत एव रमे इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्वे आकारप्रश्लेषात् हल्ङ्याब्भ्यो लोपो न प्राप्नोतीत्याशङ्क्य 'एङ्ह्रस्वात्—' इति लोपेन समाहितम् ॥ ६६ ॥

नन्वयजे इन्द्रमित्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः स्यादत आह—

**अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥ ६७ ॥**

निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात्। एवं च प्रकृतेऽन्तर-

---

याह— **क्वचिदिति।** शास्त्रस्य तदभावेऽपि तत्समवधाने प्रतिपदविधित्वेन यच्छीघ्रोपस्थितिकत्वम्, तेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वमभ्युपगम्यत इत्यर्थः। **परेति।** विरुद्धयोर्द्वयोः शास्त्रयोः संनिपाते एकलक्ष्ये प्रवृत्तौ यत्परादीन्यतमं तद्भवति, तेषां परादीनां मध्ये मिथः परनित्याद्योर्युगपत्प्रसङ्गे उपात्तक्रमेण तद्बलवदित्यर्थः। एवं च वाक्यद्वयमिदमिति 'विधयः' इति प्रथमोपपत्तिः, 'विरोधि'—इत्यस्य साफल्यं च। यत्तु—'विरोधिसंनिपाते' इत्यनेन भिन्नविषययागमादेशयोर्नापवादत्वमिति सूचितमिति केचित्, तन्न, नुम्नुटोर्बाध्यबाधकत्वानापत्तेः। 'नित्यात्सुब्लुकोऽन्तरंगा आदेशाः' इति 'प्रत्ययोत्तर—' इति सूत्रव्यर्थमिति ज्ञापकं परिभाषाया इत्यत्र तेनैवोक्तम्। **इति** इत्यस्य। अत एव कैयटेनेति तृतीयासंगतिः, 'उभय—' इति नियमप्राप्तेः। नन्वेवमपि तद्भाष्यात्प्रतिपदविधित्वस्य तावन्न लब्धमिति तदंशे कैयटासंगतिरेवेति कथमुक्तार्थसिद्धिरत आह— **अत एवेति।** उक्तार्थाङ्गीकारादेवेत्यर्थः। एत्त्वे 'संबुद्धौ च' इत्यनेन, तत्र संबुद्धिपदोपादानात्। **समाहितमिति।** अन्यथा शङ्कस्याज्ञानेऽपि सिद्धान्ती तथैव वदेदिति तदनुक्तयैतदर्थस्य तदभिमतत्वमिति भावः ॥ ६६ ॥

अन्तरङ्गस्य पूर्वोपस्थितनिमित्तकस्य। **अपवेति।** अनेन पूर्वसङ्गतिः सूचिता। स्वविषये चारितार्थ्येन वैपरीत्यमित्याह—**यद्यन्यत्रेति।** अत्र बीजमाह— निर-

ण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थौ यण्गुणयोरपवादोऽपि बाध्य-
त । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वाविषय इदम् । यत्तु—' आगमादे-
शयोर्न बाध्यबाधकभावः, भिन्नफलत्वात् । अत एव ' ब्राह्मणेभ्यो दधि दी-
यताम्, कम्बलः कौण्डिन्याय' इत्यादौ कम्बलेन न दधिदानबाधः' इति
' च्छ्वोः—' इति सूत्रे कैयटः, तन्न, ' अपवादो गुर्दीर्घत्वस्य' इति ' दी-
र्घोऽकितः' इति सूत्रस्थभाष्यविरोधात् ॥ ६७ ॥

नन्वजीगणदित्यादौ णेरीत्व निरवकाशत्वाद्धलादिःशेषं बाधेत;

तत्राह—

---

वेति । अय भाव — दण्डाग्र श्रेश इत्यादौ समानस्थानिनिमित्तके सर्वथानवकाशत्वेन यण्गुणयो प्राप्तबाध सति तत्र तयोरप्राप्तावपि भिन्नस्थानिनिमित्तक अयज इ इन्द्रमित्यादौ गुणदीर्घयो प्राप्तौ दीर्घस्य सर्वथानवकाशत्वाभावेऽपि तत्र चारितार्थ्यं सति तदप्राप्तियोग्ये-ऽचारितार्थ्यरूपनिरवकाशत्वस्य सत्त्वात् ' येन न— इति न्यायेन प्राप्तो बाधो न, तु यस्था-निनिमित्तकयोरेव तेन मिथो बाध्यबाधकभावस्य विप्रतिषेधसूत्रस्थभाष्यादकीकारादिति । तदाह— पर्य वेति । तादृशबाधाभावे चलर्थ । प्रकृते अयज इ इन्द्रमित्यादौ । समा नेति । तयोरपवादोऽपि यत समानाश्रये चरितार्थ, अत इत्यर्थ । उक्तहेतावेवाह— पूर्वो- वेति । 'रूपान्तरङ्गत्वविषये' इति पाठ । एव च यत्र स्थानिनिमित्तयोरन्तरङ्गत्वमन्या दृशम्, तत्र तस्यापवादत्वेन बाध इति भाव । यत्त्विति । अन्यथा ऊठादिस्वपक्षे नाप्राप्त लोप वक्ष्यमाण ऊडागमो बाधक स्यादिति वलोपाभावे रूपासिद्धिरिति वलोपेन तत्साधकभाष्यासगति स्यादिति भाव । भिन्नेति । लोपो हि स्थानिनिवृत्तिफलक, ऊट् तु न तन्निवृत्तिपरक इति भाव । फलमवान्तर शास्त्रविहितरूप प्राह्यम्, न प्रया गरूपम्, अन्यथैतदसगति स्पष्टैव । अत एव दृष्टान्तसगतिरपि अन्यथा तत्रापि शरीररक्षणरूपफलस्य तु सत्त्वात्तदसगति स्पष्टैव । तदाह— अत एवेति । भिन्नफलत्वे तत्त्वानङ्गीकारादेवेत्यर्थ । दधि ओदनसंस्कारकम्, कम्बल शीतनिवारक इति भाव ॥६७॥

निरवेति । अस्य 'सर्वथा' इत्यादि । अनेन पूर्वसङ्गति सूचिता । अनयो क्रम तु पूर्वाक्रम एव नियामक । किंच तत्र विपरीता बाध्यबाधकभाव प्रतिपाद्यत इति प्राक्तदुपस्थिति, अत्र नु तस्यैवाभाव इति पश्चादुपस्थितत्वमिति भाव । बाधेतेति ।

## अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६८ ॥

'दीर्घोऽकितः' इत्यकिद्ग्रहणमस्या ज्ञापकम्, अन्यथा यंयम्यते इत्यत्र लुकि कृतेऽनजन्तत्वाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव। इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका। तेन अचीकरत् मीमांसते इत्यादि सिद्धम्। आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाधः प्राप्नोति। अन्त्ये 'मान्बध—' इति दीर्घेणान्तरङ्गत्वादित्त्वस्य बाधः प्राप्तः। यत्तु—'यत्र एकैकप्रवृत्त्युत्तरमपि सर्वेषां प्रवृत्तिः, तत्रैवेदम्' इति 'अत एक—' इति सूत्रे कैयटः, तन्न, लुकि कृते दीर्घाप्राप्त्या धर्मिग्राहकमानविरोधात् मान्बधादीनां दीर्घे कृते ह्रस्वाप्राप्त्या 'गुणो यङ्लुकोः' इति सूत्रस्थभाष्योक्तोदाहरणासंगतेश्चेत्य-

---

स्य 'इति चेत्' इति शेषः। अन्यथा एतत्परिभाषाभावे। लुकीति। अपवादत्वात् ना प्राप्ते दीर्घे लुक् आरम्भात् तत्र समकालं चारितार्थ्ये सति तदप्राप्तियोग्येऽचारितार्थ्यात्। ननु कृतेऽपि लुकि प्रत्ययलक्षणेनाजन्तस्य दीर्घः स्यादिति चेन्न दीर्घश्रुत्यानुपरिभाषो पस्थानादचोऽभ्यासस्य विशेषणादजन्ताभ्यासान्त्यस्य दीर्घाभवतस्तदर्थात्, तदाह— अन जन्तेति। 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते' इति लघुतदर्थाकारं फलमाह— इयमिति। परेति। आदिना नित्यपरिग्रहः तत्तद्रूपबाधकानामित्यर्थः। आद्ये अचीकरदि त्यत्र। अस्य 'अन्यथा' इत्यादि। सन्वद्भावस्यावकाशः — अचिक्षणदिति। दीर्घस्यावका शः — अदीदिपदिति। अत्र अभ्यासस्यात्तु वाम् दीर्घाप्राप्तिः अन्त्ये 'सन्यतः' इत्यादिना कस्यचित् कार्यस्याविधानात्सन्वत्त्वाप्राप्तिः। दीर्घस्तु सन्वद्भावविषये, न तु तस्मात् भावः। प्राप्नोतीति। वर्तमानसामीप्ये भूते लट्। अन्त्ये मीमांसते इत्यत्र। अन्तर ङ्गेति। सन्प्रत्यये, अभ्यासदीर्घत्वं च सन्नियोगेन विधीयत इत्यन्तरङ्गं दीर्घत्वम्। इत्वं तु बहिरङ्गं सनि परतो विधानात्। न च सन्प्रत्ययकाले अभ्यासाभावेन तदप्राप्त्या कथं दीर्घस्यान्तरङ्गत्वमिति वाच्यम्, अभ्यासत्वस्यावश्यकत्वेन तावत्पर्यन्तं दीर्घस्यावस्थानेऽपि ह्रस्वपर्यन्तमवस्थितौ कारणाभावेन तदपेक्षयान्तरङ्गत्वसत्त्वादिति भावः। एकैकेति। उत्सर्गस्यापवादस्य चलार्थं। यथा— ननेतालादौ उरदत्वं स्यादयं, तत्र च तदिति भावः। कृते 'अनन्तत्वाभावेन' इति शेषः। धर्मीति। 'दीर्घोऽकित इत्यकिदिति' इत्यादि। मानादीनामित्येव सिद्धे स्वबुद्धिकल्पितन्याय। गुणो यङ्लुकोरिति। 'मान्बध —' इत्यपि द्रष्टव्यम्। तदुदाहरणेति। मीमांसते दाम्बध्यादिरित्तदुदाहरणत्वं। न चैव

तेन ताच्छीलिकैरताच्छीलिकैश्च वासरूपविधिर्नेति बोध्यम् । नन्वेवं कम्रा कमनेत्याद्यसिद्धिः, 'नमिकम्पि—' इति रेण 'अनुदात्तेतश्च हलादेः' इति युचो बाधादिति चेन्न, 'सूददीपदीक्षश्च' इत्यनेन दीपेर्युज्निषेधेनोक्तार्थस्यानित्यत्वात् ॥ ६९ ॥

नन्वेवं हसितं छात्रस्य हसनमित्यादौ घञ्, इच्छति भोक्तुमित्यत्र लिङ्लोटौ ईषत्पानः सोमो भवतेत्यत्र खल् प्राप्नोतीत्यत आह—

क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ॥ ७० ॥

---

इति वरचि भास्वर इति सन् 'अनुदात्तेतश्च' इति युचा भासन इत्यस्याभावेऽपि भासन इत्यपि स्यात् । अन्ये उक्तज्ञापकसम्भवेऽपि पदिग्रहणानर्थक्यापत्तिः, उक्तलक्ष्यासिद्धिवैपरीत्यापत्तिश्चात आह— **ताच्छीलिकेष्विति** । **विषयेति** । विषयता च द्वयोस्तत्त्वेन अपवादस्यैव वा, उत्सर्गस्यैव तत्त्वेन तु न असम्भवात् । अपवादस्य तु सर्वथा तत्त्वमपेक्षितमिति भावः, तदाह— **तेनेति** । विषयसप्तम्यङ्गीकारेणेत्यर्थः । 'ताच्छीलिकानामपवादानाम्' इति शेषः । एवं चैकेनैव ज्ञापकेनोभयलाभे पदिग्रहणमपि सफलम् सकलेष्टसिद्धिरपीति बोध्यम् । **एवं** द्वयोस्तत्त्वेऽपि परिभाषाप्रवृत्त्यङ्गीकारे । **कम्रेति** । कम्रेतिवत्कमनेत्याद्यसिद्धिरित्यर्थः । वैधर्म्ये दृष्टान्तः । आदिना गन्ता गामुकः, विकत्था विकत्थन इत्यादिपरिग्रहः । आद्ये तृन्नुकञौ अन्त्ये घिनुण्युचौ । **रेण** विशेषविहितेन । **सूदेति** । व्यधिकरणं निषेधविशेषणम्, युजित्यत्र बहुव्रीहिणा समानाधिकरणं वा । **उक्तार्थस्य** परिभाषार्थस्य । **अनित्यत्वात्** अनित्यत्वज्ञापनात् । अन्यथा 'नमिकम्पि—' इति रेणैव दीपेरपि युचो बाधे सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति भावः ॥

एवं ताच्छीलिकेष्वेवानित्यवासरूपविधिनिषेधाङ्गीकारे । **छात्रस्येति** । मध्यमणिन्यायेन अन्वेति । 'नपुंसके भावे क्तः ।' 'ल्युट् च' इत्यस्य विषयोऽयम् । **घञिति** । घञर्थीयार्थः । उचितक्रियाध्याहारः । एवमग्रेऽपि सर्वं बोध्यम् । तथा सति हासमित्यपि स्यात् । **भोक्तुमिति** । 'समानकर्तृकेषु' इति तुमुन् । **लिङिति** । 'इच्छार्थेषु लिङ्लोटौ' इति तौ । **खलिति** । 'आतो युच्' इत्यस्य विषय इति भावः । **क्तल्युडिति** । एतेषु घञादीनामपवादभूतेषु सत्सु स नास्तीत्यर्थः । तथा चैते उत्सर्गमपि नित्यं बाधन्ते, न तु वासरूपविधिना विकल्पेन । एवं च यत्र क्तादय एवोत्सर्गाः, तत्र सोऽस्त्येव, यथा—

आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः । अत्र च 'हशश्वतो-र्लङ् च' इति लङ्विधानं ज्ञापकम्, अन्यथा 'परोक्षे लिट्' इति लिटा लङः समावेशोऽसारूप्यात्सिद्ध इति किं लङ्विधानेन । शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिः, 'लिटः कानज्वा' इति वाग्रहणं च कृतम्, तज्ज्ञापयति— वासरूपसूत्रेऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम् । तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव, न तु पक्षे तिङ् इति बोध्यम् ॥ ७१ ॥

ननु 'ङमो ह्रस्वात्—' इत्यादौ ङमः परस्याचः, अचि परतो ङम इति वेति संदेहः स्यादत आह—

कर्मधारय । कडारादित्वात् लस्य पूर्वनिपात । आदेशपदं च स्वनिष्ठवैरूप्यलाक्षणिकम्, अर्श आद्यच इत्याशयेनाह— आदेशेति । नीलरूपवदितिवत्प्रयोग । वस्त्वर्थे, वाक्यालङ्कारे वा । अन्यथा एतद्वचनाभावे । लङ 'अनद्यतने लङ्' इति विहितस्य । असारूप्यात् उक्तरीत्या । एवं च सूत्रमुक्तार्थे ज्ञापकम् । ननु यथाश्रुतार्थ एव अस्तु किं लक्षणाद्याश्रयणेन ? अत आह— शत्रादिभिरिति । आदिना कानजपि । अत एव बहुवचनम् । शतृविधायके 'लटः शतृशानचौ' इति योगविभागे । विभाषेति । 'नन्वोर्विभाषा' इत्यतः । 'सदादिभ्यो बहुलम्' 'इङ्धार्योः' इति वार्तिकप्रत्याख्यानाय भाष्यकृत्कृतेत्यर्थं । सूत्ररीत्या आह— लिट इति । कृतमिति । अस्य 'यत्' इत्यादि । तत् उभयम् । अपवाद असरूपपदबोध्य । एवेति । एवो भिन्नक्रम आदेशत्वानाक्रान्त एव प्रत्यय इत्यर्थ । ध्वनितमिति । अनेन तदनुक्तत्व ध्वनितम् । सामान्ये इति । अनेन तद्विशेषे यथायथं लिङ्गो भवन्त्येवेति सूचितम् । पक्षे तिङ इति । अन्यथा ॥ पक्षे तेऽपि वासरूपन्यायेन स्यु । कानच्तु न पक्षे तस्य छान्दसत्वात् । अस्वरितत्वात्तस्य नानुवृत्तिरिति भाव । एवं च यथाश्रुतार्थस्य दुर्वचत्वात्तदाश्रयणमावश्यकमिति तत्त्वम् ॥ ७१ ॥

वक्ष्यमाणप्रसङ्गादेवाह— नन्विति । यत्तु शीरदेवादय —विप्रतिषेधसूत्रस्यैव 'उभयनिर्देशे' इत्यर्थ इति, तन्न, 'ङमो ह्रस्वात्—' इत्यादौ अनिर्वाहात्, तदनुनयन्, तत्रैव तावद्दोषमाह— ङम इति । अच इति । अस्य 'इति' इति शेष । इति वेति । अस्य 'अर्थ' इति शेष । 'ङमो वेति संदेह' इति पाठे तु न किमपि । अत्र बीजमाह—

## उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७२ ॥

अचीति सप्तमीनिर्देशस्य 'मय उञः—' इत्युत्तरत्र चारितार्थ्यात्पञ्चमीनिर्देशोऽनवकाश इति 'तस्मादित्युत्तरस्य' इत्यस्यैव प्रवृत्तिः। यत्र तु 'ङः सि धुट्' इत्यादावुभयोरप्यचारितार्थ्यम्, तत्र 'तस्मिन्—' इतिसूत्रापेक्षया 'तस्मादित्युत्तरस्य' इत्यस्य परत्वात्तेनैव व्यवस्था। एवमुभयोश्चारितार्थ्येऽपि, यथा—'आमि सर्वनाम्नः—' इत्यादौ। तत्र आमीति सप्तमी 'त्रेस्त्रयः' इत्यत्र चरितार्था। आदिति पञ्चमी 'आज्जसेरसुक्' इत्यत्र चरितार्थेति स्पष्टम् 'तस्मिन्—' इति सूत्रे भाष्ये कैयटे च ॥ ७२ ॥

ननु 'अतः कृकमि' इति सत्वमयस्कुम्भीत्यत्र न स्यात्, कुम्भशब्दस्यै-

---

अचीति। एवमुक्ताशयेन आदौ अनवकाशत्वेन बाधमुक्त्वा, परत्वेन बाधमाह— यत्र त्विति। अत एव वैलक्षण्यबोधकस्तु प्रयुक्तः। अपि एवार्थ, अन्वयोऽग्रे मिथ समुच्चयको यथाश्रुत एव वा। तेनैव पाठकृतपरत्वेनैव। एवेन निर्देशान्याङ्क्षति। यद्यं पाठकृतपरत्वेन व्यवस्था। तत्र द्वयोर्मध्ये। यद्यपि श्रौती 'सर्वनाम्न' इति पञ्चम्यनवकाशेति आयतु स्यात्र सुवचम् तथापि तस्य विहितविशेषणत्वेन तस्मादित्यस्य तत्र अप्रवृत्तिरेव। अत एव सर्वनाम्न परस्याम, आमि परे सर्वनाम्नो वेति संदेह, पञ्चम्यनवकाशेति भाष्यैकदेशिन इति बोध्यम्, तदेतद्ध्वनयन् आह— आदिति। 'ततोऽनुवृत्त' इत्यादि। अनन्य तस्व भाष्यप्रकाशे स्पष्टम्। एव च परत्वनिरवकाशत्वकृतबाधद्वयबाधिका इयम्, न तु तथेति भाव तदाह— इति स्पष्टमिति। तथाबोधकमेतद्वचन स्पष्टमित्यर्थः। यथाश्रुते 'यत्र तु' इत्यादेस्तत्र अनुक्तत्वादसगति स्पष्टैव। स्पष्टीकारकत्वात् कैयटस्योक्ति। यत्र तु सप्तमीनिर्देश एव अनवकाश, तत्र तस्यैव प्राबल्यम् यथा— आने मुक्' इत्यादौ। तत्र हि आने इति सप्तम्यनवकाशा। अत इति अनुवृत्तपञ्चमी अतो येय इत्यत्र सावकाशा। 'दीर्घात्' 'पदान्ताद्वा' इत्यादौ तु ज्ञापकादिना कृतार्थाया आपि पूर्वत्र 'च्छे च' इति सप्तम्या प्राबल्यम्, नानवकाशाया अपि पञ्चम्या दीर्घादित्यादिकाया। एवम् 'इकोऽचि—' इत्यत्र अच सर्वनामस्थान इत्यनयोरनुवृत्त्या द्वयोश्चारितार्थ्येऽपि सप्तम्या प्रकल्पनत्वपरभागेऽनुवृत्तिसामर्थ्यादिक इति साहचर्याच्च सप्तम्या प्राबल्य बोध्यम्। एव चेयमनियेति फलितमिति बोध्यम् ॥ ७२ ॥

बोधाज्ञानादत आह—

## प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ ७२ ॥

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम्। अपिना केवलस्यापीत्यर्थः। अस्याश्च ज्ञापकम्— समानाधिकरणाधिकारस्थे 'कुमारः श्रमणादिभिः' इति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः। स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमा-

---

[1] उभयनिर्देशप्रसङ्गादाह— तन्मत इति। इत्यत्र इत्यादौ। कुम्भेति। कुम्भादीत्यर्थः। सामान्येति। अत एव ङ्याप्सूत्रे प्रातिपदिकग्रहणेन ङ्याप्ग्रहणवैयर्थ्यमाशङ्कितं भाष्ये। विशेषेति। अत्र तु ज्ञापकादयस्तुम्भावस्यानया साधनपरभाष्याच्च सिद्धोऽयं। एतेन ज्ञापकादर्शनं प्रवृत्तिर्न तु सामान्य इत्यपास्तम्। यत्तु—'प्रातिपदिकग्रहण' इति बहुव्रीहि। तत्र शास्त्र प्रत्यासत्तिन्यायात् स्त्रीप्रत्ययविधायकमेव गृह्यत इति तन्न तत्रान्येनापि तद्ग्रहणापत्त्या उक्तभाष्यविरोधापत्तेश्च ज्ञापकासंगत्यापत्तेश्च तत्पुरुषस्याऽन्तरङ्गत्वाच्च, तद्ध्वनयन्नाह— प्रातिपदिकबोधकेति। सामानाधिकरण्यमित्याह— सतीति। लिङ्गशब्देन तद्बोधकटाबादयो गृह्यन्ते, अभिधानेऽभिधेयधर्मोपचारात्। तदाह— लिङ्गबोधकेति। प्रत्यासत्तिलभ्यमाह— तेनेति। तथा प्रातिपदिकबोधकशब्देनेत्यर्थः। ग्रहणं बोध्यमिति पाठः। अस्याश्चेति। चस्त्वर्थो ज्ञापकपदोत्तरं योज्यः। यद्यपि 'युवा खलति—' इति सूत्रे जरतीग्रहणं ज्ञापकं भाष्यकारादिभिरुक्तम्, तथापि तन्नैतज्ज्ञापनेऽपि तदवस्थानुपपत्तिक सामानाधिकरण्याय युवत्यां जरताधर्मारोपस्यावश्यकत्वेनोक्तज्ञापकस्यैतत्वात् स्मश्रुप्रभृत्यभावाच्च युनि जरतीत्वारोपेण जरत्यां वा युवत्वारोपेण वा सामानाधिकरण्येन समासोपपत्तौ ज्ञापकत्वासम्भव इति हरदत्तः। अथ युवजरतीत्यत्र समासे तथोपचारिक सामानाधिकरण्य शब्द

रीशब्दस्यैव सामानाधिकरण्यम्, न तु कुमारशब्दस्येति तदेतज्ज्ञापकम्। इयं च 'द्वित्र्योः—' इत्याद्युपपदविधौ, समासान्तविधौ, महदात्वे, त्रिभिस्स्वरविधौ, राज्ञः स्वरे ब्राह्मणकुमारयोः, 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यादौ समाससंघातग्रहणेषु च न प्रवर्तत इति ङयाप्सूत्रे भाष्ये स्पष्टम्। विभक्तिनिमित्तकार्ये च नेत्यपि तत्रैव। तत्र समासान्तविधाववयवग्रहण एव न, समाससंघातग्रहणे तु प्रवर्तत एव, स्वरविधावेव समाससंघातग्रहणे तत्र दोषोक्तेः 'बहुव्रीहेरूधसः' इति सूत्रभाष्याच्च। एतावत्स्वेवानित्यत्वादप्रवृत्तिः, 'दोषाः खल्वपि साकल्येन परिगणिताः' इति भाष्योक्तेः। नन्वेवम् 'बहुव्रीहेरूधसो ङीष्' इति सूत्रस्थभाष्यासंगतिः; तत्र हि कुण्डोध्नीत्यत्र 'नद्यृतश्च' इति कबापादितः, नद्यन्तबहुव्रीहेरित्यर्थात्। नद्यन्तस्य बहुव्रीहित्वाभावात्तदसंगतिः। नद्यन्तानां यः समास इत्यर्थेन च परिहृतम्— नद्यन्तप्रकृतिकसु-

---

भो इत्यर्थः। उपसंहरति— तदेतदिति। स्त्रीलिङ्गप्रथमपादिग्रहणं प्रातिपदिकेतिपरिभाषाज्ञापकमित्यर्थः। अतिप्रसङ्गं निराचष्टे— इयं चेति। 'राज्ञः स्वरे ब्राह्मणकुमारयोः' इत्येकम्। 'अयों ब्राह्मणकुमारयोः' इत्यतस्तदनुवृत्त्या 'राजा च' इति सूत्रे तत्र परतस्तस्य विधीयमानस्वरे इत्यर्थः। 'बहोर्नञ्वदिति। अस्य समासेत्यनेनाभेदान्वयो वेदाः प्रमाणमितिवत्। वक्ष्यमाणाशयेन पृथगाह— विभक्तीति। बहुव्रीहि'। निमित्तनाऽत्र यथान्वयं चित्रेऽन्वेति स्पष्टीकृतं भावप्रकाशे। तत्र तेषां मध्ये। एतद्व्याचष्टेमाह— समासेति। तत्र ङयाप्सूत्रे भाष्ये। ननु स्वरविधौ तथोक्तिरधिकसंग्राहिका, न नियामिका, अत आह— बहुव्रीहेरिति। इदं चानुपदमेव स्फुटीभविष्यति। उपसंहरति— एतावदिति। अनित्यत्वात् षष्ठीग्रहणज्ञापितात्। तत एव भाष्यासिद्धान्तं वक्तुं यथाश्रुतार्थे शङ्कते— नन्वेवमिति। परिभाषया उक्तार्थाङ्गीकार इत्यर्थः। ननु नद्यन्तानुत्तरपदत्वात्कथं तदापादनमत आह— नद्यन्तेति। ल्यब्लोपे पञ्चमी, इत्यर्थमभिप्रेत्येत्यर्थः। असंगतिमुपपादयति— नद्यन्तस्येति। बहुव्रीहित्वस्य सुबन्तसमूहधर्मत्वेनान्यतररूपेण प्रातिपदिकाग्रहणात्परिभाषाप्रवृत्त्यभावेन तस्य तत्त्वाभावादित्यर्थः। बहुव्रीह्यर्थकमान्यत्वाभावाच्चेत्यपि बोध्यम्। ननु पूर्वपक्षिणोऽज्ञानात्तदुक्तिरिति नासंगतिरत आह— नद्यन्तानामिति। समास इति। बहुव्रीहिरित्यर्थः। एवमग्रेऽपि। यश्चेति। यो ब्यु-

यन्तोत्तरपदकः समास इतीति चेत्, न, अनया परिभाषया स्त्रीप्रत्ययसम-भिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्या-प्तत्वमतिदिश्यत इत्याशयात् ॥ ७३ ॥

नन्वेवं यूनः पश्येत्यत्रेव युवतीः पश्येत्यत्रापि 'श्वयुव—' इति संप्र-सारणं स्यादत आह—

**विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७४ ॥**

स्पष्टा चेयम् 'युवोरनाकौ' इत्यत्र भाष्ये। घटघटीग्रहणेन लिङ्गविशिष्ट-परिभाषाया अनित्यत्वात्तन्मूलैवेत्यन्ये ॥ ७४ ॥

---

स्कर्मे, परिहृत चेत्यर्थः । तदाशयमाह— **नद्यन्तस्येति । इतीति ।** अस्य 'तदाशय' इति शेषः । अत एव करभोरूरित्यत्र नित्यः कबेवेति बोध्यम् । एवं च सिद्धान्तिना यदि तथाग्राहित स्यात्, तर्हि तस्याहानकल्पना युक्ता नान्यथेत्यसङ्गतिर्हठेनेवेति भावः । **सम-भिव्याहार इति ।** अस्य 'विशिष्टेऽपि' इत्यत्रान्वयः । **दृष्टानामिति ।** एवं चान्यतर-रूपेण वस्तुतः प्रातिपदिकत्वादिग्रहणे सति तद्विशिष्टस्यापीति परिभाषार्थो बोध्यः । अस्ति च कुण्डोध्नस्यादौ ङीप्प्रकृतौ प्रातिपदिकत्वबहुव्रीहित्वादिकमिति नोक्तदोषः । यदि समासान्तविधौ सर्वत्रैतदप्रवृत्तिः, तर्हि तदसङ्गतिः पुनरपि स्यादेव, अतोऽवयवग्रहण एव तत्राप्रवृत्तिः । तत्र तु समाससङ्घातग्रहणम्, नद्यन्तश्च दन्तश्चोत्तरपदत्वेन पूर्वपदाक्षेपादिति बोध्यम् । **ऐऽर्थीति ।** अपि प्राग्वत् ॥ ७३ ॥

विभक्तिनिमित्तेति पृथक्प्रागुक्ताशयमेव प्रतिपादयितुं यथाश्रुते शङ्कते— **नन्वेव-मिति ।** लक्ष्यविशेषेष्ववानित्यत्वादप्रवृत्तिबोधकपरिभाषाङ्गीकार इत्यर्थः । **युवतीरिति ।** एवमर्थम् 'अन' इत्युभयोः श्वप इति नाश्रयणीयम् । तथा दुराग्रहे तु गोमतीत्यादौ नुमा-द्यापत्तिर्बोध्या । नन्वस्याः किं ज्ञापकमत आह— **स्पष्टेति ।** तथा च सूत्रानारूढत्वेऽपि भाष्याद्युक्तत्वादेव वाचनिकत्वात्प्रमाणमिति भावः । अत एव यथाकथंचिद्वार्तिकारूढत्वं सूचयितुमकस्मादुक्तिमाह— **घटेति ।** 'शक्तिलाङ्गलाङ्कुश—' इति वार्तिके घटग्रहणेनैव सिद्धे घटीग्रहणेनेत्यर्थः । घटघटीत्यत्र घटीग्रहणेनेत्यर्थो वा । **अनित्यत्वात्** तज्ज्ञाप-नात् । **तदिति ।** तन्मूलत्वमित्यर्थः । तथा च नातिरिक्तेयमिति भावः । **अन्य इति ।** अननाहचि सूचिता— 'युवोरनाकौ' इतिसूत्रभाष्यादावस्याः परिभाषात्वेन व्यवहारात्

ननु 'तस्यापत्यम्' इत्येकवचननपुंसकाभ्यां निर्देशात् गार्ग्यो गार्ग्या-वित्याद्ययुक्तमत आह—

## सूत्रे लिङ्गवचनमतन्त्रम् ॥ ७५ ॥

'अर्धं नपुंसकम्' इति नपुंसकग्रहणमस्या ज्ञापकम् । नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम् । धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति 'तस्यापत्यम्' इत्यत्र भाष्ये स्पष्टम् । अत एव आकडारसूत्रे एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७५ ॥

---

'अवश्यमेषा परिभाषानेकफलसिद्ध्यर्थं कार्या' इत्युक्तेश्चास्या पार्थक्यम्, अन्यथा तद्विरोध । स्वाम्सूत्रभाष्ये त्वेतल्लक्ष्यार्थकथनमेव । अत एव 'विभक्तौ चोक्तम् । किमुक्तम् ? विभक्तौ लिङ्गविशिष्टाग्रहणात्' इत्येव तत्रोक्तम् । अन्यथा 'उपपदविधौ भयाढ्यादिग्रहणं तदन्तविधिप्रयोजनम्' इत्यादिवत् 'विभक्तिविधौ च' इत्येव वदेत् । प्रामाण्य तु प्राणुक्तरीत्यैवेति । एव सति यथा चित्रगवीणामित्याद्यावदोष , तथा भाष्यप्रकाशे स्पष्टम् ॥ ७४ ॥

लिङ्गप्रसङ्गादेवाह— नन्विति । तस्येति । इतिसूत्रे अपत्यमित्येकेरयर्थ । वचनस्य शास्त्रीयत्वेनाभ्यर्हितत्वात्पूर्वनिपात । तस्येत्यत्र तु न, उत्तरापत्यमर्ने असति गम्के सत्याभानाभावात् । अत एव द्वन्द्वनिर्देश । अत एव चाह— गार्ग्यावित्यादि । अन्यथा तदपि प्रदर्शित स्यात् । यत्तु व्याख्यानमूलिकैवेति, तन्नेति ध्वनयन्नाह— अर्धमिति । निर्देशादेव नपुंसकत्वलाभे पुनर्नपुंसकग्रहणवैयर्थ्यादिति भाव । ननु समासवाचिनित्यनपुंसकलाभार्थं तदिति दीक्षितादिभिरुक्तमत आह— नित्येति । बहुव्रीहि । नित्यनपुंसकत्वग्रहणार्थमित्यर्थ । न तदिति । 'एओङ्' 'ऐऔच्' 'एच इक्—' इतिसूत्रेषु भाष्ये ह्रस्वशासनेनार्धैकारार्धौकारयोर्विधानमाशङ्क्य 'न वेदे नैव लोकेऽर्ध एकारोऽर्ध ओकारो वास्ति' इतिसमाधानपरभाष्ये अर्धं इति प्रयोगात्समासवाचिनोऽपि नित्यनपुंसकत्वाभावात् । अवयववाची तु पुल्लिङ्ग एव । अपूपार्धं ग्रामार्धमित्यादावपि समप्रविभाग एवेति बोध्यम् । तदाह— अन्यत्रेति । शेखरादावित्यर्थ । भाष्ये तु युक्तिसिद्धत्वमस्या उक्तमित्याह— धान्येति । 'कश्चिदन्नार्थी शालिकलाप सतुष सपलालमाहरति तावन्नान्तरीयकत्वात्, तत स यावदादेय तावदादाय तुषपलालान्युत्सृजति' इति भाष्यम् । नन्वाद्यमते लिङ्गांशे अविवक्षालाभेऽपि वचनांशे तदलाभ , अत सिंहावलोकनन्यायेनाह— ---

ननु 'भृशादिभ्यो भुव्यच्वेः—' इत्यादौ विधीयमानः क्यङ् 'क्व दिवा भृशा भवन्ति' इत्यत्रापि स्यादत आह—

**नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७६ ॥**

नञ्युक्तमिवयुक्तं च यत्किंचिद्दृश्यते, तत्र तस्माद्भिन्ने तत्सदृशेऽधिकरणे द्रव्ये कार्यं विज्ञायते, हि यतः तथा अर्थगतिरस्ति । न हि 'अब्राह्मणमानय' इत्युक्ते लोष्टमानीय कृती भवति । अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशेऽभूततद्भावविषये क्यङ् इति नोक्तदोषः । 'ओषधेश्च विभक्तावप्रथमा-

---

येति । तथार्थाप्रतीतागदेवेत्यर्थः । नन्वेवम् 'षड्भ्यो लुक्' इति गौणे स्यात्, 'शौङे' 'सुद्भ्य' इत्यत्र गणग्रहणं च न स्यादिति चेन्, न एकवचन एव कार्ये तत्सामर्थ्यादिष्ट-सिद्धेर्गणपाठसामर्थ्याच्च । 'आहुण' इत्यादौ यथैकत्वविवक्षा, तथान्यत्र स्पष्टम् । 'भृशादिभ्य—' इत्यादौ तु बहुवचनमप्यतन्त्रमिति दिक्, तदाह— इत्यग्रेति । शेखरादावित्यर्थः ॥ ७५ ॥

वचनलक्ष्यान्तर्गतभृशादिसूत्रप्रसङ्गादेवाह— ननु भृशेति । विधीयेति । 'अभृशो भृशो भवति भृशायते इत्यादौ' इति शेषः । क्व दिवेति । ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः । यत्तु—सारदेवादय — 'अन्यत्' इति सप्तमीविभक्तिप्रतिरूपक-निपातपाठं नपुंसकप्रथमान्तपाठं वाभिप्रेत्य व्याचख्युः — 'नञिवयुक्तं पदम् अन्यत् अन्यस्मिन् सदृशेऽधिकरणे वर्तते । यद्वा नञिवयुक्तं पदं सदृशाधिकरणे वर्तते कुतः ? यस्मात् अन्यत् शब्दरूपम् हेतुगर्भविशेषणम्, मुख्यार्थवाचिशब्दरूपादन्यदित्यर्थः ' इति, तन्न, तथापाठाभावात् तथाहीतिवाक्यशेषविरोधाच्च, तदुनयन् शेषपूरणेन वाक्यत्रयेण व्याचष्टे— नञ्युक्तमिति । 'यत्र' इत्यादि । यत्किञ्चिदिति । अनेन वाक्ये क्वचित्तत्सापेक्षतेति सूचितम् । तथार्थेति । तादृश एवार्थः प्रतीयत इत्यर्थः । 'लोके' इति शेषः । तदेवाह— न हीति । तथा च लोकन्यायसिद्धेयमिति भावः । लोष्टं मृत्पिण्डम् । उक्तातिप्रसङ्गं वारयति— अत इति । परिभाषाङ्गीकारादित्यर्थः । सादृश्य-प्रयोजकधर्ममाह— अभूतेति । नन्वेवम् 'ओषधेश्च—' इत्यादौ विभक्तिग्रहणमानर्थ-क्यापत्तिरत आह— ओषधेश्चेति । आदिम्याम् 'अनन्तरे च—' इत्यादौ कारकग्रहण-

याम्' इत्यादौ विभक्तिग्रहणं ह्येतन्न्यायसिद्धार्थानुवाद एव । एतेन विभक्त्यादि अस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ताः, अनित्यत्वे भाष्यसंमतफलाभावात् । अत एव 'अकर्तरि च—' इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम् । स्पष्टा चेयम् 'भृशादिभ्यः—' इति सूत्रे भाष्ये । अत्रान्यसदृशैरित्युक्त्या सादृश्यस्य भेदाघटितत्वं सूचयति । निरूपितं चैतन्मञ्जूषायाम् ॥ ७६ ॥

ननु व्याघ्री कच्छपीत्यादौ सुबन्तेन समासात् ततोऽप्यन्तरङ्गत्वाट्टापि अदन्तत्वाभावाज्जातिलक्षणो ङीप् न स्यादत आह—

**गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ ७७ ॥**

---

सङ्ग्रहः । यत्तु सीरदेवादयः—'अनित्या चेयं विभक्त्यादिग्रहणात्, तेनासूर्यंपश्या इत्यादौ प्रसज्यप्रतिषेधः सिद्धः' इति, तन्मतं खण्डयति—**एतेनेति** । एतेनेत्यस्यार्थमाह—**अनित्यत्व इति** । फलस्योक्तत्वादाह—**भाष्येति** । अभिधानस्वाभाव्यादेव तत्र तथार्थबोधस्य सिद्धत्वाज्ज्ञापकानपेक्षत्वात् । अत एव प्रतीत्यैव परिभाषार्थं साधितं, तदर्थं साधुत्वं तु ज्ञापकेन साधितमेव भगवतेति भावः । नन्वेवमपि विनिगमनाविरहाद् नित्यत्वसिद्धार्थानुवाद एवास्तां भवन्मत इव अत आह—**अत एवेति** । तदनभिमतत्वादेवेत्यर्थः, अन्यथा प्रत्याख्यानासङ्गतिः स्पष्टैवेति भावः । अत्र परिभाषायाम् । सादृश्यं साधारणधर्मसम्बन्धप्रयोज्यं सदृशादिपदशक्यतावच्छेदकतया सिद्धं सदृशदर्शने संस्कारोद्बोधस्य सर्वसंमतत्वेन तत्कारणतावच्छेदकतया च सिद्धमखण्डमतिरिक्तं पदार्थः । इवयुक्तोदाहरणम्—'इवे प्रतिकृतौ' इत्यधिकारे 'शाखादिभ्यो यः' इति ये सोम्य इत्यादि । तत्र सोमसदृशास्तद्भिन्नं प्रतीयत इत्यादि मञ्जूषायां प्रतिपादितम्, तदाह—**निरूपितमिति** । 'उपपदमतिङ्' इत्याद्यन्याद्योदाहरणं बोध्यम् ॥ ७६ ॥

वृत्तिप्रसङ्गात् समासप्रसङ्गात् उदाहरणान्तर्गतोपपदमितिप्रसङ्गाच्चाह— **नन्विति** । आदिना अश्वक्रीतीत्यस्य परिग्रहः । **ततोऽपि सुपोऽपि** । स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादाह— **प्यन्तेति** । पूर्वस्थितनिमित्तकत्वरूपादित्यर्थः । **कृद्भिः**, तैरेव सह । एवकारार्थं ध्वनयन्नाह— **प्रागिति** । उत्तरपदे सुबुत्पत्तेः प्रागित्यर्थः । अत एव चर्मक्री-

'उपपदम्—' इति सूत्रे अतिङ्ग्रहणेन, 'कुगति—' इत्यत्र तदपकर्षणेन, 'अतिङन्तश्च समासः' इत्यर्थोक्तयोः सूत्रयोः सुप्सुपेत्यस्य निवृत्त्या एकदेशानुमत्या कारकांशे च सिद्धेयम्। तेनाश्वक्रीती सिद्धा। अन्यथा पूर्वं टाप्यदन्तत्वाभावात् 'क्रीतात्करणपूर्वात्' इति ङीप् न स्यात्। अस्या अनित्यत्वात्क्वचित्सुबुत्पत्त्यनन्तरमपि समासः, यथा—'सा हि तस्य धनक्रीता' इति। अन्ये त्वनित्यत्वे न मानं तत्राजादित्वाट्टाबित्याहुः। अत एव

---

तीत्यादौ नलोपादिसिद्धिः। इदमुपलक्षणम्—उक्तहेतोरेव प्राक्स्त्रीप्रत्ययोत्पत्तेरित्यपि बोध्यम्। अन्यथा फलाभावाज्ज्ञापकत्वासङ्गति स्पष्टैवेति बोध्यम्। अत्र बीजमाह— उपेति। कुगतीति। 'गतिश्च' इति विभक्तसूत्र इत्यर्थः। अतिङिति बहुव्रीहिः, प्रथमान्तत्वात्तस्य एव तेन विशेष्य, तदभिप्रेत्योभयत्रार्थमाह— अतिङिति। 'सुपेत्यस्य निवृत्त्या' इति पाठः। 'सुप्सुपेत्यस्य' इति पाठे समुदायनिवृत्तौ तात्पर्यम्, न तु केवलसुबित्यस्य, तस्यानुवर्तत एव उक्तहेतोरिति बोध्यमिति कैयटादयः। वस्तुतस्तूपपदमित्यन्वर्थसंज्ञया सुबन्तस्यैव पदत्वेनोपपदत्वाद्गते सुबन्तत्वाच्च राजयुध्वेत्यादौ पूर्वपदे नलोपादिपदकार्यसिद्धेः, तिङ्घटित इति समासविशेषणेन कारको व्रजतीत्यादिव्यावृत्तिसिद्धेश्च प्रथमान्त सुबनुवृत्तेरपि फलाभाव इति कैयटादयश्चिन्त्या एवेति यथाश्रुतमेव युक्तमिति बोध्यम्। नन्वेवमुभयांशसिद्धावपि कारकांशासिद्धिः, न च 'कर्तृकरणे—' इति कृद्ग्रहणात्तत्सिद्धिरिति कैयटाद्युक्तं युक्तम्, तस्य क्वचित् पचतितरामित्यादिव्यावृत्त्या साफल्यात्। नापि बहुलग्रहणं तत्र मानम्, तस्यान्यार्थत्वात्। अत एव धनक्रीतेत्यस्य सिद्धिरत आह— एकदेशेति। एकदेशानुमतिद्वारा विशिष्टपरिभाषाबोधनेन कारकांशे चेत्यर्थः। येनोभयांशसुखम्। गत्युपपदयोर्लक्ष्ययोरुक्तत्वादाह— तेनाश्वेति। अन्यथा गतदन्तक्रीतादौ, अस्या अनित्यत्वादिति। 'अम्नाम्य—' इति सूत्रे गवादिग्रहणात्, अन्यथा गोष्ठ इत्यादौ 'सुपि स्थ' इति के अनया सुबुत्पत्तेः पूर्वं समासे 'सात्पदाद्योः' इति निषेधप्राप्तौ 'आदेशप्रत्यययोः' इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। तत्र हि स्थ इति प्रतिपदोक्तपरिभाषया 'सुपि स्थ' इति विहितकप्रत्ययान्तानुकरणं षष्ठ्यर्थे प्रथमेति भावः। न मानमिति। पदस्य आदिरिति पक्षे तस्य तत्त्वासम्भवेऽपि पदादादिरिति सिद्धान्तपक्षे तस्य तत्त्वासम्भवादिति भावः। तत्र धनक्रीतेत्यत्र। अत्रान्ये इत्यनेनारुचिः सूचिता, तद्बीजं तु—'ददन्त' इति समासमात्रपक्षे गोचेत्यादेरेतदनित्यत्वं विना न सिद्धिरितीति केचित्। पद इत्यत्र पदस्वयोग्यपात्रलक्षणत्वेन नानित्यत्वज्ञापकमेतदिति परे। कारकांशे इत्यत्र— अत एवेति। कारकाद्विवक्षा अश्वक्रीतादेरेवेत्यर्थः। 'पूर्वमेव' इत्यत्रान्वयः।

कुम्भकार इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव । षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमिति 'उपपदम्—' इति सूत्रे भाष्ये स्पष्टम्, तत्र हि 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेन' इति वार्तिकम्, 'अथवा विभाषा षष्ठीसमासः, यदा न षष्ठीसमासस्तदोपपदसमासः' इति तत्प्रत्याख्यानं च । यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकम् 'न वा षष्ठीसमासाभावादुपपदसमासः' इति वार्तिककृतोक्तम्; तथापि तदुभयप्रत्याख्यानपरम् 'अथ वा' इत्यादि भाष्यम् । परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन प्रकृतिः समासमात्रस्य सुबु-

---

**षष्ठीति** । कृद्योगलक्षणा हि षष्ठीति तस्यास्तत्र कारकत्वादिति भावः । अपितरपदसमाससमुच्चायकः । ननु न तत्र षष्ठीसमासः, उपपदसमासेन बाधितत्वात् । नापि तत्र तत्परिभाषाप्रवृत्तिः, प्रतिपदोक्तपरिभाषया कारकाधिकारविहितसंज्ञामात्रनिमित्तकविभक्तस्य तस्य ग्रहणं एवैतत्प्रवृत्त्यङ्गीकारात् अत आह— **षष्ठीति** । **एकार्थीभाव इति** । तथा चाविग्रहत्वेन नित्यसमासत्वलाभात्षष्ठीसमासेऽपि 'अन्तोदात्तादुत्तरपदात्—' इत्यस्याप्रवृत्त्या न षष्ठ्युपपदसमासयोरत्र विशेष इति स एवास्त्विति भावः । तदेतदुपपादयति— **तत्र हीति** । **तदोपपदसमास इति** । 'उपपदम्—' इति सूत्रविहितसमाससंज्ञा तत्पुरुषसंज्ञा च स्यातामित्यर्थः । 'विप्रतिषेधे परम्—' इत्यस्य तु न प्रवृत्तिः, युगपदुभयविहितसमाससंज्ञात्पुरुषसंज्ञयोः प्रवृत्तिसम्भवेनासम्भवरूपविप्रतिषेधाभावात् । अन्यादृशविरोधस्य तत्प्रवृत्तिनिमित्तत्वे न मानमिति तत्तात्पर्यम् । न च नित्यत्वानित्यत्वज्ञानकृतविरोध वैयधिकरण्येनोक्त एवेति वाच्यम्, बाधे बाधज्ञानस्याप्रतिबन्धकत्वात् । एवं च षष्ठीसमासोऽपि नित्य एवैतद्विषये फलितः, तद्बोधिताभावांशस्यैतद्विरोधेनैतद्विषये त्यागात् 'नित्यं क्रीडा—' इत्यादिविषये तस्य वस्तुभवाध्यत्वादिति भावः । **अन्तरङ्गत्वेति** । 'षष्ठी' इतिसूत्रे सुपेति तृतीयान्तस्य सम्बन्धात्तत्र तदभावादिति भावः । अत एव मातुः स्मरतीत्यादौ न षष्ठीसमासः, अत एव च षष्ठ्यन्तस्यानेकसुबन्तेन न समास इति बोध्यम् । **उक्तमिति** । 'पूर्ववार्तिकखण्डनाय तयोर्मध्ये' इति शेषः । **तदुभयेति** । पूर्वपक्षसिद्धान्तरूपवार्तिकद्वयेत्यर्थः । **भाष्यमिति** । न वार्तिकमिति भावः । ननूक्तरीत्या विप्रतिषेधासम्भवात्तत्प्रत्याख्यानेऽप्यन्तरङ्गत्वस्योपपादितत्वात्कथं तत्प्रत्याख्यानमिति प्रतिज्ञातार्थासिद्धिरेवात आह— **परीति** । 'प्रकृत' इत्यादि । इदमुपलक्षणम्—गतिकारकोपपदादित्यस्यापि । **कारकोपेति** । 'वस्तुन' इत्यादि । कारकपदोपेत्यर्थो वा ।

त्पत्तेः पूर्वमेव लाभात् । एतेनैषा कारकतद्विशेषयोरुपादान एवेति परास्तम्, अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत्कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थालाभाच्च ॥ ७७ ॥

ननु 'उगिदचाम्—' इत्यत्र धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमेन अधातोरेव नुमि सिद्धे अधातुग्रहणं व्यर्थमत आह—

सांप्रतिकाभावे भूतपूर्वगतिः ॥ ७८ ॥

तत्तद्वचनसामर्थ्यन्यायसिद्धेयम् । तत्सामर्थ्यादधातुभूतपूर्वस्यापीत्यर्थेन गोमत्यतेः क्विपि गोमानित्यादौ नुम्सिद्धिः । 'नामि' इत्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७८ ॥

---

प्रातिपदिकपरिभाषा तु न प्रवर्तते, तस्या अनित्यत्वात् स्वरसतस्तया तदर्थालाभाच्च । कारकेति । तेन सह तन्मात्रस्य ततः पूर्वमेव तैः सह लाभादित्यर्थः । मात्रस्येति । मात्रं कार्त्स्न्ये । तथा च पर्गीसमासोऽपि तदेवान्तरङ्गत्वमेव तस्य नास्तीति प्रागुक्तार्थ सर्वसिद्धेरिति भावः । एतेनैषेति । तदर्थकालेनेत्यर्थः । कारकेति । तन्मात्रयोरित्यर्थः । दूषणान्तरमाह—अस्या इति । विरोधाद्यभावादिति भावः । ननु 'प्रातिपदिकग्रहणे—' इत्यतो ग्रहणपदानुवृत्तिं कृत्वा, आकाङ्क्षाबोधकत्वमस्त्येव, अत आह—विधीति ॥ ७७ ॥

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७९ ॥

अपिना अतद्गुणसंविज्ञानम् । तेषां गुणानाम् अवयवपदार्थानां संविज्ञानं विशेष्यान्वयिना अन्वयित्वमिति तदर्थः । यत्र समवायसंबन्धेन सम्बन्धी अन्यपदार्थः, तत्र प्रायस्तद्गुणसंविज्ञानम् । अन्यत्र प्रायोऽन्यत् । लम्बकर्णचित्रगू उदाहरणे । 'सर्वादीनि—' 'अक्षित्याद्यः—' इति चोदाहरणे । सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टा ॥ ७९ ॥

ननु 'वदः सुपि क्यप् च' इति चेनानुकृष्टस्य यतः 'भुवो भावे' इत्यत्राप्यनुवृत्तिः स्यादत आह—

---

सिद्धिरमानामित्यादौ । तिस्रादौ तु न सावकाशत्वम् षट्चतुरिति श्रीरित्यनुवृत्त्या च सिद्धे । नापि नृशब्द ,नैकमिति न्यायात् अन्यथा नृनयाप इत्येव वददित्युक्त्वा उत्तरार्थं तथा निर्देश इत्युक्तम् ॥ ७८ ॥

'उगित्—' इत्यत्र बहुव्रीहि' गामानत्यस्य च 'मत्वर्थं बहुव्रीहि' इति सिद्धान्तेन प्रसङ्गादाह— बहुव्रीहाविति । षष्ठीसमासात कर्मधारयस्य लघुत्वादाह— तेषामिति । एतेन नैर्देवादिव्याख्यानम् गुणानां विशेषणानाम् । अत एवाह— अवयवेति । एतेन नैर्देवादिव्याख्यानम् पास्तं बोध्यम् । 'विशेष्यान्वयिनाऽन्वयित्वम्' इति पाठः । विशेष्यान्वयित्वम्' इति पाठे तु मुख्यविशेष्य वाक्यार्थरूप ग्राह्यम् । तदर्थ उक्तवचनैकदेशार्थ । एवं योगार्थमुक्त्वा अविरोधाय द्रुया बाहुल्येन विविक्तविषय आह— यत्रेति । यद्यपि कैयटादिभिरत्र संयोगोऽपि निवेशित , तथापि तस्यासम्बन्धत्वाल्लाघवाच्चाह— समवायेति । लम्बकर्णं भोजयेत्यादौ व्यभिचारादाह— प्राय इति । अन्यत्र समवायान्यसम्बन्धेन सम्बन्धिन्यन्यपदार्थ । अस्यापि रक्तदण्ड आनीयतामित्यादौ व्यभिचारादाह— प्राय इति । अन्यत् अतद्गुणसंविज्ञानम् । तथा चायमपि सम्भवाभिप्रायक बोध्यम् । कर्मस्य वाच्यत्वाल्लम्बकर्णस्य पूर्वनिपात । लौकिके त उक्त्वा शास्त्रीय आह— सर्वादीति । तथा च लोकन्यायसिद्धयम् । गमकमप्यत्र यथाक्रमम् आद्यमुभग इत्यत्रान्विति, 'आम्प्रत्ययवत्' इति च, अन्यथाच्व्यर्थ इत्यनेन विभिन्नानामेव ग्रहणादामन्तस्यैव ग्रहणाच्च तदसंगात स्पष्टैव ॥ ७९ ॥

*समुच्चयार्थकापिप्रसङ्गादाह— नन्विति । यत 'अचो यत्' इति सूत्रस्थस्य

## चानुकृष्टं नोत्तरत्र ॥ ८० ॥

णमुलयनुवर्तमाने 'अव्ययेऽयथाभिप्रेत—' इति सूत्रे पुनर्णमुलग्रहणमस्या ज्ञापकम्; अन्यथा 'क्त्वा च' इति वदेत् । तद्युत्तरत्रोभयोः संबन्धार्थम् । उदाहरणानि स्फुटानि । इदमनित्यम्; अत एव 'तृतीया च होः—' इत्यत्र चानुकृष्टाया अपि द्वितीयायाः 'अन्तरान्तरेण—' इत्यत्र संबन्धः । 'लुटि च क्लृपः' इति सूत्रस्थेनानुवृत्त्यर्थसकलचकारप्रत्याख्यानेन विरुद्धेयम् । व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः । 'कुलिजाल्लुक्खौ च' इतिसूत्रस्थभाष्यविरुद्धा च । तत्र हि 'द्विगोः ष्ठंश्च' इति सूत्रात् ष्ठनः, तत्र चेनाप्यनुकृष्टस्य 'खोऽन्यतरस्याम्' इत्यस्य चानुवृत्तिं स्वीकृत्य 'लुक्खौ च' इति भाष्ये प्रत्याख्यातम् ॥ ८० ॥

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते, तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह—

स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ८१ ॥

स्वरोद्देश्यके विधावित्यर्थः । 'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' इति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः; अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम् । अत एव 'शतुरनुमो नद्यजादी' 'अचः कर्तृयकि' इत्यादौ 'अजादी' 'अचः' इत्यादेश्चारितार्थ्यम् । अत

---

तद्वर्जितपाठे तु पूर्वोऽपि न दोषः । 'आमि सर्वनाम्नः—' इति सूत्रे भाष्ये प्रकृते 'कि-मेत्—' इत्यामोऽग्रहणमुक्त्वा, ग्रहणेऽपि न दोष इति पक्षान्तरे पचतितरामित्यादौ परत्वात्प्राप्तस्य सुटोऽभावाय 'ह्रस्वनद्यापः—' इत्यत्र 'नस्य' 'लोपः' इत्यनयोरिव 'तद्धिते' इत्यस्याप्यनुवृत्तिः कृतेति बोध्यम् ॥ ८० ॥

बहुव्रीहिप्रसङ्गात् 'अनुदात्तादेश्च' इति चप्रसङ्गादाह— नन्विति । यत्तु सीरदेवादयः—स्वरविधाविषयस्य स्वरकर्मकविधावित्यर्थः । तेन कर्तव्यमित्यादौ तकारादेरविद्यमानत्वादकारादेराद्युदात्तादयो भवन्ति । ज्ञापकं चात्र— 'बिल्वादिभ्योऽण्' इति सूत्रम् । तद्धि 'अनुदात्तादेश्च' इत्यस्य बाधनार्थम्; अन्यथा तेषामनुदात्तादित्वाभावादञोऽप्राप्त्या सामान्यसूत्रेणाणः सिद्धया किं तेनेति । 'ह्रस्वप्राप्तौ—' इति तु नैवोक्तवन्तः; तन्न, धर्मिग्राहकमानात्तदलाभेन मिथोविरोधात् अन्यार्थत्वभिन्नफलकज्ञापकपरिभाषाद्वयस्य 'समासस्य—' इति सूत्रे भाष्ये कण्ठत उक्तत्वाच्च; तदनुयन्नाह— स्वरोद्देश्यक इति । अन्यथा, अस्या अभावे । अप्राप्तौ निषेधाप्राप्तौ । तथा च 'देवताद्वन्द्वे च' इति पूर्वसूत्रेण पूर्वोत्तरपदयोरपि प्रकृतिस्वरः सिद्ध इति भावः । नन्वेवं परिभाषायास्तद्वैयर्थ्यं स्यादिति भ्रमं आह— धर्मीति । उक्तपर्युदासरूपादित्यर्थः । 'नोत्तरपदे' इत्यस्य स्वरनिषेधविधित्वेन स्वरकर्मकविधित्वाभावादिति भावः । इदं वचनम् । सीरदेवाद्युक्तदोषान्तरं सूचयितुमुक्तार्थं द्रढयति— अत एवेति । एवमर्थंटीकारादेवेत्यर्थः । इत्यादिभ्यावृत्त्यर्थं हि तत्राजादिग्रहणम् । यदि स्वरकर्मकविधौ तथा स्यात्तदा व्यावर्त्याभावेन तदानर्थक्यं स्पष्टमेव । 'बिल्वादिभ्योऽण्' इति सूत्रमप्येवमेव सङ्गमिति भावः ।

एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्ववीशब्दत्वात् 'अन्तोऽवत्याः' इति स्वरो न ; उदश्वित्वानित्यत्र 'ह्रस्वनुड्भ्याम्—' इति मतुबुदात्तत्वं नेत्याकरः। स्पष्टं चेदम् 'समासस्य' इति सूत्रे भाष्ये। 'उच्चैरुदात्तः' इति सूत्रे कैयटस्तु— इयमनावश्यकी समभिव्याहृताजुपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्तेरित्याह। तत्र भाष्येऽपि ध्वनितमेतत् ॥ ८१ ॥

नन्वेवमपि राजदृषदित्यादौ 'समासस्य' इत्यन्तोदात्तत्वं षकाराकारस्य न स्यादत आह—

हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८२ ॥

अस्याश्च 'यतोऽनावः' इति सूत्रे नौप्रतिषेधो ज्ञापकः। नाव्यमित्यत्र आदिर्नकारो न स्वरयोग्यः; यश्चाकारस्तद्योग्यः, नासावादिरिति स प्रतिषेधोऽनर्थकः। न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्त्विति वाच्यम्, तथा सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेना-

---

एवमुक्तार्थस्य सूत्रारूढत्वमुक्त्वा, भाष्यारूढत्वं ध्वनयन्प्राचीवदाह— **अत एवेति**। प्राचीवत् 'आकरः' इत्यत्रान्वयः। तस्य च 'संगच्छते' इति शेषः। कैयटादिसंमत्याय तथोक्तम्। **शब्दत्वादिति**। हेतुः स्वराभावे। 'उदात्तत्वं न' इति निषधः पाठः, नमृद्धयोक्तेः। अत एवेत्यग्रे योजने, नाद्यमे योजने वास्तु तथा, तथार्थे स्वेनदसंगतिः स्पष्टैव। **कैयटस्त्वित्यादि**। अस्य 'आह' इत्यत्रान्वयः। **समभीति**। समभिव्याहारश्च पूर्वेणोत्तरेण वा। **तदुपपत्तेति**। हलादेर्हलन्तात्तत्प्रत्ययोपपत्तेरित्यर्थः। अत्र निर्मूलत्वं निराचष्टे— **तत्रेति**। 'उच्चैरुदात्तः' इत्यत्रेत्यर्थः। यथा चैतत्तथा स्पष्टमन्यत्र ॥ ८१ ॥

**एवमपि** उक्तपरिभाषया 'अनुदात्तादेः' इत्यादौ निर्वाहेऽपि। **न स्यादिति**। तस्यान्तत्वाभावात्; तथा च तकारस्य लकारो वक्ष्यमाणरीत्या स्यादिति भावः। **अस्याश्चेति**। चस्त्वर्थे। तत्त्वमुपपादयति— **नाव्यमिति**। 'अन्यथा' इत्यादिः। **आदिरेवेति**। एवेनाऽन्याव्रृत्तिः। **विशिष्टान्तरेति**। लृकारेत्यर्थः। **अस्तु स्यात्**, तदानर्थक्यात्; एवं च तद्वारणार्थं प्रतिषेधस्यावश्यकत्वेन ज्ञापकत्वासंभव इति भावः। **निमित्ते-**

युदात्तत्वाप्राप्तेरित्यन्यत्र विस्तरः । स्पष्टा चेयम् 'समासस्य' इति सूत्रे भाष्ये ॥ ८२ ॥

ननु "पूरणगुण—' इति निषेधस्तव्यत्यपि स्यात्, 'दिव औत्' इत्यौत्व दिवेः क्विप्यपि स्यात्, तथा 'यतोऽनावः' इति स्वरो ण्यत्यपि स्यात्, 'ऋदृशोऽङि गुणः' इति चङ्यपि स्यात्, अत आह—

**निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८३ ॥**

**तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८४ ॥**

'वामदेवाड्ड्यड्ड्यौ' इति सूत्रे ड्यड्ड्यतोर्ड्डित्त्वमनयोर्ज्ञापकम् । तद्धि 'ययतोश्चातदर्थे' इत्यत्र तयोरग्रहणार्थम् । नञः परस्य ययदन्तस्यो-

---

ति । 'आद्युदात्तस्वर' इत्यादि । दात्तत्वाप्राप्तेरिति । तस्यैवाप्राप्तेरित्यर्थ एव च प्रतिषेधोऽनर्थक सन् ज्ञापक एवेति भाव । न च हल स्वरप्राप्त्यभावादेवायुक्तेयम् उञ्छ्यमानोऽनुदात्त स चाच स्थान इत्याद्यर्थादिति वाच्यम्, षष्ठ्यन्तस्याच इत्यस्यानुवृत्त्योदात्तादिपदानामधु सङ्केतादादिरुदात्तादिगुणक स्यादित्याद्यर्थ तत्तदन्त स्तम कश्चिदच्स्यादिति हल स्वरप्राप्तिसम्भवात् तदाह— **इत्यन्यत्रेति** । भाष्यादा विस्तरः स्पष्टेत्यर्थ । **चेयमिति** । इयमपीत्यर्थ । चेन पूर्वस्या समुच्चय । अत एव तत्र तथा नोक्तम् । तत्र हि 'व्यञ्जनान्तेषूपसङ्ख्यानम्' इतिवार्तिकप्रत्याख्यानाय परिभाषाद्वय मुक्तम् ॥ ८२ ॥

स्वरप्रसङ्गादेवाह— **नन्विति** । अत एव तृतीयोक्ति । 'तव्यत्यपि स्यात्' इति पाठ, स्वर्तव्यमित्यादौ । अपयस्तव्यप्रातिपदिकादिसमुदायत्वा । **क्विप्यपि** अक्ष-द्यूरित्यादौ । अत्र पदावधिकेऽन्वाख्याने अपरनिमित्तकत्वेन 'वेरपृक्तस्य' इति लोपे सेदुष इत्यत्रोक्तप्रकारो बोध्य । एकदेशविकृतन्यायो वा । यत्तु— अघातोरित्यनुवृत्त्या सिद्धेर्नेद प्रयोजनमिति भ्रान्त तन्न, तस्या भाष्य एव दूषितत्वात् । अत्राद्यद्वयमाद्यपरिभाषा-विषय । अपरद्वयमन्त्यपरिभाषाविषय । मात्रक्रममुल्लङ्घ्य परिभाषाक्रमेणाह— **ड्येति** । **तयो** ड्यड्ड्यतो । अनयोरिति पाठेऽप्येवम् । **नञ इति** । 'गुणप्रतिषेधविषयात्'

त्तरपदस्यान्त उदात्त इति तदर्थः । एवं चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति । तन्मात्रानुबन्धकग्रहणे न चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्यार्थः । एते च प्रत्ययाप्रत्ययसाधारणे, 'दिव औत्' इत्यादौ संचारितत्वात् । वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टम् 'औङ आपः' इत्यत्र भाष्ये । येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा, तदनुसारेण एवैषा, धर्मिग्राहकमानात् । तेन 'जश्शसोः—' इत्यत्र नैषेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम् । एवमन्त्या अन्यतरानुबन्धोच्चारण

---

इत्यादि' । अनुवृत्तिलभ्यमिदं सर्वम् । 'पदस्यान्त उदात्त' इति पाठः । तदर्थं यथतोरितिसूत्रार्थः । एवं च तयोस्तत्राभ्यामग्रहणे च । अव्ययेति । 'तत्पुरुषे तुल्यार्थ—' इतीति भावः । स्पष्टत्वादाद्यार्थमुपेक्ष्यान्यार्थमाह— **तन्मात्रेति** । सर्वं वाक्यं सावधारणमिति न्यायेनेति भावः । न स एवानुबन्धो यस्येति वाक्यार्थः । तत्फलितमाह— **स चेति** । न्यासकाराद्युक्तधर्मिग्राहकमानलभ्यार्थनिरासायाह— **एते चेति** । **दिव इति** । अत एवावतरणे एतदुक्तम् । अत एव ओकारस्य णित्वं सफलमिति भावः । एतेन आद्ये तथा सत्त्वेऽपि द्वितीये न फलमित्यपास्तम् । अतिप्रसङ्गं निराचष्टे— **वर्णेति** । **औङ इति** । ङकाराभावे आबया ग्रामदोषवारणाय तथोक्तं कष्टत इति भावः । धर्मिग्राहकमानसिद्धमेवेदमिति तदाकूतम् । तदेतद्ध्वनयन्नाह— **येनेति** । आद्ये उक्त्वा द्वितीये आह— **द्व्यनुबन्धकेति** । 'ह्रस्वनुड्भ्याम्—' इत्यत्र ड्मतुपोऽग्रहणात्संग्रहायाह— **त्वादीति** । वाशब्द समुच्चये । अत एवैषेत्येकवचनं जातौ । प्रत्येकान्वये तु यथाश्रुतमेव सर्वं युक्तम् । **धर्मीति** । ज्ञापनतोऽतिरणादित्यर्थः । आद्यस्य फलमाह— **तेनेति** । उक्तार्थाङ्गीकारेणेत्यर्थः । 'नैषा' इत्यस्यान्वयः । नाशेति तदर्थः । इति 'न शङ्क्यम्' इत्यत्र हेतुत्वेनान्वेति । तदेवाह— **निरेति** । अत्र जश्शसोः शिरित्यत्र । एवं धर्मिग्राहकमानादेव । **अन्यतरेति** । इदं द्व्यनुबन्धोच्चारणस्याप्युपलक्षणम् । अत एव फलोक्तिसंगतिः । 'ह्रस्वनिपङ्गनिषो' इति पाठः । तयोरपीत्यर्थः । अन्यथा द्व्यनुबन्धकत्वाद्धनिप एव ग्रहणं स्यान्न ङ्वनिबादेः । ध्वनितमिदं मतुवसोरित्यन्त्येन 'वन उपसंख्यानं प्रातरित्वः' इति भाष्येणापि । अन्यथा 'वनः' इत्युक्त्वा प्रातरित्व इति 'अन्येभ्योऽपि—' इति क्वनिबन्तोदाहरणदानासंगतिः स्पष्टैव । स्पष्टीकृतं चैतत्सर्वं कैयटेन । ओकारस्य णित्वं तु 'गवयकन्' 'श्रुशृण्वः—' इति पूर्वोत्तरसाहचर्येण 'हृश—' इत्यत्राप्यद्व्यनुबन्धकस्यैव ग्रामग्रहणाभावाय । अन्यथा तं विनापि 'यतो र ध'

त्तरपदस्यान्त उदात्त इति तदर्थः । एवं चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति । तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहण नेत्यन्यार्थः । एते च प्रत्ययाप्रत्ययसाधारणे, 'दिव औत्' इत्यादौ संचारितत्वात् । वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टम् 'औङ आपः' इत्यत्र भाष्ये । येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा, तदनुच्चारण एवैषा, धर्मिग्राहकमानात् । तेन 'जश्शसोः—' इत्यत्र नैषेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम् । एवमन्त्या अन्यतरानुबन्धोच्चारण

---

इत्यादि । अनुवृत्तिलभ्यमिदं सर्वम् । 'पदस्यान्त उदात्त' इति पाठः । तदर्थं यथतोरिति सूत्रार्थः । एवं च तयोस्तत्राभ्यामग्रहणे च । अव्ययेति । 'तत्पुरुषे तुल्यार्थ—' इतीति भावः । स्पष्टत्वादाद्यार्थमुपेक्ष्यान्त्यार्थमाह— **तन्मात्रेति** । सर्वं वाक्यं सावधारणमिति न्यायेनात्र भावः । न स एवानुबन्धो यस्येति वान्योऽर्थः । तत्फलितमाह— **स चेति** । न्यासकाराद्युक्तधर्मिग्राहकमानलभ्यार्थनिरासायाह— **एते चेति** । **दिव इति** । अत एवावतरणे एतदुक्तम् । अत एव ओकारः शित्त्वं सफलमिति प्राञ्चः । एतेन आद्ये तथा सत्त्वेऽपि द्वितीये न फलमित्यपास्तम् । अतिप्रसङ्गं निराचष्टे— **वर्णेति** । **औङ इति** । ङकाराभावे आद्यया प्राप्तदोषवारणाय तयोरुक्तं कण्ठत इति भावः । धर्मिग्राहकमानसिद्धमेवेदमिति तदाहृतम् । तदेतद्व्यनयमाह— **येनेति** । आद्ये उक्त्वा द्वितीये आह— **द्व्यनुबन्धकेति** । 'ह्रस्वनुड्भ्याम्—' इत्यत्र ड्मतुपोऽग्रहणात्तस्मग्रहायाह— **त्वादीति** । वाशब्दः समुच्चये । अत एवैषेत्येकवचनम् जाता । प्रत्येकान्वयं तु यथाश्रुतमेव सर्वं युक्तम् । **धर्मीति** । स्पष्टतोऽनिराकरणादित्यर्थः । आद्यस्य फलमाह— **तेनेति** । उक्तार्थाङ्गीकारेणेत्यर्थः । 'नैषा' इत्यत्रान्वयः । नाद्येति तदर्थः । इति 'न शङ्क्यम्' इत्यत्र हेतुत्वेनान्वेति । तदेवाह— **निरेति** । अत्र जश्शसोः शिरित्यत्र । एवं धर्मिग्राहकमानादेव । **अन्यतरेति** । इदं ह्यनुबन्धोच्चारणस्याप्युपलक्षणम् । अत एव फलोक्तिसङ्गतिः । 'ङ्वनिपक्वनिपो' इति पाठः । तयोरपीत्यर्थः । अन्यथा ह्यनुबन्धकत्वाद्वनिप एव ग्रहणं स्यान्न ङ्वनिबादेः । ध्वनितमिदं मतुवसोरित्यत्र स्थेन 'वन उपसंख्यानं प्रातरित्व' इति भाष्येणापि । अन्यथा 'वन' इत्युक्त्वा प्रातरित्व इति 'अन्येभ्योऽपि—' इति क्वनिबन्तोदाहरणदानासङ्गतिः स्पष्टैव । स्पष्टीकृतं चैतत् तत्रैव कैयटेन । ओकारः शित्त्वं तु 'गस्थकन्' 'प्रुसृल्वः—' इति पूर्वोत्तरसाहचर्येण 'इष—' इत्यत्राप्यनुबन्धकस्यैव प्राप्तग्रहणाभावाय । अन्यथा च विनापि 'पणोर च'

एव । तेन 'घनो र च' इत्यादौ ह्रस्वनिष्ठत्वनियोर्ग्रहणसिद्धिः । एकानुबन्धकग्रहणे संभवतीति त्वर्थो न भाष्यादिसंमत इत्यन्यत्र विस्तरः ॥ ८३ ॥ ८४ ॥

ननु कुटीर इत्यादौ स्वार्थिकत्वात्स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेन्यायप्राप्तत्वात्पुंस्त्वानुपपत्तिः, अफलत्वमित्यत्र नपुंसकत्वैकवचनयोरनुपपत्तिश्चेत्यत आह—

**क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ॥ ८५ ॥**

'णचः स्त्रियाम्' इति सूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका; अन्यथा 'कर्मव्यतिहारे णच् स्त्रियाम्' इति स्त्रियामेव विधानात्किं तेन । स्पष्टा चेयं बहुज्विधायके भाष्ये ॥ ८५ ॥

---

इत्यनेव सामान्यग्रहणं नूपपादमिति तदानर्थक्यमेव स्यात् । एतेन तस्मादनिशर्थापत्तिरित्यपास्तम् । **इति त्वर्थ इति** । इत्यादिस्त्वर्थ इत्यर्थः । अस्यापि धर्मिग्राहकमानलब्धत्वादाह— **न भाष्येति** । 'घनो र च' इत्यादौ दोषापत्ते 'मतुवसो—' इत्यत्रत्यप्रागुक्तभाष्यासंगत्यापत्तेश्च । यत्तु सीरदेवादय— परिभाषात्रयम्— निरनुबन्धक एकानुबन्धक तदनुबन्धकेति । आद्यं उक्तज्ञापकसाध्ये, उदाहरणान्युक्तान्येव । तत्तदनुबन्धोच्चारणसामर्थ्यलभ्यार्थानुवादस्तृतीया । तल्लक्ष्यम् 'माङि लुङ्' इति । अत्रादितो माशब्दस्य न ग्रहणम् । तथा नाङि विधीयमान ह्रिलमाङि नेति, तन्न, भाष्यविरोधात् परिभाषाद्वयस्यैव भाष्ये सत्त्वात् तत्तदनुबन्धोच्चारणसामर्थ्यादेव माङीत्यादौ दोषाभावेन तत्परिभाषानपेक्षणाच्च अनुबन्धादावेवमप्यनिर्वाहेण न्यूनतापत्तेश्चेति दिक् । तदाह— **इत्यन्यत्र विस्तर इति** । उदाहोनादावित्यर्थः ॥ ८३ ॥ ८४ ॥

निषेधप्रसङ्गादाह— **नन्विति** । 'रस्य' इति शेषः । **न्यायेति** । 'यो यत्र, स तद्धर्मभाक्' इति लौकिकन्यायेत्यर्थः । स्वार्थिकार्थाणां क्रमस्य बोध्यत्वादाह— **नपुंसकेति** । क्वचिदित्यनेन बहुषु स्थलेषु तदनुवृत्तिः सूचिता । **प्रकृतेरिति** । आद्यादिस्वात्सप्रत्ययान्तात्तसि । अन्यथा एतदभावे । तेन स्त्रियामिति पदेन । ज्ञापकस्य सामान्यापेक्षत्वाद्वचनाशेऽपि सिद्धिर्बोध्या ॥ ८५ ॥

त्तरपदस्यान्त उदात्त इति तदर्थः । एवं चावामदेवेऽव्ययपूर्वपदप्रकृतिस्वर एव भवति । तस्मात्सानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहण नेत्यन्यार्थः । एते च प्रत्ययाप्रत्ययसाधारणे, 'दिव औत्' इत्यादौ संचारितत्वात् । वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टम् 'औङ आपः' इत्यत्र भाष्ये । येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा, तदनुच्चारणे एवैषा, धर्मिग्राहकमानात् । तेन 'जश्शसोः—' इत्यत्र नैषेति निरनुबन्धकत्वाज्जिशस एवात्र ग्रहणं स्यादिति न शङ्क्यम् । एवमन्या अन्यतरानुबन्धोच्चारण

---

इत्यादि । अनुवृत्तिलभ्यमिदं सर्वम् । 'पदस्यान्त उदात्त ' इति पाठ । तदर्थं यथतोरितिसूत्रार्थं । **एवं च** तयोस्तन्नाभ्यामग्रहणे च । **अव्ययेति** । 'तत्पुरुषे तुल्यार्थ—' इतीति भाव । स्पष्टत्वादाद्यार्थमुपेक्ष्यान्त्यार्थमाह— **तस्मात्रेति** । सर्वं वाक्य साधारणमिति न्यायेनेति भाव । न स एवानुबन्धो यस्येति वा'''योऽर्थ । तत्फलितमाह— **स चेति** । न्यायसत्ताकत्वधर्मिग्राहकमानलभ्यार्थनिरासायाह— **एते चेति** । **दिव इति** । अत एवावतरणे एतदुक्तम् । अत एव औत्कार कित्त्व सफलमिति भाव । एतेन आद्ये तथा सत्त्वेऽपि द्वितीये न फलमित्यपास्तम् । अतिप्रसङ्ग निराचष्टे— **वर्णेति** । **औङ इति** । ङकाराभावे आद्यया प्राप्तदोषवारणाय तयोर्ङ्कष्ठत इति भाव । धर्मिग्राहकमानसिद्धमेवेदमिति तदाहृतम् । तदेतद्ध्वनयन्नाह— **येनेति** । आद्य उक्त्वा द्वितीये आह— **द्व्यनुबन्धकेति** । 'ह्रस्वनुड्भ्याम्—' इत्यत्र इमतुपोऽग्रहणात्सम्प्रदायाह— **त्वादीति** । वाशब्द समुच्चये । अत एवैषेत्येकवचन जाती । प्रत्येकान्वय तु यथाश्रुतमेव सर्वं युक्तम् । **धर्मीति** । ज्ञाप्यतोऽङ्किरणादिरयर्थ । आद्यस्य फलमाह— **तेनेति** । उक्तार्थाङ्गीकारेणेत्यर्थ । 'नैषा' इत्यनान्वय । नाद्येति तदर्थं । इति 'न शङ्क्यम्' इत्यत्र हेतुत्वेनान्वेति । तदेवाह— **निरेति** । अत्र जश्शसो शिरित्यत्र । **एवं** धर्मिग्राहकमानादेव । **अन्यतरेति** । इद द्व्यनुबन्धोच्चारणस्याप्युपलक्षणम् । अत एव फलोक्तिसङ्गति । 'क्वनिपृक्वनिपो ' इति पाठ । तयोरपीत्यर्थ । अन्यथा द्व्यनुबन्धकत्वाद्वनिप एव ग्रहण स्यान्न क्वनिबादे । ध्वनितमिद मतुवसोरित्यत्रत्येन 'वन उपसङ्ख्यान प्रातरित्व ' इति भाष्येणापि । अन्यथा 'वन ' इत्युक्त्वा प्रातरित्व इति 'अन्येभ्योऽपि—' इति क्वनिबन्तोदाहरणदानासङ्गति स्पष्टैव । स्पष्टीकृत चैतत्तत्रैव कैयटेन । ओत्कार रित्व तु 'मघवन्' 'श्वन्' 'युवन्—' इति पूर्वोत्तरसाहचर्येण 'द्व्य—' इत्यत्राप्यद्व्यनुबन्धकस्यैव प्राप्तग्रहणाभावाय । अन्यथा क विनापि 'यतो र च'

ननु सुपथी नगरीति 'युवोरनाकौ' इतिसूत्रभाष्योदाहृते 'इनः स्त्रियाम्' इति कप् स्यादत आह—

## समासान्तविधिरनित्यः ॥ ८६ ॥

'प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्तत्वाय अंश्वादिषु राजञ्शब्दपाठोऽस्या ज्ञापकः; अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन। 'द्वित्रिभ्यां पाद्दन्मूर्धसु' इति स्वरविधायके भाष्ये स्पष्टेयम् ॥ ८६ ॥

ननु शतानीत्यादौ नुमि कृते पदसंज्ञा प्राप्नोति ततश्च लुक् स्यात्; तथा उपादास्तेत्यत्रात्वे कृते 'स्थाघ्वोरिच्च' इतीत्वं प्राप्नोत्यत आह—

## संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८७ ॥

संनिपातो द्वयोः संबन्धः, तन्निमित्तो विधिः तं संनिपातं यो विहन्ति

---

तत्प्रसङ्गादेवाह— **नन्विति । कबिति** । तथा च ङीन्न स्यादिति भावः । **टचैवान्तोदात्तेति** । 'राजाहः—' इतीति भावः । **द्वित्रीति** । यथा चैतत्तथा स्पष्टं कौस्तुभे वृद्धिसंज्ञाविधायके सूत्रे ॥ ८६ ॥

तत्प्रसङ्गादेवाह— **नन्विति** । आत्व इति । 'दीङो युडचि च' इतीति भावः । **स्थाघ्वोरिति** । अत्र 'घुत्वात्' इत्यादिः । यत्तु सीरदेवादयः— आनन्तर्यलक्षणो विधिस्तद्विघातस्यानिमित्तम् । यदानन्तर्येण यो विहितस्तदानन्तर्यमसौ न विहन्तीत्यर्थः । यत्संबन्धेन यो जातस्तस्य स न विघातक इति यावत् । विघात इत्यत्र भावे घञित्याहुः; तन्न, वक्ष्यमाणदूषणापत्तेः; तद्ध्वनयन्नाह— **संनिपात इति** । द्वयोः पूर्वपरयोर्विशेषणविशेष्ययोश्च । 'तन्निमित्त' इति बहुव्रीहिः । विधिरित्यत्र कर्मणि किः । 'तद्विघात' इत्यत्र कर्मण्यणित्याह— **तमिति** । यद्यपि सीरदेवेनोक्तमत्र ज्ञापकम्— 'न तिसृ—' इति निषेधः । स च विभक्तिनिमित्तयोस्तिसृचतस्रोरनया दीर्घं प्रत्यनिमित्तत्वाद्दीर्घप्राप्त्यनुपपत्तेः । अन्यथा तद्व्यवहितत्वान्न स्यात् । दीर्घश्च दीर्घादीर्घाभ्यामविशेषादिति । यत्तु— नेदं ज्ञापकं युक्तम्, स्वस्रादिषु तयोः पाठान् ङीब्निषेधेन तत्साफल्यात् । पुनस्तत्पाठादानित्यर्थानि; तन्न, 'कृन्मेजन्तः' इतिसूत्रस्थभाष्यस्वारस्येन तयोस्तत्र पाठस्यानार्षत्वात् । अत एवैतदनित्यत्वे ज्ञापकं वक्ष्यति— कष्टायेत्यादि । अन्ये:— 'वा-ऽम्यथ' इत्येव सिद्धे 'ङिति ह्रस्वश्च' 'वाऽऽमि' इतिसूत्रद्वयकरणमस्या ज्ञापकम् । तद्धि

तत्परिभाषादोषनिरूपणावसरे वार्तिककृतोक्तम् । न हि प्रत्ययः पूर्वपरसंनिपातनिमित्तकः । स एव च संनिपातशब्देन गृह्यत इति मत्वा 'न प्रत्ययः संनिपातनिमित्तकः' इति शङ्कायां तदभ्युपेत्यैव 'अङ्गसंज्ञा तद्धनिमित्तं स्यात्' इत्येकदेशिनोक्तमिति न तद्भाष्यविरोधः । किं चैवं शैवो गार्ग्यो वैनतेय इत्यादावप्यङ्गसंज्ञाया लोपानिमित्तत्वानापत्त्या 'वर्णाश्रयः—' इत्यस्य वैयर्थ्यम् । ग्रामणिकुलं ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथंचिदबहिरङ्गपरिभाषयापि वारणं संभवतीति 'ङ्मोह्रस्वात्' इत्यत्र 'ह्रस्वस्य पिति' इति सूत्रे चैकदेशिना तया तुग्वारितो भाष्ये । अत एव परिभाषाफलत्वेनेदमुक्तम् 'ङ्मोह्रस्वात्' इति सूत्रे वार्तिककृतेति केचित् ।

---

विधेरित्यर्थ । नन्वेवमुक्तभाष्यविरोधापत्तिरत आह— न हीति । हिर्निश्चये । वो ह्यर्थे स्वर्थे वा । क्वचिदयं पाठ । मत्वेति । अनेनोक्ताशयमज्ञानानस्येयं शङ्केति सूचितम् । उक्तहेतोरभ्युपेत्यवादत्वादेवाह— एकदेशीति । ननु कैयटाद्युक्तरीत्या फलाभावेनान तद्ग्रहणेन पूर्वनारब्धैव तदमन्यप्रवृत्ति, तदाशय एव वा तेन प्रकाश्यत इति सिद्धान्युक्तिरेव सा, अत आह— किं चैवमिति । तस्य सिद्धान्युक्तित्व इत्यर्थ ; उक्तप्रकारेणान्यथा वा । बहुषु दोषसूचनायानेकोदाहरणोपन्यास । दावपीति । अपिर्दाक्षिसमुच्चायक । अनापत्त्या तुग्यथा । एवं च वार्तिककृतस्तथेष्टत्वे 'प्रत्ययो वर्णविचालस्य' इत्येव वदेदिति न तत्रारब्धा तत्प्रवृत्ति, नापि तदाशयप्रकाशनमिति तथैव युक्तमिति भाव । नन्वेव समस्ते ग्रामणिकुलमित्यादावुत्तरपदहेतुकह्रस्वत्वेऽपि तुकोऽनर्थव वारणसंभवेनान्यथावारणपरभाष्यविरोधोऽत आह— ग्रामणीति । षष्ठी-तत्पुरुष । 'नाजानन्तर्ये—' इति निषेधार्थस्य आवश्यकत्वादाह— यथाकथंचिदिति । निषेधार्थमनाश्रित्येत्यर्थ । परयापीति । अपिरेतत्परिभाषासमुच्चायक । संभवतीति । न तु वास्तवं वारणमिति भाव । इतिहेतौ । 'ङ्मोह्रस्वादित्यत्र' इति पाठ । उक्तज्ञाप-कासुगिवर्ध्य तदप्रवृत्तेरफहेतोश्चाह— एकेति । तया बहिरङ्गपरिभाषया । एतेन तन्मत्य कैयटाश्रित्य एवेति सूचितम् । अत्राथ युक्त्यन्तरमपि सूचयन्नाह— अत एवेति । उक्तरीत्योक्तभाष्यस्यैकदेशयुक्तित्वादेवेत्यर्थ । परेति । एतत्पराम्यर्थ । इदं तुग्वारणफलकं ग्रामणिकुलमित्यादि । यद्यप्युपजीव्यत्वादिकृते-यन्त प्रागुक्त वार्ताऽर्थ सिद्धान्त एवेति कश्चिदित्यनुपपन्नम्, तथापि प्रागुक्त परिभाषाया यथाश्रुतोऽर्थ, कैयटादिसमतार्थसंग्राह-

ह्रस्वनिमित्तसंनिपातविघाताभावात्तन्नैतस्यातिव्याप्तिरपि । 'कृन्मेजन्तः' इति सूत्रस्थभाष्यासंगतिः। संनिपातस्याशास्त्रीयत्वान्नात्र स्थानित्वमिति चेत्, तर्हि असिद्धत्वमपि कथमिति विभावय, अशास्त्रीयेऽसिद्धत्वाप्रवृत्तेः 'ईदूदेत्—' इति सूत्रे कैयटेन स्पष्टमुक्तत्वात्। एवं च पूर्वत्रासिद्धीयेऽपि कार्ये एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत्, न, 'कष्टाय' इति निर्देशेनैतस्या अनित्यत्वात्। ययोः संनिपातस्य विघातकं शास्त्रम्, तयोः संनिपातनिमित्तकविधावुपादानमपेक्षितमिति तु नाग्रहः, अत एव दाक्षिरित्यत्र अकारान्तप्रकृतीञ्संनिपातनिमित्ताङ्गसंज्ञा अनया परिभाषयाल्लोपस्य निमित्तं न स्यादित्याशङ्क्य, अनित्यत्वेन समाहितम् 'कृन्मेजन्तः' इति सूत्रे भाष्ये । न ह्यङ्गसंज्ञायामदन्त-

---

शास्त्राणां नियममुखेन प्रवृत्तिरिति पक्षेणेदम् । विधिमुखेनेति सिद्धान्तपक्षे प्रत्ययलक्षणेनेति बोध्यम् । **ह्रस्वेति** । अस्य 'अम्बार्थेति' इत्यादि । तत्र हे गौरीत्यादौ । **भाष्येति** । 'नदीह्रस्वत्वयं संबुद्धिलोपस्यानिमित्तं स्यात्' इत्यादिभाष्यस्येत्यर्थः । तदसंगतिनिरासाय शङ्कते—**संनीति** । अभावाभावस्य प्रतियोगिरूपत्वमिति मत इदम् । अतिरिक्तत्वे तु फलितार्थकथनमिदम् । वस्तुतः स एव नेति मञ्जूषायां स्पष्टमिति बोध्यम् । अत्र संनिपाते । 'सत्र' इति पाठः । उक्तार्थः । क्वचिदुभयत्र तत्रेति पाठः । तत्र आद्यस्य हे गौरीत्यादौ, द्वितीयस्य रामायेत्यादावित्यर्थः । **कथमिति** । अत एव 'पुक ह्रस्वत्वस्य—अदीदपत्' इति भाष्यसंगतिरिति भावः । अत एवाह— **स्पष्टमिति** । अन्यथा भाष्यं विहाय कैयटपर्यन्तधावनासंगतिः स्पष्टैव । **एवं च** अशास्त्रीयेऽसिद्धत्वाप्रवृत्तौ च । 'एतस्या' इति पाठः । क्वचित् 'अस्या' इति पाठः । अस्याः सिद्धान्तार्थे उक्तं, प्रागुपस्थितातिव्याप्तिमनित्यत्वेन परिहृत्य पुनस्तदर्थं वृथा शङ्कां वारयन् परिष्करोति— **ययोरित्यादिसुबाश्रयत्वादित्यन्तेन** । 'ययोः संनिपातस्य विघातकं शास्त्रं तयोः संनिपातनिमित्तकविधावुपादानम्' इति पाठः । उपादानमित्यस्य 'विशिष्य' इत्यादि । अत एवाग्रिमात एवेत्यादिग्रन्थसंगतिरिति बोध्यम् । 'ययोः संनिपातः कार्यस्य निमित्तं तयोः सूत्र उप—' इति पाठान्तरम् । उक्त एवार्थः । अत्र भाष्यविरोधापत्तेरिति हेतुं सूचयन्, उक्तं द्रढयति— **अत एवेति** । तदनाग्रहादेवेत्यर्थः । अत एवेत्यस्य समाहितमित्यनेनान्वयः । शङ्काया एकदेशियुक्तित्वस्य प्रागुक्तत्वात् । अन्यथा प्रागुक्ताशयानभिज्ञोक्तत्वेन शङ्कायास्तत्त्ववत् एतदनभिज्ञोक्ततया शङ्कायास्तत्त्वेन योजनेऽपि तथैव समाधेर्वक्तव्यतया तथासमाधानासंगतिः स्पष्टैवेति भावः । तदेवाह— **न ह्यङ्गेति** । न हि तद्विधा-

स्याङ्गसंज्ञेत्युक्तमस्ति । न च कुम्भकारेभ्य आश्रय इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासंगतिः; अनया परिभाषया लुङ्मा भूत, अव्ययत्वं तु स्यादेव, लुका हि तदीयसंनिपातस्य विघातः, नाव्ययसंज्ञया, मन्नाफलं त्वकच् स्यादिति वाच्यम्, एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परम्परया वा स्वनिमित्तसंनिपातविघातकस्य स्वयमनिमित्तमित्यर्थेनादोषात् । एतेनात्राकच् स्यादित्यपास्तम् । न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽप्यकजेकवाक्यतापन्ना स्यादिति वाच्यम्, अन्तरङ्गाया तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात् । लुगेकवाक्यतापन्ना तु न गुणादितोऽन्तरङ्गा, उभयोरपि शब्दतः सुबाद्याश्रयत्वात् । 'न यासयोः'

---

दन्तद्वयेनि अङ्गसंज्ञेत्युक्तमित्यर्थः । अत्र भाष्यविरोधं परिहर्तुं शङ्कते— न चेति । त्यादावितिति । आदिना चिराधेन इत्यादिसंग्रहः । अणन्तसुप्रत्ययान्ता इत्यादेवाद्युत्तरम् कुम्भेनन्त ' इति ग्रामियांध्या व्यपदेशिवद्भावेन । न चान्तग्रहणान्नित्ययोगबहुव्रीहिणोप देशे तदन्त इत्यर्थादन न दोष, अनयैव सिद्धेऽन्तग्रहणं न कार्यमिति भाष्याशयात् । नन्वेवमफलत्वान्न संज्ञात आह— संज्ञाफलप्रसंगतिमुपपादयति— अनयेति । इत्यर्थेनेति । 'अस्या' मिति । एतदिति । अस्या अकच्प्रहितोऽचोदाहरणेत्यर्थः । एतेन, उक्तार्थेनानयाऽव्ययत्ववारणेन । नन्वेव इति शेष । क्वचित् 'एतदर्थेन' इति पाठ । न मपि भाष्यस्यैकदेशयुक्तित्वमावश्यकमेवेति निर्मथ्य तथार्थकरणमित्याशयेनाशङ्कते— न चेति । एकवाक्यतावाय सुगमत्वाचाह— कार्येति । जेकेति । तस्या परम्परया तत्त्वेऽप्यस्या असत्त्वादिति भाव । अन्तरङ्गेति । अनैमित्तकत्वेनापरनिमित्तकत्वेन वा । तथा चैवन्तत एव नेति भाव । नन्वेव तस्या अप्यैव वारणेन भाष्यासंगतिरेवात आह— लुगेकेति । 'दितोऽन्तरङ्गा' इति पाठ । सुबाद्याश्रयत्वादिति । आदिना अव्ययरूपप्रकृत्यादिसंग्रह । सुपि परे वृद्धो भन्नन्तस्तदन्तमव्ययसंज्ञं तस्मात्तस्य च लुमित्यर्थ । प्रकृत्यादिसंग्रह । सुपि परे वृद्धो भन्नन्तस्तदन्तमव्ययसंज्ञ तस्मात्तस्य च लुगित्यर्थ । तथा चैकनिमित्तकत्वस्योभयत्र तुल्यत्वेनानैमित्तिकत्वादि न तत्रेति भाव । यद्यपि प्राबल्य तथा चैकनिमित्तकत्वस्योभयत्र तुल्यत्वेनानैमित्तिकत्वादि न तत्रेति भाव । यद्यपि प्राबद तथा चैकनिमित्तकत्वस्योभयत्र परनिमित्तकत्वेन तत्त्व सुवचम्, तथाप्यनिमित्तकत्वादिना वैपरीत्यमेव, तस्य तत परनिमित्तकत्वेन तत्त्व सुवचम्, तथाप्यनपनिमित्तकत्वादिना वैपरीत्यमेव, तस्य तत परनिमित्तकत्वेन तत्त्व सुवचम् । उक्तभाष्यमप्यत्र गमकमिति भाव । भाष्यप्रामाण्यात्तत्र यथो प्राबल्यस्य प्रागुक्तत्वात् । उक्तभाष्यमप्यत्र गमकमिति भाव । भाष्यप्रामाण्यात्तत्र यथो देश एवेत्यन्ये । वस्तुतस्तु गुणस्याधिकनिमित्तकत्वेनाल्पनिमित्तकत्वरूपान्तरङ्गत्व तत्र सुवचम् । किं चैकवाक्यत्वेऽपि वाक्यैकवाक्यतया संज्ञायां मनिमित्तकत्वमेव दुरुपपाद

इति निर्देशाद्वैषानित्या। तेन नातिप्रसङ्गः। स्पष्टा चेयम् 'कृन्मेजन्तः' इति सूत्रे भाष्ये। अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि—वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्—दाक्षिः। आत्वं पुग्विधेः—क्षापयति। पुग्ह्रस्वत्वस्य—अदीदपन्। त्यदाद्यकारष्टाब्विधेः—या सेति। इड्विधिराकारलोपस्य—पपिवान्। 'ह्रस्वनुड्भ्यां मतुप्' 'अन्तोदात्तादुत्तरपदात्' इति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य—अग्निमान्, परमवाचा। नदीह्रस्वत्वं संबुद्धिलोपस्य—नदि कुमारीत्यादि। यादेशो दीर्घत्वस्य—कष्टाय। इतोऽन्यत्र प्रवृत्तिरेव, 'दोषाः खल्वपि साकल्येन परिगणिताः' इति भाष्योक्तेरित्यन्यत्र विस्तरः ॥ ८७ ॥

ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ 'द्विगोर्लुग्—' इत्यणो लुकि 'लुक् तद्धित—' इति स्त्रीप्रत्ययलुकि आनुकः श्रवणापत्तिरत आह—

---

मित्यन्तरङ्गायामिति युक्तमेवेति तया तस्या वारणेऽप्युपायस्योपायान्तरादूषकत्वेन न भाष्यासङ्गतिरिति बोध्यम्। अनित्यत्वात्तत्र तदप्रवृत्तिरिति भाष्याशय इत्यन्ये। ननु वष्टायेति निर्देशेन दीर्घ एवानित्यत्वं स्यादत आह— **न येति**। अत एव चप्रयोग। **भाष्य इति**। तत्र हि कुम्भकारेभ्य इत्यादावनतिप्रसङ्गार्थं कृतस्य 'अनन्यप्रकृति' इति वार्तिकस्य खण्डनायेयमुक्ता। परिभाषाऽनित्यत्वयोर्व्यवस्थामाह— **अस्या इति**। नन्ववर्णाश्रय इति पाठे आनेयादीनामसंग्रहोऽत आह— **वर्णाश्रय इति**। विचालो लोप। **अनिमित्तमिति**। अस्याश्च सर्वत्र सम्बन्ध 'अनया स्यात्' इत्यस्य सर्वत्र शेष। दाक्षिरित्यादिलक्ष्यनिर्देश। **या सेतीति**। इतिराद्यर्थक। **मतुब्विभक्त्युदेति**। मतुब्विभक्त्योरुदात्तत्वे इत्यर्थं, जातावेकवचनम्, यथासंख्यमन्वय। ह्रस्वेति सूत्रे अन्तोदात्तादित्यस्यानुवृत्तिर्बोध्या। **त्यादीति**। आदिना गौर्यादिपरिग्रह। 'यादेशो दीर्घत्वस्य कष्टाय' इति पाठ। **इत.** नवभ्य। यद्यपीदानीतनभाष्यपुस्तकेषु चरमवार्तिकं न दृश्यते, तथापि तद्ग्रन्थमिति बोध्यम्। अत एव 'एते दोषा समा' इति भाष्यमप्यस्ति, तदाह— **इत्यन्यत्रेति**। उद्द्योतादाविति अर्थं ॥ ८७ ॥

तत्प्रसङ्गादिदमाह— **नन्विति**। **इत्यादाविति**। आदिना पञ्चधीवेत्यादौ रथा

**संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ॥ ८८ ॥**

अत्र च 'बिल्वकादिभ्यश्छस्य लुक्' इतिसूत्रस्थं छग्रहणं ज्ञापकम्; तद्धि छमात्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम्। कृतकुगागमा नडाद्यन्तर्गता बिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन। न चैवमपि छग्रहणं व्यर्थम्, कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः; अन्यथा 'बिल्वादिभ्यः' इत्येव वदेत्, लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसङ्ग इति वाच्यम्, ततोऽपि

---

परिग्रह। तत्र पञ्चभिर्धाबरीभि मीत इत्यर्थे आर्हीयस्य ठञ 'अध्यर्ध—' इति लुक्। **छमात्रेति।** **संनीति।** निर्धारणषष्ठी। **अन्यतरेति।** 'शाब्दत प्राप्ते सति' इति शेष। मात्रशब्दोऽवधारणे। **इत्यर्थम्** इतिप्रयोजनकम्। एतदभावे बिल्वकादित परस्य छस्यैव न तु कुक इति छग्रहण विनापि तस्यैव लुगिति तद्वैयर्थ्यं स्पष्टमेव। नन्वकारोच्चारणात्स्वार्थकप्रत्ययान्तग्रहणात्तत्प्रकृतिकान्यप्रत्ययव्यावृत्त्या तस्य साफल्यात्कथ ज्ञापकता? अत आह— **कृतेति।** अत्र हेतुगर्भं विशेषणमाह— **नडाद्यन्तरिति।** तत्र 'बिल्वकादिभ्य —' इति सूत्रे। 'आगन्तुनाकारेण' इति शेष। शीघ्रोपस्थिते, अन्यथा छग्रहणेऽपि कप्रत्ययान्तात्छस्यैवासम्भवेन सूत्र व्यर्थमेव स्यादिति भाव। अचारितार्थ्येन ज्ञापकत्व विघटयति— **न चैवमपीति।** 'न च' इत्यस्य 'वाच्यम्' इत्यनान्वय। **अनुवादेति।** निर्देशेत्यर्थ। **तदनीति।** कुकोऽनिवृत्तीत्यर्थ। **अन्यथा** तदनुवादस्य तदनिवर्तकत्वाभावे। **इत्येवेति।** तत परस्य उक्तरीत्योक्तार्थे ज्ञापितेऽपीत्यर्थ। प्रत्ययस्य लुगित्यर्थे उक्तन्यायेन कुकोऽपि निवृत्तिसिद्धि। तथा च छग्रहणस्य चारितार्थ्येन ज्ञापकत्वापत्तावपि तन्निर्देशवैयर्थ्यं दुरुद्धरमेवेति तत्सामर्थ्यात्तदनिवृत्तिसिध्या तद्वैयर्थ्यं सुस्थमेवेति भाव। ननु तथा दुर्वचम्, अनतिप्रसङ्गाय तन्निर्देशावश्यकत्वात्। तथाहि— तथा सति बिल्वेभ्य इत्यादावतिप्रसङ्ग। भस्येत्यधिकारेण निर्वाहे तु बिल्वायेत्यादौ ■। 'हलस्तद्धितस्य' इति तद्धितग्रहणानुवृत्त्या न सङ्गति तु न, तस्यावयवषष्ठ्यन्तत्वात् अस्वरितत्वाच्च 'तस्येदम्' इत्यणो लुगापत्तेश्च। एतेन 'आपत्यस्य च—' इत्यतस्तद्धित इत्यस्यानुवृत्तिरपि निरस्ता, अत आह— **लक्षणेति।** प्रतिपदोक्तत्वस्वरूपमाह— **बिल्वादीति।** **पुरस्कारेण** विशिष्यानुसन्धानेन। एव च तत एवेष्टसिद्ध्या तन्निर्देशानर्थक्यापत्तिरेव। अतस्तत्सार्थक्याय तथोक्तौ ज्ञापितेऽपि तदचारितार्थ्यं सिद्धमित्यज्ञापकत्वमिति भाव।

प्रतिपदोक्तत्वेन् 'बिल्वादिभ्योऽण्' इति विकाराद्यर्थस्य
कुगनुवादचारितार्थ्यात् । समुच्चयार्थकचशब्दयोगे तु
कदेशत्वनियमान्न्यायसिद्धापीयम् । यत्तु— 'पाविमुवत्' इत्यनेन
विधानमेतदनित्यत्वज्ञापनार्थम् ; अन्यथा एतयतीत्यादौ टिलोपेनैव ङीपि
प्रवृत्ते संनियोगशिष्टपरिभाषया नस्यापि निवृत्त्यैतयतीत्यादिसिद्धौ

---

ततोऽपि पत्रादिच्छादपि । प्रतीति । विशिष्टोच्चारितार्थेनेत्यर्थः । अणिति । 'विहितस्य' इति शेषः । विकाराद्यर्थस्येति । आदिना अवयवपरिग्रहः । 'अण' इति शेषः । तादर्थ्यादिति । एवं चानया प्राप्तकुगनिवृत्त्यभावाय तद्ग्रहणस्य चारितार्थ्याज्ज्ञापकत्वं दुरुपमिति भावः । नन्वेवमप्ययुक्तमेतत्, अनतिप्रसङ्गाय तस्य चारितार्थ्येन ज्ञापकस्यासंभवात् । तथा हि— तद्ग्रहणाभावे 'बिल्वकादिभ्यः' इत्युक्तौ कृतकुगागमनिर्देशस्यैवाविश्रयेण प्रयुक्तकारोच्चारणेन वप्रत्ययान्तस्यैव ग्रहणापत्तौ कप्रत्ययान्तस्थले बिल्वकेन्य इत्यादावुक्तरीत्या वारणेऽपि बिल्वकायेत्यादौ 'तस्येदम्' इत्यणन्ते 'कोपधाच' इति विकाराद्यर्थकाणन्ते च बैल्वकमित्यादौ चातिप्रसङ्गः । यत्तु— 'अनुदात्तादेश्च' इत्यञन्ते स इति कैयटः तन्न, अणोऽपवादत्वात् । 'नस्तद्धिते' इत्यतस्तद्धितग्रहणानुवृत्त्या सिद्धान्तस्थितयान्यत्र कृतया तद्धिते पर इत्यर्थेन तत्र निर्वाहे तु, चतुरर्थ्यन्तर्गतमत्वर्थीयकनन्तादिभ्या-तत्प्रकृतिकत्वार्थम् अणन्तप्रकृतिकवृद्धत्वहेतुकच्छान्ते बैल्वकीयमित्यत्र, प्रागुक्ताणन्तप्रकृतिकवृद्धत्वहेतुकच्छान्तप्रकृतिकयोपधत्वहेतुकवुञन्ते बैल्वकीयकमित्यत्र च एकदेशविकृतन्यायेन बिल्वकापरत्वेनातिप्रसङ्गः । बिल्वकादिभ्यो विहितस्येति व्याख्याने स्वार्थे निर्वाहेऽप्यन्त्ये प्रागुक्ताणन्तप्रकृतिकवृद्धत्वहेतुकच्छान्ते न स तदवस्थ एवेति भाष्याद्यनुपपन्नमेवेति चेत्, न, 'लक्षणप्रतिपदोक्त—' इति परिभाषया बिल्वकादिशब्दपुरस्कारेण विहितस्येत्यर्थबोधात् । न चैवमप्यसम्भवो लब्धेऽस्त्यादिति वाच्यम्, तया भाविकुगागमकबिल्वादिशब्दपुरस्कारेण विहितस्येत्यर्थाङ्गीकारात्, गणपाठस्य सौत्रो परिभाषितकत्वात् । न हि कान्तानां क्वचित्पाठोऽस्ति । गणपाठसत्त्वेनैव च प्रकारवाचितानादिशब्दस्य, तद्ग्रहणसामर्थ्ये तस्यैव सम्भवाच्च । एवं च न वैपरीत्यादौत्यगत्या आगन्तुनाकारेणैव निर्देश इति सर्वं शुक्लमिति दिक् । योगे स्थितिः । तुना अन्यत्रास्या ज्ञापकसिद्धत्वमेवेति सूचितम् । नियमादिति । शास्त्रिकदेशत्वसमस्तनियतत्वस्वरूपव्याप्तिप्रतीतिरित्यर्थः । सिद्धापीयमिति । अपिना ज्ञापकसिद्धत्वसमुच्चयः । 'चेयम्' इति पाठे ऽयेवम् । इत्यनेन 'टे' इत्यस्य वार्तिकेन, तत्र पुवद्भावस्य पाठात् । ज्ञापनार्थमिति । अत एव सर्वैव इत्यादिद्विगिङिरिति भावः । अन्यथा एतदनित्यत्वाभावे । नैवेति । एव

हिरण्ययस्याः प्रयोजनमिति नव्याः । ताच्छीलिक इत्युक्तेः 'तदर्शां ग्रहणम्' इति तु वाचनिकमेव । 'कार्मः—' इति सूत्रे भाष्ये स्पष्टा ॥ ८९ ॥

ननु कंसपरिमृड्भ्यामित्यादौ मृजेर्वृद्धिर्दुर्वारेत्यत आह—

**धातोःकार्यमुच्यमानं तत्प्रत्यये भवति ॥ ९० ॥**

भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम् । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति पाठस्तु परिमृड्भिरित्यादौ 'अनुदात्तस्य चर्दुपधस्य—' इत्यमापादनेन भाष्ये दूषितः । यत्कार्यं प्रत्ययनिमित्तकम्, तत्रेयं

---

एतेन संघर्षोचितमिति शौरदेवाद्युक्तमपास्तम् । नव्या इति । दीक्षितादय इत्यर्थः । अत एव परिभाषायामुपक्रमभाष्ये च अण्कृतानीति बहुवचनप्रयोगमगृत्तिति तदाशयः । अनेनाहानि सूचिता, तद्बीजं तु— तत्रापत्यार्थकाण एव ग्रहणेन 'सामान्यातिदेशो—' इति न्यायेन तदनतिदेशः । अत एवोपसंहारभाष्ये 'अणन्तादिर्ताकारः सिद्धो भवति' इत्येवोक्तमिति । तदर्हयामिति । एवम् 'कुत्सने च च' 'यञिञौ' 'वृत्तिभ्यो ण' 'आगतिभ्यो च' इत्यादावपि बोध्यम् ॥ ८९ ॥

प्रत्ययप्रसक्तेराह— नभ्यत्ति । दुर्वेति । क्विबन्तानां धातुत्वात् मृजित्वात् ऽयाम प्रत्ययत्वाबेति भावः । इदमुपलक्षणम्— रज्जुसृड्भ्यां देवदृग्भ्यामुदकमग्भ्यां प्रगृह्भ्यां चार्ध्रमो देवगिरावित्यादौ अमनुम्तत्वसत्वाद्यापत्तिरपि बोध्या । धातोः सामान्यस्य विशेषस्य वा । तत्प्रत्यये तत्प्रकृतिकप्रत्यये । हत्ये तच्छब्दे । **निपातनमिति** । 'दाण्डिनायनेति सूत्रे' इति शेषः । अन्यथा भावे ष्यञि 'नस्तद्धिते' इति टिलोपं बाधित्वा परत्वात् 'हनस्त—' इति सिद्धे तद्वैयर्थ्यं स्पष्टमेव । उपधावृद्ध्यभावार्थं तु न निपातनम्, आदिवृद्ध्या बाधात् । नापि स्वरबोधनार्थम्, तस्यैष्यमाणत्वात् । न च कुत्वाभावार्थं तत्, निपातनानामनेकप्रयोजनकत्वेन तावताप्यक्षतेः । यद्यपि तद्धिते परे तत्वं न भवतीत्यस्यैव ज्ञापकमिति तत्र सूत्रे भाष्य उक्तम्, तथाऽपि 'मृजेर्वृद्धि' इति सूत्रभाष्यैकवाक्यतया अयमेवार्थस्तेन ज्ञाप्यत इति शब्दान्तरेण तत्र तथा भाष्य उक्तमिति बोध्यम् । 'परिभाषामनपेक्ष्योक्तम्' इति कैयटस्य तु प्रमाद एवेति भावः । प्राचां मुक्तिं खण्डयति— **धातोरिति** । स्वरूपेति । विशेषेत्यर्थः । **पाठस्त्विति** । वार्तिककृदुक्त इति भावः । **प्रत्ययेति** । धर्मिग्राहकमानलब्धमिदम् । किं च सप्तम्यन्तपदेन

व्यवस्थापिका। तेन पदान्तत्वनिबन्धनम् 'नशेर्वा' इति कुत्वं प्रणङ्भ्यामित्यादौ भवत्येव। इयङादिविधौ तु नैषा, 'न भूसुधियोः' इति निषेधेनानित्यत्वात्। 'मृजेर्वृद्धिः' इत्यत्र भाष्ये स्पष्टा॥ ९०॥

ननु सर्वके उच्चकैरित्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह—

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते॥ ९१॥

'नेदमदसोरकोः' इति सूत्रे अकोरिति निषेधोऽस्या ज्ञापकः। 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति 'येन विधिः—' इति सूत्रे भाष्ये पाठः॥ ९१॥

---

यत्र प्रत्ययस्य निमित्तत्वं तत्रैवानियमप्रसक्ते नियमार्थैषा, धर्मिग्राहकमानात्। अत एव न 'अप्रधान्' इति निषेध सार्थक इत्यपि बोध्यम्। एवं च प्रत्यये परतो यद्धातो कार्यमुच्यते, तद्धातुसशब्देन विहितप्रत्यये परतो बोध्यमिति परिभाषार्थ इति भाव। 'प्रणङ्भ्याम्' इति पाठ। **भवत्येवेति**। पक्ष इति भाव। अत एव भाष्ये क्वचित्कुत्वसहित पाठो दृश्यत। **इयङादीति**। आदिना यण्परिग्रह। यत्तु— 'ओ सुपि' 'वर्षाभ्वश्च' इत्यारम्भादनित्येयमिति सीरदेवादय तन्न, तत्र सुपीति विशिष्योक्त्या अनियमाप्रसक्तेनैतदप्रसङ्गात असंभवाच्च अत आह— **न भूसुधीति**। सुधीशब्दास्तु विषयत्वेनेति भाव। **अनित्यत्वात्** तत्त्वज्ञापनात्। **भाष्य इति**। तत्र हि कंसपरिमृड्भ्यामित्यादौ वृद्ध्यभावाय कृत वार्तिक रज्जुसृड्भ्यामित्याद्यर्थमावश्यकै तापरिभाषया प्रत्याख्यातम्॥ ९०॥

प्रत्ययप्रसङ्गादेवाह— **नन्विति**। संज्ञायां साकाङ्क्षायामाह— **सर्वक इति**। संज्ञयो पाठक्रमस्य बोध्यत्वादाह— **सर्वेति**। अत एव तथा स्पष्टनिर्देश। **न स्यातामिति**। विशिष्टस्यापाठादिति भाव। 'येन विधि—' 'यस्मात्प्रत्ययविधि—' इति सूत्रभाष्योक्तमाह— **नेदमिति**। **ज्ञापक इति**। अन्यथेदमदसोर्भिस ऐस उच्यमाननिषेधस्य शब्दान्तरत्वात्तत्राप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव। ननु नायं पाठो युक्त, अत्र जादेस्तन्मध्यपतितत्वाभावात् मध्यपतितस्याप्यनवयवस्य ग्रहणं कस्यचित्तत्त्वापत्तेश्च 'येन विधि—' इत्यत्र भाष्ये पाठान्तरस्य स्पष्टत्वाच्च, अत आह— **तदेकेति**। **येन विधिरितीति**। इदमुपलक्षणम्— 'यस्मात्प्रत्यय—' इतिसूत्रस्यापि। यदि तु 'इदमदसो

ननु 'गातिस्थाघुपाभूभ्यः—' इति सिचो लुक् अपासीदित्यादौ पातेरपि स्यादत आह—

## लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९२ ॥

अस्याश्च ज्ञापकः— 'स्वरतिसूति—' इति सूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथङ्निर्देश इति कैयटः; तत्र, साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासंभवात्। ध्वनिता चेयं परिभाषा 'यस्य विभाषा—' इत्यत्र भाष्ये। तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य

---

कात्' इति नियममङ्गीकृत्य अकोरिति प्रत्याख्यातम् 'नेदमदसो—' इत्यत्र भाष्य इत्युच्यते, तद 'एतत्तदो'—' इत्यत्र अकोरिति प्रतिषेधो ज्ञापको बोध्यः। उक्तसूत्रद्वयभाष्यं तु सूत्ररीत्येति बोध्यम् ॥ ९१ ॥

धातुप्रसङ्गादाह—नन्विति। पातेरपीति। तत. परस्यापि सिचो लुगित्यर्थः। अपिरिष्टपिबतिपरतरसमुच्चायकः। अलुगिति। 'सर्व वाक्यम्—' इति न्यायेनालुग्विकरणस्यैवेत्यर्थः। क्वचित्तथैव पाठः। 'ज्ञापकः स्वर' इति पाठः। सूङितीति। ङकारः पू प्रेरणे इत्यस्य वारणायेष्टसंग्रहाय च। अन्यथा निरनुबन्धकत्वात्तस्यैव ग्रहणं स्यात्। यत्तु—' ननु सूतीति श्तिपा निर्देश' क्वचित् श्तिपि पिस्वाभावज्ञापनार्थः। तेन सूतीत्यत्र गुणनिषेधसिद्धिरिति चेत्तर्हि सूतिसूङित्येव ब्रूयात् तावताप्युक्तार्थसिद्धेः। एवं च सूयतीतिविकरणनिर्देशोऽत्र ज्ञापक इति सीरदेवादयः; तन्न, सौत्रत्वान्निपातनाद्वा सूतीतिप्रयोगसिद्धेरुक्तार्थज्ञापने फलाभावाद्वक्ष्यमाणदोषापत्तेश्च; तद्ध्वनयन्नाह—पृथगिति। कैयट इति। 'स्वरति—' इति सूत्र इति भावः। साहचर्यात् पूर्वपरसाहचर्यात्; अनित्यत्वेऽपीष्टस्थलेऽप्रवृत्तौ मानाभावात्। अत एव 'श्निमर्थं तयोः पृथग्ग्रहणं मुचतेर्मा भूत्' इत्येव भाष्य उक्तम्। उक्त एव हि तस्याशयः। नन्वेवमप्रामाण्यापत्तिरस्यामत आह—ध्वनिता चेयमिति। चस्त्वर्थे। 'तत्र हि' इत्यस्य 'उक्तम्' इत्यत्रान्वयः। विदित इति। वेत्ते रूपम्। दिवादितुदादिरुधादीनामनुदात्तत्वादेव निषेध इति भावः। निषेधमिति। 'यस्य विभाषा' इत्यनेन, 'विभाषा गम' इति श्रवणोत्तद्विकल्पविधानादिति भावः। 'वसुप्रत्ययोः' इत्यादि बहुव्रीहिः पञ्चम्यन्तं च। विशेषणमात्रमत्रोपाधिः, न स्वर्थविशेष उपाधिरिति रक्षितः। तच्चार्थरूपम्। एवमग्रेऽपि। परसाहचर्यस्य बलवत्त्वे मानाभावेनैतदभावे उभयसाहचर्यादुभयोर्ग्रहणं स्यात्। एतादृशस्थले स्वनयोपोद्बलि-

अचङीति प्रतिषेध एवास्या ज्ञापकः । इयं च कुत्वविषयैव । 'हेर-चङि' इति सूत्रे भाष्ये स्पष्टेयम् ॥ ९३ ॥

ननु युष्मभ्यमित्यादौ 'भ्यसः—' इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोपे एत्वं स्यादत आह—

अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९४ ॥

अङ्गे अङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यम्, तस्मिन्सति पुनरन्यस्या-ङ्गकार्यस्य वृत्तौ प्रवृत्तौ अविधानं भवतीत्यर्थः । एषा च 'ज्यादादीयसः'

---

तेन तस्य ग्रहणम् । अपिना केवलस्येत्यर्थः । णिचो लोपेऽपि प्रवर्तते ण्यन्तेति विहाय ण्यधिकेत्युक्तम् । ज्ञापक इति । अन्यथोक्तरीत्या तत्राप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव । एवमानुपूर्वीकैतत्परिभाषाया भाष्ये क्वाप्यपाठादन्यत्रानुपयोगाच्चाह— इयं चेति । कुत्वेति । 'हेर्ण्यन्त प्रतिषेधानर्थक्यमङ्गान्यत्वात् । ज्ञापकं त्वन्यत्र ण्यधिकस्यापि कुत्वविज्ञानार्थम्' इति भाष्यादुक्तरीति भाव । तदभ्यनुज्ञानाह— हेरचेति । एतेनानिखेयम 'न भा—' इतिसूत्रे 'ण्यन्तभादीनामुपसंख्यानम्' इति वार्तिकात् । तेन आङ्पूर्वाद्धन्तेर्ण्यन्तात् 'आङो यम—' इत्यात्मनेपदम्, 'अर्द —' इत्यत्र ण्यन्तस्या हंतेर्न ग्रहणमिति रक्षितसीरदेवाद्युक्तम् अभिप्राययतीत्यादावनया णत्वसिद्धि । नभेतिसूत्र उपसंख्यानं च ॥ कर्तव्यं भवतीति पुरुषोत्तमदेवोक्तं चापास्तम्, अस्या कुत्वमात्रविषय-त्वात् ॥ ९३ ॥

प्रत्ययप्रसङ्गादाङ्गप्रसङ्गमाह— नन्विति । लोप इति । च इत इत्यर्थः । अङ्ग वृत्त इति । अयमेव भाष्यावाद्ध पाठ । एतेन अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य । अङ्गस्य कार्यस्य वृत्ते प्रवृत्तेर्निष्ठितस्य पुनरङ्गकार्यस्य प्रवृत्तावविधानमपरिनिष्पत्ति । पुनरप्रवृत्ताविति षष्ठ्यर्थे सप्तमी चेति श्रुतपालसीरदेवाद्युक्तम्, उभयत्र सप्तम्य तत्तथा पाठ इति न्यासाद्युक्तं चापास्तम् । नन्वङ्गवृत्त इति कर्मधारय बहुव्रीहौ वा निष्ठान्तस्य पूर्वनिपातापत्तिरत आह— अङ्ग इति । अतिप्रसङ्गाय तदर्थमाह— अङ्गेति । व्यधिकरण-चतुर्थ्यर्थबहुव्रीहिरियम् । तत्सम्बन्धि इत्यर्थ । यद्वा तथा सप्तम्यर्थबहुव्रीहि अङ्गाधिकार इति यथाश्रुतम् । निष्पन्नं पठित आह्वारा । यद्वा सप्तमीतत्पुरुष, कार्यं दाम्बम् । इय सत्सप्तमी तदाह— तस्मिन्सतीति । तस्मिन् जाते सतीत्यर्थ । पुन पश्चात् । अनेन प्रत्यासत्ति सूचिता, ता स्पष्टैवग्राम । ननु पुरस्तस्यैव पठनेरसम्भवोऽत आह—

इत्यादिविधानेन ज्ञापिता, अन्यथा ईकारलोपेन 'अकृत्सार्व—' इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव। अत एव भिन्नस्थानिकानेकवर्ण-विषयावेषा। इयं चानित्या, 'द्वयोः' इति निर्देशात्। अनित्यत्व-फलमभ्यार्थमादायैव 'भ्यसो भ्यम्' इति सूत्रे भाष्ये निष्ठितस्येति पठितम्। केचित्तु— अनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते। अत एव 'शाजनोर्जा' 'ज्यादादीयसः' इति सूत्रयोरेनां ज्ञापयित्वा, किं प्रयोजनमिति प्रश्ने, 'पिबतेर्गुणप्रतिषेध उक्तः, स न वक्तव्यः' इत्येव प्रयोजनमुक्तम्, न तु लक्ष्यसिद्धिरूपम्। तदुक्तम्— 'भ्यसोऽभ्यम्' इत्यत्र अभ्यमिति च्छेदः, 'अतो गुणे' इति पररूपेण सिद्धं युष्मभ्यमि-शेषे लोपश्चान्त्यलोप एव;

---

अन्यस्येति। प्रत्याहारेत्याह— अङ्केति। प्रवृत्तौ 'गदाम्' इति शेषः। अविधानम् अपरिनिष्पत्तिः। चेति। ओ विधानेनेत्युत्तरं योज्यम्। स न 'शाजनोर्जा' इति आदेशविधानस्य समुदायत्व। अन्यथा जभावे 'अतो दीर्घ—' इति दीर्घे सिद्धे जानातीति तद्वैयर्थ्यं स्पष्टमेव। लोपेनेति। 'यस्येति—' इत्यतोऽनुवर्तत इति भावः। अकृदिति। तत्र हि यस्तिताप्यत्रानुवृत्तेः, उच्चैस्त्यादौ दीर्घाभावस्तु च्छान्दसत्वादिति भावः। तद्वैयर्थ्यम् आदिविधानवैयर्थ्यम्। अत एव अस्मादेव ज्ञापकात्। अन्त्येति। आगमा 'शाजनोर्जा' इति ज्ञापकात्समानस्थानिकानेकवर्णविषयत्वसमुच्चयः। समानस्थानिकत्वं च पूर्वपरस्थानिभिन्नस्थानिकत्वम्, अन्यस्याभावात्। इदमेव वक्तुमत्रैवान्तरम्। ननु किमर्थमस्या अनित्यत्वं परिभाषाया निर्णिनीषेत्यत्राह सीरदेवादिभिः पठितत्वेन तादृशानि द्वयोरित्यत्रासिद्धे तद्विना तस्यानिष्ठितत्वात्। अत एव द्वाभ्यामित्यत्र 'सुपि च' इति दीर्घः। अत एव च 'भ्यसोऽभ्यम्' इति सूत्रस्य तथापाठः सङ्गच्छते, अत आह— अनित्यत्वेति। आदायैवेति। एतेन तस्य भाष्यासम्प्रविष्टत्वनिरासः, अत एव ज्ञापकपरोक्तसूत्रद्वयस्य भाष्यसम्मतिः; अत एव च तत्राभयत्र तदघटितपाठ इति भावः। 'भ्यसोऽभ्यम्' इत्युपलक्षणम्— 'पाघ्राध्मा—' इत्यस्यापि। किञ्चित् किमपि। एकमपीति यावत्। साध्यत इति। 'अन्यथा तेषां सिद्धत्वात्' इति शेषः। ननु विनिगमनाविरहोऽत आह— अत एवेति। अस्या लक्ष्यासाधकत्वादेवेत्यर्थः। 'इत्येव प्र' इति पाठः। एतद्व्यवच्छेद्यमाह— न त्विति। लक्ष्येति। युष्मभ्यमस्मभ्य दत्तय-ति स्वरूपनाप्युपपादनार्थं। तत्रार्थसिद्धिप्रकारमाह— तदुक्तमिति। अस्या लक्ष्यासाधकत्वमभिप्रेत्योक्तमित्यर्थः। छेद इति। अत एव 'न चादेशो हलादिरस्ति' इति

त्यन्यत्र निरूपितम् । एवं च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यम् 'भ्यसोऽभ्यम्' इतिसूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ॥ ९४ ॥

यत्तु— 'ओरोत्' इति वाच्ये 'ओर्गुणः' इति गुणग्रहणात्—

संज्ञापूर्वकविधेरनित्यत्वम् ॥ ९५ ॥

इदं च विधेयकोटौ संज्ञापूर्वकत्व एव । तेन स्वायंभुवमित्यादिसिद्धम्।

---

'युष्मदस्मदोरनादेशे' इतिसूत्रभाष्य रीत्या गम्यते । अन्त्यलोप एवेति । अत एव 'लिङ्गाभावाद्धिलोपवचनानर्थक्यम्' इति 'साम आकम्' इत्यत्र भाष्य उक्तम् । शेषग्रहणं तु भाष्ये प्रत्याख्यातमेव । 'त्यदादीनाम' इति सूत्रस्थम् 'टिलोपष्टाबभावार्थ' इति तु वार्तिकैकदेशिवचनमिति न तद्विरोध इति भाव । लक्ष्यानुरोधाद्भाष्यानुरोधाच्च 'इष्ठवत्' इत्यभावातिदेशोऽपि लक्ष्यविशेष, तेन दधयतीत्यादौ न वृद्धि । प्रापयतीत्यादौ तु भवत्येव । तदाह— इत्यन्यत्रेति । उद्द्योतादावित्यर्थ । एवं च अस्यास्तदसाधकत्वे च भाष्यं भाष्य च । एकदेश्युक्तिरिति । अवन्तत्वेनैव गुणप्रतिषेधवार्तिकप्रत्याख्यानसमर्थनाय प्रयत्नस्य गुरुत्वादिति भाव । अत्र केचिदित्यरुचिसूचकम् तद्बीजं गु— हलन्तत्वे वार्तिकप्रत्याख्यानस्य प्रकारान्तरेणासिद्धि । न चाकारोच्चारणाददन्तानामेव, भि प्रादिवदकारोच्चारणस्य वात् । न च तथापि लक्ष्यासाधकत्वं समागतमेव, वार्तिकफलसाधकत्वेनैव तन्मात्रलक्ष्यसाधकत्वस्य लाभात् । इदमेव ध्वनयितुमुक्तसूत्रद्वये प्रयोजनप्रश्ने तदर्थमेवम्, न तु युष्मभ्यं ददमतीत्यादिसिद्धिरूपम्, तयामन्यथाऽपि सिद्ध । अत एव 'पाघ्रा—' इतिसूत्रभाष्यसंगतिः । एतत्सर्वं तदप्यस्या एवोदाहरणमिति केचित् । त्वमपि न तथोचितमस्त्यमिति तदर्थमेवेति भाष्यभाष्यविद इत्यर्थः तदित्यन्ये ॥ ९४ ॥

तथा 'नि लोट्' इत्येव सिद्धे आनिग्रहणात्—

आगमशास्त्रमनित्यम् ॥ ९६ ॥

तेन 'सागरं तर्तुकामस्य' इत्यादि सिद्धम् ॥ ९६ ॥

तथा तनादिपाठादेव सिद्धे 'तनादिकृञ्भ्यः' इति सूत्रे कृञ्ग्रहणात्—

गणकार्यमनित्यम् ॥ ९७ ॥

तेन 'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम् ॥ ९७ ॥

तथा चक्षिङो ङित्करणात्—

अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९८ ॥

तेन 'स्फायमिमोक' इत्यादि सिद्धम् ॥ ९८ ॥

तथा विनार्थेनञा समासेन 'अनुदात्तं पदमनेकम्' इत्येव सिद्धे वर्जग्रहणात्—

नञ्घटितमनित्यम् ॥ ९९ ॥

---

आनिग्रहणात् आकारविशिष्टनिग्रहणात् आकारग्रहणादिति यावत् । यत्तु—'इत्सोभुता—' इत्यत्राकृततुमागमनिर्देशोऽत्र ज्ञापक इति पुरुषोत्तमदेव , तन्न, संग्रहत्वेन तस्योपपत्ते । सिद्धमिति । आदिना क्षुभ्नो राजा, अपि शाक पचानस्येत्यादिसंग्रह । अत्रेण्मुर्धी न ॥ ९६ ॥

कृञ्ग्रहणादिति । सीरदेवस्तु—घटादित्वादेव मित्वे सिद्धे पुन क्षपूष मित्वमत्र ज्ञापकम् । सामर्थ्यात् 'षिद्गौर—' इति ङीषर्थं तु न तत्, क्षमत्याभिति निर्देशादित्याह । इत्यादीति । आदिना क्षयामि किमत परमितयादिसंग्रह ॥ ९७ ॥

ङिदिति । इत्याने युरर्थोऽङ्कार पाठ्य इति भाव । अनुदात्तेत्त्वेति । एवमपि शयामीत्यस्य कथंसिद्धीति चिन्त्यम् । मूत्रापक्ष वा ज्ञापकमस्तु । सीरदेवस्तु चक्षिङोऽनुबन्धद्वयमुभयत्र ज्ञापकमित्याह । इत्यादीति । आदिना उदचति विचतोर्ध्वेत्यादि संग्रह ॥ ९८ ॥

तेन 'नेयडुवड्—' इत्यस्यानित्यत्वात् हे सुभ्रु इति सिद्धमिति; तन्न, भाष्येऽदर्शनात् भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे मानाभावात् भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात्। किं च ज्ञापितेऽपि आनीत्यस्य न सार्थक्यम्, आडागमशून्यप्रयोगस्याप्रसिद्धेः। आङ्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम्। अत एव 'घोर्लोपो लेटि वा' इति सूत्रे वेति प्रत्याख्यातम्। लोपेऽप्याट्पक्षे आटः श्रवणं भविष्यति दधादिति, । अटि दधदिति । आगमशास्त्रस्यानित्यत्वे त्वाट्यसति दधादित्यसिद्ध्या वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासंगतिः स्पष्टैव । एतेन यत्कैयटे केचिदित्यादिना अस्यैव वाग्रहणस्य

---

आदौ साधारणदोषमाह— **भाष्य इति**। ननु तत्रादर्शनं नाभावसाधकं तदधृतानां सूत्राणामभावापत्तेरत आह— **भाष्यानुक्तेति**। **ज्ञापितेति**। उक्तरीत्येति भावः। एवं च तत्र दोषलेशाभावेन वार्तिकाप्रवृत्त्या प्रामाण्येन भाष्याधृतानामपि तेषां सत्त्वेऽप्यत्र किंचिदंशे मत्प्रवृत्त्या भाष्यधृतत्वेन सत्त्वेऽपि तत्र तदभावात् यथोत्तरं मुनीनां प्रामाण्येन तस्य तदनियामकत्वम्। अन्यथा द्वयोरज्ञानकरत्वापत्तिः। सा च न युक्ता, सर्वाज्ञाननिरासाय भगवतो प्रवृत्तेरिति भावः। नन्वेवं तथा सौत्राक्षराणामुच्चारणस्य वैयर्थ्यापत्तिरतस्तत्फलमवश्यं वाच्यमित्याशङ्कायामुक्तहेतोरेवाह— **भाष्यायीति**। एवं साधारणदोषमुक्त्वा, आद्ये गुणग्रहणस्य ज्ञापकत्वस्य लणिति णकारस्येवष्टत्वेन ज्ञापितपरिभाषाप्रयुक्तानिष्टाभावेन तन्निरासेन चारितार्थ्यानपेक्षणेनाचारितार्थ्यरूपासाधारणदोषाभावाद्द्वितीयेऽसाधारणं तमाह— **किं चेति**। 'यत' इति शेषः। यद्यप्यत्र ज्ञापितपरिभाषाप्रयुक्तानिष्टप्राप्त्या तन्निवारकतया साफल्यं सुवचम्, तथाप्यन्यथा तदाह— **आडागमेति**। **अप्रसिद्धेरिति**। तथा च ज्ञापकत्वमेव नेति भावः। नन्वेवमाङ्ग्रहणवैयर्थ्यमत आह— **आडिति**। इत्संज्ञकटकारोपलक्षिताग्रहणमित्यर्थः। आटो ग्रहणं ग्राहकः शब्दः आकार इत्यर्थो वा। आदिदाग्रहणमित्येव पाठः। दृष्टान्तेनेदं सूचितम्— यथा तस्य कथमपि न दृष्टार्थत्वं लोटं विना अनिर्घटिततद्योग्यप्रयोगाभावात्, तथैतस्यापीत्युभयोरप्यदृष्टार्थत्वमेवेति। 'घोर्लोपो लेटि वा' इति वाग्रहणमत्र ज्ञापकमिति न्यासाद्युक्तिखण्डनं ध्वनयन्नाह— **अत एवेति**। आगमशास्त्रमनित्यमित्यस्याभावादित्यर्थः। तत्प्रकारमाह— **लोपेऽप्याडिति**। 'लेटोऽडाटौ' इत्यनेन। 'बाधे दृढे—' इति न्यायेन कैयटविरोधं परिहरति— **एतेनेति**। य-

तदनित्यत्वज्ञापकतोक्ता, सापि चिन्त्या; प्रत्याख्यानपरभाष्यविरोधात्। चक्षिङो ङकारस्यान्तेदि-तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च। त्वाभावसंपादनेन चारितार्थ्याच्च ॥ ९९ ॥

एवमेव—

आतिदेशिकमनित्यम् ॥ १०० ॥

सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ १०१ ॥

इत्यादि भाष्यानुक्तं बोध्यम्। स्वायंभुवमित्यादि लोके अमाध्वेवे-त्यन्यत्र विस्तरः ॥ १०१ ॥

---

दिति। सामान्ये नपुंसकम्। एतेनेत्यस्यार्थमाह— प्रत्येति। अत एव तेनापि केचि दित्यविसूत्रकमुक्तम्; तत्र न्यासादय इत्यर्थकम्। तृतीये तमाह— तनादीति। तुर्ये तमाह— चक्षिङ इति। अन्तेदित्त्वेति। अन्यथा नुम् स्यात्। तत्राकारः पाठ्य इति त्वेरोनसहयाधिकरणन्यायेन वक्तुमशक्यम्। किं चाऽऽशिनीयत्वेनाद्दहानिः स्यादिति भावः ॥ ९९ ॥

तथा तदुक्तातत्सदृशा अन्या अपि सङ्गच्छति— एवमेवेति। अतदेवेत्यर्थः। अनित्यमिति। स्थानिवत्सूत्रेण सिद्धे 'प्रत्ययलोपे—' इति सूत्रमत्र ज्ञापकम्। लोप-विधिरिति। अत एव वानि सन्तीत्यादौ यण् पूर्वमल्लोपः। उक्तसूत्रमेवात्रापि ज्ञापकम्, 'यावता विना—' इति न्यायात्। अन्यथा सर्वत्र प्राक्प्रत्ययनिमित्तककार्यं कृत्वा पश्चा-ल्लोपेनेष्टसिद्धौ तद्वैयर्थ्यं स्पष्टमेवेति भावः। इड्विधिश्चेति। तेन श्वयित्वेत्यत्र संप्र-सारणात्पूर्वमिट् 'न क्त्वा सेट्' इति कित्त्वनिषेधात्संप्रसारणाभावः। ज्ञापकं चात्र— सनि ग्रह—' इत्यत्रोकोऽनुकर्षणाय चकरणम्; अन्यथा स्वप्ततीत्यादौ 'इको झल' ति कित्त्वात् 'श्युक —' इति निषेधेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव। सत्यां त्वस्यामादा-वपि सामान्यसूत्रेणाझलादित्वात्तदप्राप्त्या तत्सार्थक्यं स्पष्टमेवेति भावः। आदिना 'कि-प्रविशेषणानां स्वमतं क्वावयमेकत्वं च' 'प्रतिपदविधानाद्योगविभागो गरीयान्' इत्या-दिपरिग्रहः। अनुक्तमिति। निर्मूलं चेत्यपि बोध्यम्, 'प्रत्ययलोपे—' इत्यस्य नियाम-कत्वस्य भाष्ये सिद्धान्तितत्वात् आशीरित्यादौ त्रिवादेरन्तरङ्गत्वाल्लोपे इत्त्वाद्यर्थं तस्यो-पक्षीणत्वाच्च अनुवृत्त्यर्थकचाना भाष्ये प्रत्याख्यानाच्च। न च 'श्वीदितो निष्ठायाम्' इति श्विग्रहणं ज्ञापकम्, अन्यथा आदौ संप्रसारणादौ 'श्युक —' इत्येव सिद्धे किं तेनेति

यदपि—ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह—

**प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०२ ॥**

पाष्ठद्वित्वस्य द्विष्प्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम्। अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति; तदपि न, भाष्येऽदर्शनात्। किं च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावः। अत एव 'दयतेर्दिगि—' इति सूत्रे 'अस्तेः परत्वाद्द्वित्वे कृते परस्यास्तेर्भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति' इत्याशङ्क्य, विषयसप्तम्याश्रयणेन परिहृतं भाष्ये। अन्यथा स्वकुक्करीत्यैकाज्द्विर्वचनन्यायेन समुदायस्यैवादेशापत्तौ तदसंगतिः स्पष्टैव।

---

वाच्यम्, श्युकः—' इत्यस्योपदेशाधिकारेणाप्राप्त्या श्न इत्यादावन्तरङ्गत्वात्संप्रसारणे पूर्वत्वे चेण्निषेधार्थं तस्यावश्यकत्वात्। निष्फलं चेत्यपि बोध्यम्। नन्वेवं स्वायंभुवमित्यादीना का गतिरत आह—**स्वायमिति**। स्वयंभुव इदमित्याद्यर्थं इति भावः। आदिना प्रागुक्तसंग्रहः। **लोक इति**। अनेनार्षप्रयोगाणा साधुता सूचिता। एवमेव 'औपदेशिक—' इत्यादौ वक्ष्यमाणे 'क्रियाविशेषणानाम्—' इत्यादावुक्ते च भाष्यानुक्तत्वं निर्मूलत्वं निष्फलत्वं च बोध्यम्। तदाह— **इत्यन्यत्रेति**। उद्द्योतशेखरादावित्यर्थः ॥ १०० ॥ १०१ ॥

खण्डनीयत्वप्रसङ्गादेवाह— **यद्पीति**। **न स्यादिति**। समुदायस्य लिङ्प्रकृतेर्हन्रूपत्वाभावात्। **गन्तस्यापीति**। अपिः केवलसमुच्चायकः। परिभाषार्थः प्राग्वत्। **पाष्ठद्वित्वेति**। बहुव्रीहिः। **द्विष्प्रयोगत्वेति**। द्विष्प्रयोगरूपत्वस्य सिद्धान्तेनेत्यर्थः। बोधने हेतुरयम्। **इदं** परिभाषारूपं वचनम्। **न्यायसिद्धमिति**। इदम् 'निष्ठा शीङ्—' इत्यत्र न्यासकृतोक्तं सीरदेवादिकैयटदीक्षितादिभिरनुसृतं च। एतस्य बीजस्यान्यत्राश्रयणमावश्यकमित्याह— **अत एवेति**। उक्तबीजाङ्गीकारादेवेत्यर्थः। प्रागवस्पूर्वोक्त्या बीजाभावेन निर्मूलत्वमाह— **किं चेति**। 'यतः' इति शेषः। **तत्त्वेति**। प्रकृतिरूपत्वेत्यर्थः। अत एव स्थानेद्विर्वचनाद्भेदसिद्धिरिति बोध्यम्। **मानाभाव इति**। भिन्नानुपूर्वीकत्वात्स्थानित्वस्य त्वन्न पक्षे प्राप्तिरेव नेति भावः। अत एवात्र प्रमाणमप्याह— **अत एवेति**। तेन तस्य तत्त्वबोधनस्य मानाभावेनासत्त्वादेवेत्यर्थः। **परत्वादिति**। अस्य 'भुवो वुक्' इत्यादिः। **विषयेति**। अस्य 'आर्धधातुके इति' इत्यादिः।

तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या । 'भूसुवोः—' इत्यस्य तदन्ताङ्गस्येत्यर्थादपि प्रामाण्य गुणनिषेधस्य 'बोभूतु—' इति नियम इति न तद्विरोधः । तस्माद्वृन्तेर्यङ्लुकि वा धादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः ॥ १०२ ॥

यदपि— ननु 'वृद्धिर्यस्याचामादिः—' इत्यत्रेव परिभाषोपस्थितौ

---

**अन्यथा** तत्र निर्वाहायोक्तर्थान्त्यपरिभाषाया एवाङ्गीकारे । त्वदुक्तेति । तेन तत्र तत्त्व- बोधनरूपया तयैवेत्यर्थः । ननु केवलस्यापि तत्त्वसत्त्वात्कदाचित्तस्यापि स्यादिति तदावश्य कत्वमेवात आह— **क्वाजिति । दायस्यैवेति** । एवेन केवलव्यावृत्ति । **आदेशा पत्तौ** आदेशप्राप्तौ । **तदसंगतिः** शङ्काया अज्ञानेन योजनेऽपि परिहारासंगति । नन्वेव जुहुधीति कथमत आह— **तस्मादिति** । उभाभ्यासद्भावात्तेन तदङ्गी त्रादिरित्यर्थः । भूवादीना 'भूवादय —' इति धातुत्वस्यापि तत्त्वस्य चोत्तरखण्ड एव त्वम् । अत एव वेवेद वेविदतुरित्यादौ 'विदो लटो वा' इति णलादिसिद्धि , 'सना द्यन्ता —' इति धातुत्वस्य समुदाये सत्त्वेऽपि 'भूवा—' इति धातुत्वस्य तत्र सत्त्वादिति भाव । नन्वेवमङ्गत्वस्य तत्राभावात्परिभाषाया अभावे अप्राप्तगुणाभावसाधकतया साफल्ये बोभूत्विति निपातनस्य दोध्येवेत्येव नियामकत्व भाष्योक्त विरुध्येतात आह— **भूसुवोरिति** । तत्प्रामाण्यादुत्तरखण्डस्य भूत्वादेरिवाङ्गत्वस्य समुदाय एवाङ्गीकारादिति भाव । यथा चैतत्तथा शेखरे स्पष्टम् । **धोद्पीति** । अपिनोक्तरीत्या अङ्गावयवयोर्भूसुवो- रित्यर्थपरिग्रह । पर तु 'सम्भवति सामानाधिकरण्ये—' इति न्यायेनानाद्यार्थ एव युक्त । सद्दा पूर्वपक्ष्य भिमतपरिभाषासमुत्थापक स बोध्य । अपिरहितपाठस्तु युक्त एव । 'गुण- निषेधस्य' इति पाठ । 'स्यागुणस्य' इति पाठ क्वचित् । अर्थ स एव । उपसहरति— **तस्मादिति** । परिभाषाया अभावादित्यर्थ । अत एव 'ऊदुपधाया —' इत्युपधाग्रहणम् 'ओ सुपि' इत्यत ओरित्यनुवृत्त्या सिद्धे 'यमहननन— इत्युत्तरार्थमेव । एतेनात्र तत्रा पकभिति वदन्त पुरुषोत्तमदेवसीरदेवादय परास्ता । यत्तु सीरदेवेन— उत्तरार्थत्वे ज्ञाप- कत्व कथमित्याशङ्क्य तत्रात इति स्थानी निर्देष्टव्य इत्युक्तम् तत्र, उत्तरार्थस्यापि 'इह किंचिदन्यपो' इति न्यायेन त्वन्मते तत्त्वसम्भवात् । **माधवादीति** । आदिना दीक्षितादय । जाप्रहितेत्यादौ तु दीर्घप्राप्तिरेव न, समुदायस्यैवाङ्गत्ववत् 'सनाद्यन्ता —' इति धातुत्व स्याप्यङ्गीकारात् । न हि तस्य प्रत्ययत्वम् । एव चैवाङ्गनुवृत्त्या न दीर्घ इति हरदत्तोक्त दीक्षिताद्युक्त च चिन्त्यमेव । एव च दत्तत्यमाधवोक्तिर्युक्तैव । तदाह— **इत्यन्यत्रेति** । शेखरादाविर्त्यर्थ ॥ १०२ ॥

शालीयासिद्धिरत आह—

विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०३ ॥

अनूद्यमानविशेषणेषु तन्नियामकपरिभाषा नोपतिष्ठत इति तदर्थः । विध्यङ्गभूताना परिभाषाणा विधेयेनासिद्धतया सबन्धासभवेऽपि तद्विशेषणे व्यवस्थापकत्वेन चरितार्थाना तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम् । किं च 'उदीचामातः स्थाने—' इति सूत्रे स्थानेग्रहणमस्या लिङ्गम्; अन्यथा 'षष्ठी स्थाने—' इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति; तन्न, 'उदात्तस्वरितयोर्यण.—' इत्यादौ 'ष्यङः सम्प्रसरणम्—' इतिसूत्रभाष्योक्तरीत्या 'अल्लोपोऽनः' इत्यादौ चैतस्या व्यभिचरितत्वात् भाष्यानुक्तत्वाच्च, स्थानसबन्धो न परिभाषालभ्य इत्यर्थस्य 'षष्ठी स्थाने' इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासंभवाच्च । तत्र स्थानेग्रहणं तु स्पष्टा-

तेऽप्रसङ्गादेवाह— यद्यपीति । इकस्थानिकवृद्धिरिति तदार्थ इति भाव । 'नानुवादे' इत्युक्तेरन्यत्रास्या इष्टत्वाच्च विधिसूत्र इत्यर्थाभावेऽपि साक्षाद्विधेये परिभाषोपस्थितेरसंभवात् 'विधौ' इत्यस्य 'साक्षाद्विधेयविशेषण' इत्यर्थ इति सूचयितु निषेधवाक्यार्थमाह— अनूद्येति । तदर्थ इति । एतद्घटकनिषेधवाक्यार्थ इत्यर्थ । अत एवात्र तथैव बीजमाह— विध्यङ्गेति । अनुवादमुपकारकत्वम् । तद्विशेषणे विशेषविशेषणे । तद्वीति । विशेषणविशेषणेत्यर्थ । एतेन 'प्रधानाप्रधानयो —' इतिन्याय लब्धोऽयमर्थ इति सीरदेवाद्युक्तमपास्तम्, तस्यान्यविषयत्वस्य वक्ष्यमाणत्वात् । अत एव ज्ञापकमप्याह— किं चेति । तद्धेति । तदपि नेत्यर्थ । इत्यादावितिः । आदिना 'अचो रहाभ्याम्—' इत्यादिपरिग्रह । भाष्यासमतिध्वननार्थ दोषान्तरमाह— ष्यङ इति रीत्येति । इद च 'अनन्त्यविकारे—' इति परिभाषाव्याख्याने स्फुटीभविष्यति । 'चैतस्या' इति पाठ । ननु 'सत्याश्रयादे' इत्यादिप्रस्थानादनित्येयमिति सीरदेवाद्युक्तत्वाभाय दोषोऽत आह— भाष्येति । न चैवमपि दोषो न युक्त इति प्राग्रुक्तमत आह— स्थानेति । स्थानशब्दार्थनिरूपितसबन्ध इत्यर्थ । परेति । 'षष्ठी स्थाने—' इतीत्यर्थ । किं त्वन्तरङ्गत्वलभ्य । तथा सत्यन्यार्थज्ञापकत्वासंभवेऽपि नोक्तार्थ ज्ञापनसंभव इति भाव । ननु तत्र स्थानपदानर्थक्यमत आह— तत्रेति । 'उदीचा

र्थमेव । किं च 'विधौ परिभाषा—' इति प्रवादः 'इको गुणवृद्धी' 'अ-चश्च' इत्यनयोः 'विधीयते' इत्यध्याहारमूलकः । अन्यत्र तु नास्याः फल-मित्यन्यत्र विस्तरः ॥ १०३ ॥

ननु नमस्करोति देवान्नमस्यति देवानित्यादौ 'नमःस्वस्ति—' इति चतुर्थी दुर्वारेत्यत आह—

**उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०४ ॥**

कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वम् । तत्र प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति 'सहयुक्ते—' इत्यादिसूत्रेषु भाष्ये ध्वनितम् । इयं च वाचनिक्येव । अत एव 'यस्य च भावेन—' इति सप्तम्यपेक्षया अधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन 'तत्र च दीयते—' इति सूत्रे भाष्ये

---

मात—' इत्यनेनेत्यर्थः । र्थमेवेति । एवं परिभाषामात्रात्प्रत्यक्षापकमिदमिति मत ज्ञ्यथ छेद इत्युक्तम् । तस्य तु ज्ञापकमिभवन न साध्यत्वम् तत्साध्यानामेव चात्र निरूपणमिति भावः । एवं सर्वथा सार्वत्रिकतदसत्त्व प्रतिपाद्य क्वचित्क्वचन सत्तापि तान दुष्याह— किं चेति । अध्याहारेति । अत एव शास्त्रीयार्थसिद्धिर्नेति भावः । अत एवात्र हेतुमाह— अन्यत्र त्विति । तदर्थः 'दृग्गिति च' इत्यत्र तु सतिसप्तम्या निराह । तदा— अन्यत्रेति । उद्योतादावित्यर्थः ॥ १०३ ॥

एवं सम्प्रदानीयगम्न कृत्वा बोद्धव्यविभक्तिप्रसङ्गादाह— नन्विति । नियाद्या धिति, आदिना 'मुनित्रय नमस्कृत्य' इत्यादिपरिग्रहः । कारकाधिकारपठितसञ्ज्ञानि मित्तकविभक्तेन कारकविभक्तिर्विभात इत्यमाशङ्काह— कारकेति । तस्या अपि क्रियाजनकस्य कर्त्रादौ विधानादिति भावः । या अप्यस्तीति सापि कार' इति पाठः । अर्था द्वितीयादिसमुच्चायकौ । ध्वत इत्यादीति । प्रसिद्धतर वा सहयुक्त इत्यस्यापन्यास । तथा चादिशब्द प्रकारे । तेन अन्तरा तरेण— इत्यादावपि सङ्ग्रह । एवमग्रेऽपि बा ध्यम् । ध्वनितमिति । तत्र ह्यप्रधानग्रहणाभावे पुत्रेण यादौ प्रधाने प्रथमानेन न्यायेन साधिता । सा च तस्यास्तत्त्वं विनानुपपन्ना । तद्ध्वनयं वक्ष्यति— सहयुक्त इत्यादौ चात । निक्येवेति । एवं च ग्रन्थानां तत्र यायतलप वध्यव छेद । अत एव वाचनिकत्वादेव

ध्वनितम्, कैयटेन स्पष्टमुक्तम्। एतेन नियान्वयित्वं कारकत्वमित्यपास्तम्, 'यस्य च भावेन—' इति सप्तम्या अपि नियान्वयित्वात्। ये तु—प्रधानीभूतक्रियासम्बन्धनिमित्तकार्यत्वेन कारकविभक्तीना बलवत्त्वं वदन्ति, तेषामुभयोरपि क्रियासम्बन्धनिमित्तत्वेन तदसंगतिः स्पष्टैव। 'नमोवरिवः—' इति सूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्य उपन्यासस्यासंगतिश्च। एतेन 'क्रियाकारकसम्बन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गा। उपपदार्थेन तु यत्किंचित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता बहिरङ्गा' इत्यपास्तम्, नमस्यतीत्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयात्। अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव। 'सह-

---

अस्य 'ध्वनितम्' 'उक्तम्' इत्युभयत्रान्वयः। **दीयत इति**। तत्र हि कार्यमित्यस्यैव दीयत इत्यर्थस्यापि वैयर्थ्यशङ्कापरे, मास इति न भावलक्षणसप्तमी, किं तर्ह्यौपश्लेषिकेऽधिकरण इत्युक्तम्। **ध्वनितमिति**। अस्य 'संगच्छते' इति शेषः। **उक्तमिति**। अस्य 'च' इति शेषः। तेन तस्य तत्रान्वयः। अन्यथा अन्तरङ्गत्वस्य प्रधानत्वस्य च द्वयोः समत्वेन तन्न्याययोरविषयत्वेनैतत्प्रवृत्त्यभावात्तदसंगतिः स्पष्टैव। दीक्षितोक्तिं खण्डयति— **एतेनेति**। तत्यार्थमाह— **यस्य चेति**। तथा चोभयोरपि कारकविभक्तित्वादुक्तभाष्यासंगतिरेवेति भावः। प्रधानन्यायमूलत्वपक्षमिति सीरदेवाद्युक्तिं खण्डयति— **ये त्विति**। सीरदेवादय इत्यर्थः। **तेषामिति**। अस्मिन्नपि पक्षे। तेषामपीत्यर्थः। **उभयोरिति**। सत्सप्तम्यधिकरणसप्तम्योरित्यर्थः। **क्रियेति**। अस्य 'प्रधानीभूत' इत्यादि। **तदिति**। 'तत्र च—' इति मूलभाष्यासंगतिरित्यर्थः। दोषान्तरमाह— **नम इति**। **असंगतिश्चेति**। नमःपदार्थे देवस्य क्रियाकारकभावेनैवान्वयेन तुल्यत्वादिति भावः। एतेन यत्रैकस्या एवोपपदविभक्तित्वं कारकविभक्तित्वं च, तत्रैवास्याः प्रवृत्तिः, तेन ज्योतिष्टोमेनेत्यादौ करणे तृतीया, न त्वभेद इति प्राचामुक्तमपास्तम्, उक्तभाष्यासंगत्यापत्तेः। कैयटसीरदेवाद्युक्तिं खण्डयति— **एतेनेति**। **अन्तरङ्ग इति**। तद्विना पदार्थान्तरानन्वयात्। **तन्निमित्तेति**। बहिर्नाहि। **यत्किंचिदिति**। सर्वत्र सम्बन्धस्य किंचित्क्रियाकारकभावमूलकत्वात्, यथा—स्वत्वं क्रयादिनिबन्धनमिति भावः। एतत्स्यार्थमाह— **नमस्येति**। 'देवान्' इति शेषः। तथा चोक्तभाष्यासंगत्यापत्तिरिति भावः। ननु नमःपदस्य नामत्वेन कथं तदर्थस्य क्रियात्वमत आह— **अत्र चेति**

युक्ते— 'इत्यादौ च प्रधाने प्रथमासाधनार्थमिदं भाष्य उपन्यस्तेत्यन्यत्र विस्तरः ॥ १०४ ॥

नन्वदसुयङ्ङित्यादौ पूर्वस्यापि मुत्वापत्तिरत आह—

अनन्त्यविकारेऽन्त्यसदेशस्य ॥ १०५ ॥

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः, अन्यथा धात्वादेर्नत्वसत्वे नेता सोतेत्यादावेव स्याताम्, न तु नमति सिञ्चतीत्यादौ । अनन्त्यविकार इति च लिङ्गम् । अन्त्येन समानो देशो यस्य,

---

नमस्यतीत्यनेरर्थः । विशिष्य तु तानियामकस्य यजादिसमभिव्याहारादिति भावः । अत एवाह— मुण्डेति । तत्र दोषान्तरं ध्वनयन्नाह— सह्ययुक्त इति । अत एव भवति पुनरेतत्कथनस्तापत्स्य च । तथा चास्या अन्तरङ्गन्यायमूलकत्वे प्रथमापवादत्वे तृतीयायाः सर्वत्र तदापत्तिः, अन्यथा सर्वत्र प्रथमापत्तिः । न चैव द्वितीयपक्षे सूत्राणां वैयर्थ्यम्, न्यायानुगतेऽर्थे हि किं कुर्मः । तत आवश्यक एवास्तु । एवं च सर्वथा अप्रधानग्रहणावश्यकत्वेऽन्यथा तत्साधकपरभाष्यासंगतिरेव । तस्मादुक्तमेवेदम्, लाघवात् । न चैवम् 'नमश्चकार देवेभ्यः' 'रावणाय नमस्कुर्याः' इति प्रयोगयोरसंगतिः, अनुकूलयितुमिच्छार्थेन निर्वाहात् । 'नमः स्वस्ति—' इति चतुर्थीति जयमङ्गलोक्तिस्तु चिन्त्यैव, उक्तहेतो । तदाह— इत्यन्यत्रेति । उद्योतादावित्यर्थः ॥ १०४ ॥

बाधनिरस्यसात्रक्रमेणोपस्थितेराह— नन्वदेति । पूर्वस्य दस्य । प्रत्यासत्तिन्यायेनाह— अन्त्येति । युगपदिति । 'कार्यस्य' इति शेषः । 'सर्वं वाक्यं सावधारणम्' इति न्यायेन— एवेति । तदर्थं वचनघटकानन्त्यपदेशस्य व्यर्थत्वात्, तस्य विधिनिषेधयोरेकप्रयोगस्यविषयत्वस्याश्रयणमिति भावः । अन्यथा उक्तार्थानङ्गीकारे । धात्वादेरिति । अस्य 'विधीयमाने' इति शेषः । आदिना स्वदादिसम्बन्धिसत्वविध्यादि स इत्यादावेव स्यात्, न तु स्य इत्यादावित्यस्य परिग्रहः । एतेनैतदर्थमस्या अनित्यत्वमिति भ्रान्तोक्तम्, एतद्दोषभयेन प्रत्याख्यातेति संदेहादुक्तं चापास्तम् । नन्वेव समन्यत्र व्यर्थमत आह— अनन्त्येति । परिभाषायां लिङ्गत्वनियमात् । तथा च यत्रानन्त्यविकारः, तत्र अन्त्यसदेशस्ये प्रवर्तिकेत इति परिभाषार्थं इति भावः । एतेन 'अनन्त्यविकारे' इति सौदेवाद्यन्तप्रथमान्तपाठः, अनन्त्यस्य यो विकारः सोऽन्त्यसमीपवर्तिनो न यस्य कस्यचिदित्यर्थकः प्रत्युक्तः, भाष्यविरोधाच्च । ननु सादेशश्रवणबलात्साहित्यप्रतीतेरव्ययीभावे बहुव्रीहौ वार्थासमाप्तेरनन्वयापत्तिरन्त्येन सहेति दोषः

स्यातेति प्रमितव्यम्, वार्तिकोक्तफलानामनेकैरिष्टकल्पनाभिरन्यथा सिद्धिं प्रदर्शयति, 'यान्येतस्याः परिभाषायाः प्रयोजनानि, तदर्थमेषा कर्तव्या । प्रतिविधेयं दोषेषु । प्रतिविधानं चोदात्तनिर्देशात्सिद्धम्' इत्याद्युपसंहारात् । भिमाञ्जिपर्तीत्यर्थं च । तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद्गुणे परत्वादभ्यासकार्ये ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी । न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः, 'लक्ष्ये लक्षणस्य—' इति न्यायेन पुनरप्रवृत्तेः । यत्तु 'न संप्रसारणे—' इति सूत्रे भाष्ये— 'नैतस्याः परिभाषायाः प्रयोजनानि' इत्युक्तम् । तस्यायमर्थः—एतत्सूत्रप्रयोजनान्येतस्याः परिभाषायाः प्रयोजनानि न भवन्ति, व्यवधानाद्यन्त्यसमानदेशयणोऽभावादिति । 'नैता-

---

खण्डयति— न चैषेति । वार्तिकोक्तेति । 'प्रयोजनं न संप्रसारणे संप्रसारणम्' प्राप्तितसूत्रस्थवार्तिकोक्तपरिभाषाफलानामित्यर्थः । अनेनादसुयश्विरयस्य नान्यथा द्धिरिति सूचितम्, तत्सूत्रस्थवार्तिकानुक्तत्वात् । प्रदर्शयतीति । अस्य 'उपसंहारात्' सम्बन्धः । यान्येतस्या इति । 'दोषाः समा भूयांसो वा । तस्मान्नार्थः परिभाषया' युरवा, 'न हि दोषाः सन्ति' इति युक्त्वोक्तम्— 'दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् । कुत एतत् ? न हि दोषाणां लक्षणमस्ति । तस्मादिति' इत्यादि । उदात्तेति । यथा स्वरितत्वाधिकारः, तथा प्रतिज्ञाप्रापितेनोदात्तेनैतत्परिभाषाप्रवृत्तिः । तथा च 'अनन्त्यविकारेऽन्त्यसदेशस्योदात्तनिर्देशे' इति पाठ्यम् । तथा च न तदुक्तफलानामन्यथासिद्धिः । किं तु चैषा चेदेवेति तदर्थमप्यावश्यकीयमिति भावः । सिद्धमित्याद्युपेति । आदिना एतत्सूत्रप्रकारस्य अन्त्यसदेशानन्तरत्वादिभागुणस्य परिग्रहः । अविमरिस्त्विति गतिसु वर्तते । इदमेव ध्वनयन्, वार्तिकोक्तमेवास्या लक्ष्यभेदेन भाष्योक्तं फलान्तरमाह— मिमेति । स्थर्थं चेति । 'इयं स्त्रीसायां' इति शेषः । तदुपपादयति— तत्रेति । भिमाञ्जिपर्तीत्यत्रेत्यर्थः । न्तरङ्गेति । अपरनिमित्तत्वे नान्तरङ्गत्वम् । 'रान्यडो' इति हि पाठः । वृद्धौति । इकपरिभाषया न्यमाण्यरस्य भिद्धावप्यत्र दोष एवेति भावः । 'णयानस्यशो' इति पाठः । भाष्योक्तपारदवाधाहृतसमाधि निराचष्टे— न चेति । 'पर्जन्यवल्लक्षणप्रवृत्तिः' इति न्यायेनाह— लक्ष्य इति विकारायानुपूर्व्यंनयमिति भावः । नन्वेवमप्यस्याः सत्त्वे 'न संप्रसारणे—' इति सूत्रस्थभाष्यविरोधोऽत आह— यत्त्विति । 'न भवन्ति व्यवधाना' इति पाठः । व्यवदाविति हेतुपूरणम् । अभावादितीति । अकारेण तादृशेन व्यवधानादिति भावः

न्येतस्याः प्रयोजनानि' इति पाठोऽपि क्वचिद्दृश्यते । वाचनिक्येवैषा, स्पष्टा च 'त्यदा:—' इति सूत्रे, 'अदसोऽसेः—' इति सूत्रे च 'केचिदन्त्यसदेशस्य' इत्यनेन भाष्य इत्यन्यत्र विस्तरः ॥ १०५ ॥

ननु 'अव्यक्तानुकरणस्यात:' इति पररूप पटदिति पटितीत्यादौ 'अलोऽन्त्यस्य' इत्यन्त्यस्य प्राप्नोतीत्यत आह—

## नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०६ ॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ 'भृञामित्' इत्यादि अन्त्यस्यैव । अभ्यासोऽनर्थकः, अर्थाप्रवृत्त्यभावात् , किं तूत्तरखण्ड एवार्थवानित्यन्यत्र निरू-

---

एवमर्थकरणे मान सूचयनाह— नैतान्येतेति । अत एव नैषास्ति परिभाषेति नोक्तम् । निष्कर्षेति । एष प्राग्वत् । अदसुयस्मिन्नेतत्सिद्ध्यर्थमस्या आवश्यकत्वमपि भाष्योक्तमिति सूचयन्, प्रागुक्त फल द्वयमथ पृथगाह— अदसोऽसेरितीति । एवमानुपूर्व्यास्तत्राप्यपाठादाह— केचिदिति । चिनयत क्विप्यसो लोरे णिलोपादौ प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे यण प्रतिपद्यादित संयोगान्तलोपाभावे 'पूर्वत्रासिद्धे न—' इति निषेधात्स्थानिवत्त्वाभावे प्रत्ययलक्षणेन पदान्तत्वाबिन् (पाग—अबिमरित्यत्र) इत्यत्रान्त्यमदेशस्येको दीर्घवारणाय 'वों—' इत्यत्रोपधा ग्रहणम् । एव प्रचक्षासत्यादत्युक्तौस्य आधारस्य वृद्धिवारणायोपधाग्रहणम् 'अत उपधाया' इत्यत्र । एतेनोपधाद्वयग्रहणादनित्येयमिति भ्रान्तोक्तम्, 'अत उपधाया' इत्यत्रोपधाग्रहण चिन्त्यमिति सीरदेवाद्युक्त चापास्तम् । तदाह— अन्यत्रेति । भाष्यादाविस्पर्थ ॥ १०५ ॥

प्रतियोगित्वेनोपस्थितालोऽन्त्यपरिभाषाप्रसङ्गादाह— नन्वव्यक्तेति । पटदिति । पटितीत्यादिसिद्ध्यर्थं रे पटदितीत्यादाविस्पर्थ । तथा च पटेतीत्यादि स्यात्, पटितीत्यादि न स्यात् । एतदर्थमेव तदुपादानम् । नानेति । अभ्यासविकारविषयभिन्नानर्थके स नेत्यर्थं । 'दी भृञामिदित्यादि' इति पाठ । आदिभ्याम् अनीगणदित्यादौ 'ई च गण' इत्यादिसंग्रह । नन्वनभ्यासेति व्यर्थम् अभ्यासस्यार्थवत्त्वेन निषेधस्यैवाप्राप्तेरत आह— अभ्यास इति । स्यमात्वादिति । शब्दद्वयश्रवणवत्ततोऽर्थद्वयाप्रतीतेरिति भाव । समुदायस्यैवार्थवत्त्वमिति प्राचीनमतनिरासायाह— किं त्विति । एवस्तद्व्यावृत्तये । अय

पितम्। एषा अलोन्त्यात्सूत्रे भाष्ये स्पष्टा, फलानामन्यथासिद्धिरनेन प्रत्याख्याता चेति तत एवावधार्यताम्॥ १०६॥

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ 'पुमान् स्त्रिया' इत्येकशेषापत्तिः, स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह—

**प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः॥ १०७॥**

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः। स्पष्टा चेयम् 'पुमान् स्त्रिया' 'नपुंसकमनपुंसकेन—'

---

भाव — केवलाभ्यासस्याप्रयोगेण ततो लोकेऽर्थावबोधात्तस्य तत्त्वम्। उत्तरखण्डस्य तु प्रत्ययाव्यवहितप्राग्वर्तिनः केवलस्याप्यन्यत्रार्थबोधकताया दृष्टत्वेनार्थवत्त्वमेव, पेचतुरित्यादौ तदभावेऽप्यर्थबोधात्। अभ्यासप्रयोगस्तु रैवेण पुष्यतीतिवत्साधुत्वार्थ एव। यातिरित्यादौ तु 'शिष्यमाण लुप्यमानार्थाभिधायि' इति न्यायेन 'एकदेश—' इतिन्यायेन 'सर्वे सर्वपद—' इति न्यायेन चोत्तरखण्डाभावाच्छिष्यमाणस्यैवार्थबोधजनकत्वम्। न हि लोपादिविषये तस्य तत्त्व दृष्टम्। इद केवलस्यानर्थकस्य समुदायस्यार्थवत्त्वमिति वदतोऽप्यावश्यकम्। अत एव प्रागुक्तदयतेरिरितिसूत्रस्थभाष्यसङ्गतिरिति। तदाह— अन्यत्रेति। शेखरादावित्यर्थ। अलोन्त्याद्विति। उपधासंज्ञासूत्र इत्यर्थ। अन्यथेति। 'नाम्रेडितस्यान्त्यस्य तु वा' इति ज्ञापकात्पटितीत्यादिसिद्धि। अनादेशे कृते 'हलि लोप' इति नलोपादाभ्यामित्यादिसिद्धि। द्विशकारकनिर्देशेन 'घ्वसो —' इति लोप सर्वादेश। अन्नग्रहणात् 'अन्न लोप —' इति लोप सर्वादेश। अत एव 'तस्य लोप' इत्यत्र तस्यग्रहण सार्थक सर्वादेशत्वार्थेत्यादिप्रपञ्चेनेत्यर्थ। इग वाचनिकीति केचित्। 'इदमो म' 'इदश' 'य सौ' 'अयुंसि' इत्येव सिद्धे दग्रहणम् आचाराज्ज्ञापकम्, 'अतिपिपर्त्योः' इति निर्देश अनभ्यासेऽत्यज्ञापक इत्यपरे॥ १०६॥

अनभ्यासेत्युक्त्या चोत्तरखण्डस्यार्थवत्त्वेन स्मृतप्राधान्यप्रसङ्गादाह— नन्वित्यादि। 'ननु ब्राह्मण' इति पाठ। त्यादावीति। आदिना क्षत्रियवत्सा च क्षत्रियावत्सश्चेत्यादिपरिग्रह। प्रधान इति। निरूपितत्व सप्तम्यर्थ, तन्मात्रनिरूपितकार्येत्यर्थ। तेन उक्तपरिभाषाङ्गीकारेण। फलाप्रधानेति। ब्राह्मणनिष्ठेत्यर्थ। अपिना तत्कृततत्समुच्चय। न दोष नैकशेषापत्तिरित्यर्थ। यत्तु सीरदेवाद्य — 'आ कडारादित्यत्र कडारा कर्म

इत्यनयोर्भाष्ये । अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति 'हेतुमति च' इत्यत्र भाष्यकैयटयोः ॥ १०७ ॥

ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्याद्त आह—

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०८ ॥**

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणम्, न परिच्छेत्तृवाचकस्य । योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव

---

धारय इत्यनयोः कडारशब्दोऽवधिः, न तु प्राक्कडारादित्यत्र इत्यस्य फलम् । आद्ये पूर्वत्वविशिष्टानां तेषां विधानेन प्राधान्यम्, अन्त्ये वैपरीत्येन तत्त्वाभावः' इति; तन्न, द्वयोरप्यधिकारत्वेन 'गुणानाम्—' इति न्यायेनासंबन्धात् । लौकिकोऽयं न्यायः । तत्र हि जयपराजयौ राज्ञ्येव प्रतीयेते । बहुषु गच्छत्सु, को यातीति प्रश्ने राजेत्युत्तरं च । **स्पष्टा चेयमिति** । आद्येऽनयोः कडारयोरुभयस्थल एकशेषो वारितः । अन्त्येऽनया क्लीबशेषमङ्गीकृत्य तत्सूत्रं प्रत्याख्यातम् । अनिर्ज्ञातेऽर्थे गुणसंदेहे विद्वेऽव्यक्तरूपे च लोके नपुंसकलिङ्गस्यैव प्रयोगात्तस्य प्राधान्यम् । 'केनेत्यनयोः' इति पाठ । 'नेत्यादौ' इति पाठान्तरम् । आदिसंग्राह्यमेव प्रकटयन्, परिभाषाया विषयान्तरमप्याह— **अन्तरङ्गेति** । अन्तरङ्गादुपजीव्याच्चेत्यर्थः । परादितोऽन्यस्मात्प्रबलमिति किंतु वक्तव्यमित्यपिना सूचितम् । **कैयटयोरिति** । तत्र हि हेतुमतीत्यस्य प्रकृत्यर्थविशेषणत्वं संदूष्य स्वीकृते प्रत्ययार्थविशेषणत्वे पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यादौ प्रयोज्यकर्तरि स्वव्यापारापेक्षया स्वातन्त्र्येण परत्वादन्तरङ्गत्वादुपजीव्यत्वाच्च प्राप्तकर्तृत्वमनादृत्य दत्तकर्मतापत्तिदोषः 'गतिबुद्धि—' इति नियमेन वारितः । लोके तथा दर्शनं हि तद्बीजम् । अन्यथा तदसंगतिः स्पष्टैवेति भावः । एतेन मनोरमादिकं चिन्त्यमेवेति सूचितम् ॥ १०७ ॥

प्राधान्येन प्राबल्यप्रसङ्गादाह— **नन्विति** । **शब्दस्येति** । अवधेः संबन्धित्वेन विवक्षायां षष्ठी । एवमग्रेऽधिकरणत्वेन तस्यां सप्तमी । **परीति** । परिच्छेत्ता धान्यमाता । **स्यादिति** । व्याप्तिन्यायात्, तस्य यौगिकत्वेन स्वकर्त्रादिविशिष्यकत्वेन क्रियामपि ब्रूते । तेन तद्वत्त्वस्याभावेन । समुदायप्रसिद्धिगत्वाय योगव्यवच्छेदाय चाह— **शुद्धेति** । अत्र न्याये बीजमाह— **योगेति** । स्वार्थतावच्छेदकानालिङ्गितमात्रविषयकयोगजबोध इत्यर्थः । शुद्धेत्यस्य व्याख्या—तदनेति । योगानालिङ्गितेत्यर्थः । यद्वा यतस्त-

तद्बीजम् । रथकाराधिकरणन्यायसिद्धोऽयमर्थः । काश्चित्तु— ‘दीधीवेवीटाम्’ इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं न दीङ्धीङ्वेवीनामिति; तन्न, तथा सति दीवीधीवीटामित्येव वदेदित्यन्ये ॥ १०८ ॥

ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वाद्गोक्ष इत्यादपि स्यादत आह—

---

दनालिङ्गितत्वमतः शुद्धत्वमित्यर्थः । तथा च यौगिकरूढस्थलेऽयं प्रतिबन्ध्यप्रतिबन्धक-
भावः, न योगरूढस्थल इति बोध्यम् । ननु प्रतिबन्ध्यप्रतिबन्धकभावकल्पन एव किं
मानमत आह— रथेति । ‘माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् । शूद्रायां
करणो वैश्याद्विप्रास्वेव विधिः स्मृतः । माहिष्येण करण्यां तु रथकारः प्रजायते’ इति
मनुः । तदधिकरणे हि योगेन तत्कर्ता द्विजो ग्राह्यः, अथ चोक्तरूपो रूढ इति संशय्य,
विद्यादिमत्त्वाद्योगार्थ एवेति पूर्वपक्षं कृत्वा, रूढेः प्राबल्यात्स एव गृह्यते, तदन्यथानुपप-
त्याऽध्ययनादिकं तस्य कल्प्यत इति सिद्धान्तितम् । अयं प्रतिबन्ध्यप्रतिबन्धकभाव ।
एतेन नायमेतदधिकरणसिद्ध इति भ्रान्तोक्तमपास्तम् । पुरुषोत्तमदेवसीरदेवाद्युक्तिमाह—
कश्चिदिति । ‘समुदायस्य सर्वानुग्राहित्वेन प्राधान्यात्प्रधानन्यायलभ्योऽयमर्थः । तेन’
इत्युक्त्वैतत्तैरुक्तम् । इतीति । अस्य ‘आह’ इति शेषः । अत्र कश्चिदित्यनेनारुचिः
सूचिता सिद्धान्त इङ्ग्रहणसत्त्वेऽपि दीधीवेव्योर्ग्रहणस्य प्रत्याख्यानरूपा । तथा च भाष्य-
रीत्या न तत्फलमिति तात्पर्यम् । सूत्ररीत्यापि तन्नेति मतान्तरमाह— तन्नेति । यत्तु—
धीवेदीधीटामिति वदेदिति न्यासकृदनुवादिसीरदेवादयः; तन्न; तावताऽपि दीधीत्यंशे
दोषतादवस्थ्यात् । अत आह— दीवीधीति । ‘यतः’ इत्यादिः । तथा च निष्प्रयो-
जनेयं परिभाषेति तद्भावः । अन्य इति । न्यासकृदादय इत्यर्थः । अनेनारुचिः सूचि-
ता; तद्बीजं एवमपीङ्शे संदेहतादवस्थ्यमेवेत्युपायान्तराश्रयणावश्यकत्वे तेनैवा
त्रापि निर्वाह इति नैवंप्रकाराश्रयणम् । किं चावतरणोक्तफलमत्त्वेन सफलत्वम् । किं च
तत्र प्रधानन्यायेनानिर्वाह इति । एनेन प्रधानन्यायेनैवेयं गतार्थेति भ्रान्तोक्तमपास्तम् ।
तस्मादुक्तमूलफलितैवेयमिति भावः । इदमपि साहचर्यानाश्रयणेन । यदि तु साह-
चर्येण योनिसंबन्धवाचकस्यैव स्त्रीलिङ्गिमात्रस्यैव वा ग्रहणमित्युच्यते, तदैषा निष्फलेति
केचित् । वस्तुतस्तु ‘पाण्डुकम्बलादिनि’ इत्यत्र रूढस्यैव तस्य ग्रहणं न यौगिकस्यापी-
त्यादिफलार्थमस्या आवश्यकत्वम् । मूलं तूपलक्षणमिति बोध्यम् ॥ १०८ ॥

यौगिकरूढप्रसङ्गेन योगरूढविषयामाह— ननु वातेति । नार्थे गेति । अभि-
धेयवाचकार्थशब्देन बहुव्रीहिः, शब्दपरेण तेन सामानाधिकरण्यमिति भावः । यद्वा तद्रूपेऽर्थे

## व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ १०९ ॥

लक्ष्यानुसाराद्व्यवस्था बोध्या । 'शाच्छोः—' इति सूत्रे 'लटः शतृ—' इत्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ १०९ ॥

## विधिनियमसंभवे विधिरेव ज्यायान् ॥ ११० ॥

नियमे ह्यश्रुताया अन्यानिवृत्तेः सामर्थ्यात्परिकल्पनम्, उक्तानुवाददोषश्चेति लाघवाद्विधिरेवेति बोध्यम् । 'यस्य हलः' इत्यत्र भाष्ये स्पष्टेयम् ॥ ११० ॥

---

गोक्ष इत्यपि स्यात्, तन्न तस्य वैकल्पिकत्वादित्यर्थः । स्याद्यपीति । आदिना गो अक्ष इत्यस्य परिग्रहः । व्यवेति । विशिष्टविषयेऽवस्थितया विभाषया विकल्पेनेत्यर्थः । अपिः सार्वत्रिकाव्यवस्थितविभाषासमुच्चायकः । क्रियन्त इति । 'क्वचित्' इति शेषः । तदाह— लक्ष्येति । एतेन 'जातिपक्षसमाश्रयणलभ्योऽयमर्थः । तत्र हि सकृदेव लक्षणं प्रवर्तते । तस्या एकत्वादेकत्र लक्ष्यजातौ कृतोऽपि भावः सर्वत्र कृत इति विकल्पस्य चारितार्थ्यम् । भावाभावात्मको हि विकल्पः' इति पुरुषोत्तमदेवसीरदेवाद्युक्तमपास्तम्; तदाश्रयणेऽपि लक्ष्यानुसारस्यैव बीजत्वात् त्वदुक्तयुक्तेः सकृद्गतिन्यायप्रसङ्गे खण्डितत्वाच्च । एतेन 'व्याख्यानतः—' इत्यस्य प्रपञ्चभूतेयमित्यपास्तम्; व्याख्यानस्यापि लक्ष्यमूलकत्वात् । लक्ष्यानुसारमेव दर्शयन्नाह— शाच्छोरितीति । तत्र हि 'देवत्रात—' इत्यादिना तासां परिगणनं कृतम् । अन्त्ये कैयटः पाचक इत्यादेः पचतितरामित्यादेश्च शत्रादितदभावाभ्यां सिद्धिरनया कृता ॥ १०९ ॥

विकल्पविधिप्रसङ्गादाह— विधीति । अपूर्वविधिरित्यर्थः । संभव इति । अनेनासंभवे तस्यावकाशः प्रदर्शितः । प्रकर्षे हेतुं सूचयन्नत्र बीजमाह— नियमे हीति । यतस्तत्रेत्यर्थः । परिसङ्ख्याप्यत्र शास्त्रे नियमपदेन गृह्यत इति न न्यूनता । नियमशास्त्राणां विधिमुखेनैव प्रवृत्तेः सिद्धान्तितत्वादाह— सामर्थ्यादिति । दोषश्चेतीति । चेन प्राप्तबाधसमुच्चयः । तथा च दोषत्रयम् । इतिर्हेतौ । लाघवात् दोषत्रयाकरणजलाघवात् । तथा च तन्मूलेयम् । एतेनान्तरङ्गन्यायसिद्धोऽयमर्थ इति सीरदेवाद्युक्तमपास्तम्; अर्धकृतबहिरङ्गावस्य निरस्तत्वात् प्रागुक्तान्यतमस्य तस्य दुर्वचत्वाच्च । यस्येति । तत्र हि यस्येतिसङ्घातग्रहणपक्षेऽन्त्यलोपे पूर्वेण सिद्धे सामर्थ्यादप्राप्तः सर्वलोपो विधेयः,

ननु 'आशंसायां भूतवच्च' इत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यादत आह—

**सामान्यातिदेशे विशेषानतिदेशः ॥ १११ ॥**

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बीजम् । तेनानद्यतनभूतत्वरूपे विशेषे विहितयोस्तयोर्नातिदेशः । इयमनित्या, 'न ल्यपि' इति लिङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि । स्पष्टं चैतत्सर्वं स्थानिवत्सूत्रे भाष्ये ॥ १११ ॥

ननु 'तित्स्वरितम्' इति स्वरितत्वं किरतीत्यादावपि स्यादत आह—

---

उत यस्य हल एव नान्यतो लोलूयितेत्यादाविति सशाप्य, अनया अपूर्वविधिरेवेत्युक्तम् । 'इनादे सनुम' इत्ययं तु पूर्वपक्षिणेयमुक्ता न सिद्धान्तिनेति तस्यानानुल्लेख । क्वचित्क्ष्तया पाठस्तु न युक्त इति बोध्यम् ॥ ११० ॥

विधिप्रसङ्गादतिदेशविधिविषयामाह— **नन्विति** । **स्यादिति** । तयोरपि भूते विधानेन व्याप्तिन्यायादिति भाव । **स्यातिदेशे** । तत्सभवे । अन्यथा तु तस्यैवातिदेश इति बोध्यम् । **सामान्योपेति** । तृतीयार्थे पञ्चम्यर्थे वा बहुव्रीहि, तदुपस्थापकसामग्र्याकाल इत्यर्थ । एतेन 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यमिति लोकन्यायसिद्धोऽयमर्थं । तत्र हि तत्सामान्यकार्थं पादवन्दनादिकमतिदिश्यते, न माठरादिप्रयुक्त परिवेषणादिकमिति पुरुषोत्तमदेवर्क्षरदेवाद्युक्तमपास्तम्, तत्राप्यस्यैव बीजत्वस्य वाच्यत्वात् । एतेन 'उपस्थितसामान्यधर्मैस्तदाक्षिप्तव्यापकधर्मैश्च विध्याकाङ्क्षापूरणे सति तदन्यग्रहणे मानाभाव इति तर्कमूलेयम्' इति मान्योक्तमपास्तम्, तत्र मूलस्यैवाभावात् तस्य मूलत्वस्य निरस्तत्वाच्च । नियमेनेत्यनेन तत्सत्त्वे तदतिदेशोऽपीति सूचितम् । तेन परिभाषाप्रकारेण । यत्तु अनित्यत्वे अनल्विधाविति विधिग्रहण लिङ्गमिति कैयटेन तत्र, तस्यान्यार्थत्वाद्भाष्य एव स्पष्टत्वात्, तद्धुनयन्नाह— **न ल्यपीति** । अन्यथा 'न क्त्वा सेट्' इति निषेधन सेटस्तदभावात्कित्त्वस्य क्त्वाविशेषधर्मत्वादनतिदेशेनेत्वाप्राप्त्या निषेधवैफल्य स्पष्टमेवेति भाव । **तेन** एतदनित्यत्वेन । **देशोऽपीति** । अत एवाप्रहीदित्यादौ दीर्घस्य स्थानिवत्त्वेनेट्त्वात् 'इट ईटि' इति लोपासिद्धि, प्रशाय प्रशय्येत्यादावाल्तविकल्पादिसिद्धिश्च । **एतत्सर्वमिति** । न्यायबीजानित्यत्वाद्य नितयम ॥ १११ ॥

## प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ ११२ ॥

इयं च 'अङ्गस्य' इति सूत्रे भाष्ये पठिता। वर्णग्रहणे च न प्रवर्तत इति तत्रैव कैयटे स्पष्टम्। अत एव 'सनाशंसभिक्ष उः' 'वले' इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम्। परे तु— 'तित्स्वरितम्' इति सूत्रे 'एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रिता' इति कैयटेनोक्तम्। 'अङ्गस्य' इति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता। अत एव 'तिति प्रत्ययग्रहणं कर्तव्यम्' इति वार्तिककृतोक्तम्। उक्तसूत्रयोर्व्याख्यानात्प्रत्यययोरेव ग्रहणमित्याहुः॥ ११२॥

---

लुङादिप्रत्ययप्रसङ्गादाह— नाव्येति। 'ननु तित्स्वरितमिति स्वरितत्वं किरतौ स्यादावपि' इति पाठः। 'सनाशंसेत्सु मन्थातोरपि' इत्यपपाठः, वक्ष्यमाणेन पौनरुक्त्यापत्तेः। स्यादिति। व्याप्तिन्यायादिति भावः। प्रत्ययस्य तस्यैव। क्वचित्तथैव पाठः। 'इय चाङ्गस्येति सूत्रे' इति पाठः। 'अङ्गसंज्ञासूत्रे' इति पाठेऽङ्गसंज्ञाधिकारसूत्र इत्यर्थः। पठितेत्यनेन वाचनिकत्वं सूच्यते। ग्रहणे चेति। चस्त्वर्थः। तत्रैव। अङ्गस्येति सूत्र एव। अन्यथा 'इको यणचि' इत्यादि अस्याप्यस्याम् इ, ए अयनं यणभित्याद्यावेव स्यान्नतु इध्यनेरयादाविति भावः। अस्या फलान्तरमप्याह— अत एवेति। वर्णान्यत्र परिभाषा स्वीकारादेवेत्यर्थः। लक्ष्यसंस्कारार्थत्वोक्तिस्वारस्यमाह— अङ्गस्येतीति। तत्प्रत्येति। अङ्गाधिकारप्रत्येत्यर्थः। परिभाषापेक्षया अङ्गाधिकारे लाघवादनया सर्वेष्टसाधनाभावात्स्या एकदेश्युक्तित्वम्। इदमेव द्रढयति— अत एवेति। तत्र तदर्थं तदुक्तत्वेन लक्ष्यासंस्कारकतया वस्तुतोऽस्या अभावादेवेत्यर्थः। तितीति तित्स्वरितमित्यत्र। एतत्सत्त्वे तु तदसङ्गतिः स्पष्टैव। अत एव च वाऽनया तत्प्रत्याख्यातं किं त्वन्यथा भगवता। अत एव च 'अपृक्त एकाल्—' 'स्वाङ्गे तस—' इत्यादौ प्रत्ययग्रहणवैयर्थ्यम्, 'विन इट्' इत्यत्र प्रत्ययग्रहणाभावश्च। नन्वेवमुक्तसूत्रयोः का गतिरत आह— उक्तेति। सनेत्यादिसूत्रयोरित्यर्थः। तित्स्वरितमित्यत्र गतिस्तु भगवतैवोक्तेति भावः। व्याख्यानादिति। गर्गादिषु निगीपुशब्दपाठरूपज्ञापकमूलकादाद्य, 'मतौ बह्वच—' इति मतुप्साहचर्यमूलकात् 'उपसर्गस्य घञि—' इत्यतो बहुलग्रहणानुवृत्तिमूलकाद्वा व्याख्यानादन्त्ये निर्वाह इत्यर्थः। अन्यथा आद्ये धातुसाहचर्याद्धातोरेव ग्रहणं स्यात्, अन्त्ये व्याप्तिन्यायादुभयोर्ग्रहणं स्यादिति भावः॥ ११२॥

ननु 'विपराभ्यां जेः' इत्यात्मनेपदं परा सेना जयतीत्यर्थके परा जयति सेनेत्यत्र प्राप्नोतीत्यत आह—

**सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥ ११३ ॥**

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम्। सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यवानुच्यते। रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकम्। सदृशयोरेव सहविवक्षा, तयोरेव सहप्रयोग इत्युत्सर्गोऽयम्। ध्वनितं चेदम् 'कर्मप्रवचनीययुक्ते द्वितीया' इति सूत्रे भाष्ये; तत्र हि 'पञ्चम्यपाङ्परिभिः' इति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य, 'यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने च। अयं त्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयः। तस्य कोऽन्यः सहायो भवितुमर्हत्यन्यो वर्जनार्थात्; यथा— अस्य गोः सहाये-

---

साहचर्यप्रसङ्गात्सङ्गत्याऽऽह— **ननु विपेति**। **परा** उत्कृष्टा। **त्यत्र** त्यत्रापि ; ज्याभिन्यायात्। **तेन** परिभाषाङ्गीकारेण। **तत्रैव** विपराभ्यामिति सूत्र एव। न च पक्षियाचकविशब्दस्याप्युपसर्गत्वेऽपि सत्त्वेन कथं तत्साहचर्यमिति वाच्यम्, जयतिसंबद्धविराग्दश्याभ्यार्थकत्वाभावात् यद्यपि जयति वनं विजयति वा जयत इति प्रयोगाणां क्वाप्यदर्शनात्। कैयटस्तु चिन्त्य इत्युद्द्योते स्पष्टम्। अस्या लोकसिद्धत्वं प्रतिपादयति— **सहेति**। सहगमनसहप्रयोगादिरूपमित्यर्थः। गत्यर्थत्वात्कर्तरि क्त इत्याह— **सादृश्यवानिति**। ननु लोके दृष्टसाहचर्यसंबन्धस्य रामलक्ष्मणावित्यादावेकत्र वार्थे प्रसिद्धमिथःसापेक्षत्वसंबन्धरूपस्याभिधानियामकत्वं दृष्टं न सादृश्यस्येति कथमुक्तार्थसिद्धिरत आह— **रामेति**। सहचरस्य भावः साहचर्यं तच्च तयोरेवेति साहचर्यशब्देन सादृश्यलाभादिति भावः। **दृश्यमेवेति**। एवेन तस्य व्यवच्छेदः। सादृश्यनियामकत्वं तु तस्याप्यस्त्येवेति बोध्यम्। तस्यैव तत्त्वे हेत्वन्तरमाह— **सदृशयोरिति**। 'आद्यन्तौ टकितौ' इत्यादौ क्वचिद्व्यभिचारादाह— **इत्युत्सर्गोऽयमिति**। नन्वेवमप्येषां साहचर्यसंबन्धो न क्वापि गृहीत इति कथं प्रकृतार्थसिद्धिरत आह— **ध्वनितमिति**। **दृष्टापचारः** अनियतार्थकः। तदाह— **वर्जेति**। **अवर्जने चेति**। लक्षणादावित्यर्थः। अनर्थकस्यापि तस्य तादृशस्य सत्त्वात् द्वितीयकोटिप्रदर्शनायैवमुक्तम्। 'कर्मप्रवचनीयः' इत्यत्रान्वयः। **अपशब्दः**

नार्थ इति गौरेवानीयते, नाश्वो न गर्दभः' इत्युक्तम् । तेन हि सदृशानामेव प्रयोगे सहायभावो बोधितः । 'द्विस्त्रिश्चतुः—' इति सूत्रे साहचर्येणैव कृत्वोर्थस्य ग्रहणे सिद्धे कृत्वोर्थग्रहणादेषा अनित्या । तेन 'दीधीवेवीटाम्' इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणमित्यन्यत्र विस्तरः ॥ ११३ ॥

ननु 'अस्थि—' इत्यादिनङ् प्रियसक्थ्ना ब्राह्मणेनेत्यत्र न स्यात्, अङ्गस्य नपुंसकत्वाभावादत आह—

## श्रुतानुमितयोः श्रुतसंबन्धो बलवान् ॥ ११४ ॥

श्रुतेनैव संबन्धः, नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः; प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः । एवं च तत्र लिङ्गमस्थ्यादीनामेव विशेषणम्,

---

अपेति शब्दः । अदृष्टेत्यस्य व्याख्या— वर्ज्जेति । अर्थः प्रयोजनम् । ध्वनितत्वं विशदयति— तेन हीति । यतस्तत्सूत्रस्योक्तमार्थेणेत्यर्थः । साहेति । अस्य 'द्विस्त्रिः' इत्यादिः कृत्वोर्थस्य चतुःशब्दस्य । कृत्वोर्थानामिति पाठे अर्थापेक्षं प्रयोगापेक्षं वा बहुवचनम् । पूर्वनिपातस्य व्यभिचरितत्वादाह— तेन दीधीति । 'आहगम—' इत्यादावधातोर्ग्रहणाभावोऽपि फलमिति बोध्यम् । सहचरितशब्दस्योक्त एवार्थः, न तु सहगन्तृमात्रम्; अत एव 'संयोगो विप्रयोगश्च—' इति हरिकारिकाव्याख्यावसरे साहचर्ये 'धर्माधर्मपापादिभिः' इत्युदाहृत्य, धर्मनामपसाहचर्यात्तदर्थस्यैव परैः धर्मप्रवचनीयस्य ग्रहणमित्युक्तं हेलाराजादिभिः । तस्मात्सहचरणसंबन्धज्ञानमूलकतदर्थमात्रतात्पर्यग्रहोऽस्या बीजम् । तदाह— अन्यत्रेति । उद्द्योतादावित्यर्थः ॥ ११३ ॥

साहचर्यसंबन्धप्रसङ्गादाह— नन्वस्थीति । यत्तु— श्रुतानुमितयोः श्रुतेनैव संबन्धः' इति परिभाषान्तरमिति; तन्न, वक्ष्यमाणरीत्या अस्या एकत्वेनात्र श्रुतानुयोगिकसंबन्धस्यैव विवक्षितत्वात्; तदाह— श्रुतेनेति । बलीयानित्यर्थं स्वव्यवच्छेद्यमाह— नानुमीति । एतदर्थमाह— प्रकरेति । अनेन स्थानप्राप्तस्य न तत्त्वमिति सूचितम् । स्फुटीभविष्यदनुपदमेवैतत् । अत्र प्रकरणप्राप्तेरेव सत्त्वाद्विप्रत्यागः । आदिपदं त्वेतद्बीजभूतन्यायसंचारणाय । तदाह— प्रकरेति । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्' इति न्यायेनेति भावः । तत्र आप्नीत्यादिसूत्रे । लिङ्गं प्रकरण-

नाङ्गस्य । शिशीलुङ्नुम्विधिषु तु गृह्यमाणस्याभावात्प्रकरणप्राप्तस्यैव विशे-
षणम् । अत एव 'वा नपुंसकस्य' इति सूत्रे 'वा शौ' इति न कृतम् ।
तत्र नपुंसकग्रहणं हि गृह्यमाणशब्दान्तस्यैव नपुंसकत्वे यथा स्यात्, बहवो
ददतो येषु तानि कुलानि बहुददन्तीत्यत्र मा भूत्, बहूनि ददन्ति येषु ते बहु-
ददन्त इत्यत्र यथा स्यादित्येवमर्थम् । स्पष्टं चेदम् 'स्वमोर्नपुंसकात्' इत्यत्र
भाष्ये । केचित्तु 'अचो रहाभ्यां द्वे' इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यर-
न्तर्भावादनुमितं कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः; तन्न, तक्रकौण्डिन्य-
न्यायेन सिद्धेरित्यन्यत्र विस्तरः ॥ ११४ ॥

ननु 'तत्पुरुषे तुल्यार्थ—' इति स्वरः परमेण कारकेण परमकार-

---

द्विविध-
ग्रहणम् । इदं च तत्संभवे बोध्यम् । तदभावे आह— शिशीति । गृह्यमाणस्य
श्रूयमाणत्वयतः । अत्र हि श्रुतत्वं साक्षादुच्चारितत्वम्, अन्यतराकाङ्क्षारूपस्थानप्रमाणलब्ध-
त्वं च । अनुमितत्वं तूभयाकाङ्क्षारूपप्रकरणप्राप्तत्वमिति बोध्यम् । तदेतद्वचनप्रकार्थे
ज्ञापकमप्यस्तीति सूचयन्नाह— अत एवेति । एतद्वचनगत्वादेवेत्यर्थः । तत्र नपुंसक-
ग्रहणं हि इत्येवमर्थमित्यन्वयः । गृह्यमाणशब्दान्तेति । अत्र द्वितीयप्रकारेण तत्त्वम् ।
ननु केवलस्थलेऽङ्गविशेषणत्वेऽपि सिद्धिरिति किमर्थं नियमः ? अतस्तस्य फलमेवम्यवच्छेद्य-
माह— बह्वित्यादिना । फलान्तरमप्याह— बहूनीति । स्पष्टं चेदमिति । अस्मा-
त्स्यादौ सत्तस्य विशेषणम् । स्यादिविधौ तदभावात्तस्य विशेषणमित्यर्थः । तत्र हि
स्यादिविधौ तत्तस्य विशेषणमिति प्रश्ने तथोक्तम् । तेनार्थतः परिभाषा ध्वनितैवेति भावः ।
अर्थान्तराभिप्रायां पुरुषोत्तमदेवसीरदेवायुक्तिं खण्डयति— केचिदित्यादि । श्रुतेन
साक्षाच्छब्दबोधितेन । अनुमितत्वं चात्र मते न प्रकरणप्राप्तत्वं किन्तु सामान्यरूपेण प्रती-
तिविषयत्वम् । तेन विशेषविषयानुमानात् । तदाह— यरन्तरिति । सिद्धेरिति ।
एतेन तत्सिद्ध एवायमर्थ इति भ्रान्तोक्तम्, लोकन्यायलब्धोऽयमर्थः । तथा च पठ्यते—
साक्षाच्छिष्टेनानुमितं बाध्यत इतीति सीरदेवोक्तं चापास्तम्; अस्य वैयर्थ्यापत्तेः । यत्तु
पुरुषोत्तमदेव'—ग्रामहृदोत्तरेति निर्देशोऽकृतद्वित्वोऽत्र ज्ञापक इति; तन्न, 'रो रि' इत्यस्य
द्वित्वासिद्धया अविषयत्वेऽपि 'हलो यमाम्—' इति लोपसंभवात् । तदाह— इत्यन्यत्रे-
ति । उद्द्योतादावित्यर्थः ॥ ११४ ॥

श्रुतत्वप्रसङ्गादाह— नन्विति । परमेणेति । परिनिष्ठितविभक्त्या 'विशे'

केणेत्यादौ स्यात्; तथा 'गातिस्थाघुपाभूभ्यः—' इति लुक् 'पै शोषणे' इत्यतः कृतात्त्वात्परस्यापि स्यादत आह—

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ ११५ ॥**

लक्षणोक्तेत्यर्थः। तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तः, तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वात्। द्वितीयो हि विलम्बोपस्थितिकः। पै इत्यस्य पा इति रूपं लक्षणानुसंधानपूर्वकं विलम्बोपस्थितिकम्, पिबतेस्तु तच्छीघ्रोपस्थितिकम्। इदमेव ह्येतत्परिभाषाबीजम्। इय

---

णम्—' इति समासः। आदिना परमकारक इत्यादिपरिग्रहः। ननु नाथ नियतदोषो के के स्वरस्यैवानियतत्वाच्छन्दसि तु तत्त्वादेव सुपरिहरत्वादत आह— **तथेति**। परस्यापि 'भिच' इति शेषः। **लक्षणेति**। अत्र लक्षणं च प्रतिपदं चेति द्वन्द्वः कृतवोक्तशब्देन तृतीयासमासः। द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं सम्बन्धः। लक्षणशब्देन च सामान्यलक्षणमत्र, प्रतिपदोक्तसमभिव्याहारादिति बोध्यम्। तदाह— **लक्षणोक्तेत्यर्थ इति**। एकदेशस्येति भावः। अर्शआद्यचापीद सुवचम्। एतेन लक्षणं लाक्षणिकमुपचारादिति सीरदेवोक्तमपास्तम्। यत्तु— अत्र लाक्षणिकत्वं खण्डशो व्युत्पन्नत्वमिति सीरदेवः, तन्न, प्रतिपदोक्तेऽपि तस्यस्य क्वचित्स्वरादिविषय उत्कस्थले 'विभाषा दिक्समासे—' इत्यादौ च सत्त्वेन तत्र दोषापत्तेः। प्रतिपदोक्तत्वं च विशिष्यप्रतिपादितत्वमत्र, न तु तत्पदमुद्धार्यविहितत्वम्, इष्टासिद्धेरनिष्टापत्तेश्च। तदेतत्प्रतिपादयन्नाद्यदोषमुद्धरति— **तत्तद्धिति**। प्रतिपदेत्यस्यायमर्थः, पदशरीरे उभयोर्निवेशात्, अत एव दिना प्रकृतिविशेषादिपरिग्रहः। **विहितो हीति**। हि यतस्तादृशः स प्रतिपदोक्तः अतस्तस्यैव ग्रहणमित्यर्थः। प्रतिपदोक्तत्वस्य तत्र हेतुत्वस्य प्रकटनाय तत्तात्पर्यार्थं प्रतिपादयन्, परिभाषाबीजसत्तां ध्वनयंश्चान हेतुमाह— **शीघ्रोपेति**। **द्वितीयो हीति**। तदननुवादेन विहितः समासादिरेतत् इत्यर्थः। लाक्षणिकशब्दतात्पर्यार्थमाह— **विलम्बेति**। यद्यपि प्रागुक्तशब्दार्थमादायैवोक्तस्थले निर्वाहः, तथाप्यन्यत्रानिर्वाह इति तात्पर्यार्थोऽवश्यवक्तव्य इति ध्वनयितुं द्वितीयदोषमुद्धरति— **पै इत्यस्येति**। **लक्षणेति**। हेतुगर्भं विशेषणम्। **पिबतेस्त्विति**। तुर्वैलक्षण्ये। **तत्** पा इति रूपम्। ननु नाथ परिभाषाशब्दार्थ इति कथमत्र प्रवृत्तिराद्ये? तथाप्यस्या साफल्यात्र वैयर्थ्यमत आह— **इदमेवेति**। शीघ्रोपस्थितिकत्वं विलम्बोपस्थितिकत्वं च रूपमेव यत इत्यर्थः। अत एवाध्यायगत इत्यत्र 'विभाषाप इति नाथ्। 'एतत्परि' इति पाठः। एतेन प्रतिपदोक्तलाक्षणिकशब्दयोर्यथाश्रुतार्थनिरासः। एतेन लक्ष्यत

च वर्णग्रहणेऽपि, ओत्सूत्रभाष्ये संचारितत्वात् । यत्तु— वर्णग्रहणे नैषा 'आ-देचः—' इत्यत्रोपदेशग्रहणादिति, तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम् । अनित्या चेयम् 'भुवश्च महाव्याहृतेः' इति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥ ११५ ॥

नन्वेवं देङो दोधातोश्च कृतात्वस्य घुसंज्ञा न स्यात् ; तथा मेङ आत्वे प्रणिमातेत्यादौ 'नेर्गदनद—' इति णत्वं न स्यात्, तथा गै इत्य-स्यात्वे 'घुमास्था—' इतीत्वं न स्यादत आह—

**गामादाग्रहणेष्वविशेषः ॥ ११६ ॥**

अत्र च ज्ञापकं दैपः पित्त्वम् । तद्धि 'अदाप्' इति सामान्यग्रहणार्थम् । अन्यथा लाक्षणिकत्वादेव निषेधे तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणा-र्थेन पित्त्वेन । तेन चैकदेशानुमतिद्वारा संपूर्णपरिभाषा ज्ञाप्यते । इयं च

---

इति लक्षणमनुमेयम् । प्रतिपदोक्तं च प्रत्यक्षम् । तथा च 'प्रत्यक्षानुमानयोः प्रत्यक्षं बलीयः' इति न्यायसिद्धैवेयमिति भ्रान्तोक्तमपास्तम्, अनेनैव तत्सम्प्रदायशब्दार्थत्वाच्च तत्राप्येतस्यैव यावत्त्वाच्च । बीजं तत्प्रवृत्तिज्ञानम् । तथा च लौकिकलाघवगौरवमूलकोऽयं न्यायः । एतेन विष्णुच इत्यादिकमत्र ज्ञापकम् । तदुक्तम्— 'उदात्तत्वाद्ध्रुवं सिद्धमिकारादित्वमिष्णुचः । नास्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते' इति सारदेवभ्रान्ताद्युक्तमपास्तम्, लोकत एव सिद्धे तदाश्रयणे फलाभावात्तस्यापि सापत्यात् । **वर्णेति** । 'ऋत इद्धातोः' इत्यादावि-त्यर्थः । **सञ्चारीति** । तत्रैव सूत्र इति भावः । दार्ष्टान्तिकं खण्डयति— **यत्त्विति** । **दूषितमिति** । ओत्सूत्रभाष्यविरोधापत्तेरुपदेशग्रहणस्यान्यार्थत्वाच्चेति भावः । नन्वेवमध्यापयतीत्यत्र कथं पुक्, 'दाधा— इत्यत्र घेट कथं च ग्रहणमत आह— **अनि-त्येति** । 'यावत्पुरा—' इति निपातग्रहणमपाह ज्ञापकं बोध्यम् । **महेति** । अन्यथा अनया तस्या एव ग्रहणं न जसन्तस्येति तद्वैयर्थ्यं स्पष्टमेवेति भावः ॥ ११५ ॥

**एवम्** अनित्यलक्षणप्रतिपदोक्तपरिभाषाङ्गीकारे । अनेन सङ्गतिः सूचिता । परि-भाषाव्युत्क्रमेणाह— **देङ इति** । **न स्यादिति** । तथा चेत्यादि न स्यादिति भावः । इदमेवाग्रेऽपि बीजम् । **अदाबितीति** । अस्य 'निषेधे' इति शेषः । **अन्यथा** अस्या अभावे । **तदिति** । दैप इत्यर्थः । नन्वेवं दाप्सिद्धावपि तदाशङ्कितदोषासिद्धिरत आह— **तेन**

लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषालुग्विकरणपरिभाषाणां बाधिका 'दाधा घ्व—' इति सूत्रे भाष्ये स्पष्टा। 'गातिस्था—' इति सूत्रे इणादेशगाग्रहणमेवेष्यत इत्यन्यत्र विस्तरः॥ ११६॥

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह—

प्रत्येकं वाक्यपरिसमाप्तिः॥ ११७॥

देवदत्तादयो भोज्यन्तामित्यत्र भुजिवत्॥ ११७॥

नन्वेवं संयोगसंज्ञासमाससंज्ञाभ्यस्तसंज्ञा अपि प्रत्येकं स्युरत आह—

---

**प्रत्येकेति**। दीप इत्येकेन चेत्यर्थः। लक्षणप्रतिपदोक्तपरिभाषानन्तरमस्या उल्लेखेन तदपवादत्वमेवेति भ्रमस्य तदनित्यत्वादेव सिद्धे वैफल्यस्य च निरासायाह— **इयं चेति**। अत्र वाक्यस्तु ज्ञापकानुरोधादशोकवनिकान्यायात्सर्वान्त 'ओचित्याच्चेति भावः। **बाधिकेति**। बाध्यसामान्यचिन्तया येन नाप्राप्तिन्यायादिति भावः। एतेन 'अनन्तरस्य—' इति न्यायेन लक्षणेत्यस्या एव बाधिकेयमिति क्षीरदेवग्रन्थोक्तम्, तदनित्यत्वादेव सिद्धे इयं निष्फलेति तदुक्तं चापास्तम्, अन्यबाधने साफल्यात् प्रत्यासत्तिन्यायतो व्याप्तिन्यायस्य प्राबल्याच्च। नन्वेवम् 'गातिस्था—' इत्यत्रापि सर्वग्रहणापत्तिरत आह— **गातीति**। 'गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्' इति भाष्योक्तेरिति भावः। एतेन लक्षणप्रतिपदोक्तपरिभाषाया एवेयं बाधिका, न निरनुबन्धकपरिभाषाया, तस्याः प्रत्ययविधिविषयत्वात्। नापि लुग्विकरणपरिभाषायाः, बहिरङ्गत्वात्। अत एव 'मेर्ङ्—' इत्यत्र माङ्मेङोरेव ग्रहणं न तु मा माने इत्यस्येत्यपि क्षीरदेवग्रन्थोक्तमपास्तम्, तस्याः प्रत्ययाप्रत्ययसाधारणत्वात् द्वितीये बहिरङ्गत्वस्य दुर्वचत्वात् अर्थकृतबहिरङ्गत्वानाश्रयणात् तत्र तद्ग्रहणस्येष्टत्वाच्च। अत एव तत्र तस्य प्रणिमातीत्युदाहृतं चन्द्रगोमिना। भाष्ये घुप्रकृतिमाङिति पाठेनैव तद्वारणाच्च। अर्थवत्परिभाषायास्तु नैव बाधिका, लक्ष्यानुरोधात्। एवमग्रेऽपि। अत एव दाप्दैपोः दाशब्दस्य घुसंज्ञाया न ग्रहणम्। नापि साहचर्यपरिभाषायाः। अत एव 'ह्वावामश्च' इति सूत्रे सानुबन्धकपूर्वोभयसाहचर्यान्माङ्मेङोरेव ग्रहणं न तु मा माने इत्यस्येति बोध्यम्। तदाह— **इत्यन्यत्रेति**। उद्द्योतादावित्यर्थः॥ ११६॥

घुसंज्ञाप्रसङ्गादाह— **नन्विति**। आदिना गुणादिपरिग्रहः। **समुदाय इति**। तथा निर्देशादिति भावः। लोकसिद्धोऽयं न्याय इत्याह— **देवदत्तेति**। देवदत्तयज्ञदत्तविष्णुमित्रा इत्यर्थः। **भुजिवदिति**। यथा तत्र समुदाये बाधाभावम्, तथात्रापि समु

**क्वचित्समुदायेऽपि ॥ ११८ ॥**

गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्तीत्यादौ दण्डनवत् । लक्ष्यानुरोधेन च व्यवस्था ॥ ११८ ॥

ननु 'यू स्त्र्याख्यौ—' इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादन्यतरेण प्राह-कसूत्रप्राप्त्योदात्ताद्यन्यतमोच्चारणेऽन्यस्वरकस्य संज्ञा न स्यादत आह—

**अभेदका गुणाः ॥ ११९ ॥**

असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको न विवक्षित इत्यर्थः ।

---

दायस्यैकस्याभावात्तत्त्वमिति भावः । **एवम्** एतच्छास्त्रस्थवाक्यानां प्रत्येकं परिसमाप्त्यधिकारे । अनेन संगतिः सूचिता । **संयोगेति** । पाठक्रमस्य बोध्यत्वात्तस्य पूर्वनिपातः । **क्वचिदिति** । इष्टस्थल इत्यर्थः । 'वाक्य' इत्याद्यनुवृत्तिः । अपि पूर्वसमुच्चय एव । अयमपि लोकसिद्ध एव न्याय इत्याह— **गर्गा इति** । ननु कथमनयोर्व्यवस्था इष्टत्वस्य दुर्ज्ञेयत्वादत आह— **लक्ष्येति** । तेनानियमो नेति बोध्यम् । इद लक्ष्यैकचक्षुष्कभाष्यकारमते । लक्षणैकचक्षुष्कमतेनाह— **चेति** । तेनान्वर्थत्वादिरूपप्रमाणसमुच्चयः । तथा च क्वचिदित्यस्य तादृशप्रमाणवतीत्यर्थः । एवं च यथा तत्र वाक्यक्षेपात्तत्त्वम्, तथात्रापि लक्ष्यानुरोधादन्वर्थत्वादिप्रमाणबलाच्च तत्त्वमिति भावः । गर्गाः राह न भाष्यमित्युक्ते समुदितैर्दत्तं सह प्रत्येकं चाभोजनवदुभयथा वाक्यपरिसमाप्तिरित्यस्य न्यायस्य तु नात्रोपयोगः, लक्ष्याभावात् 'अटकुप्वाङ्—' इत्यत्र समुदायव्यवाय इत्यर्थस्यासंभवात् अवान्तरसमुदायग्रहणस्य व्याख्यानसापेक्षत्वेन तत्परिभाषयैव निर्वाहाच्च 'यस्यो—' इत्यादावेकवाक्यतानेकवाक्यतयोरपि व्याख्यानत एव लाभाच्च । एतेन तां वदन्तः सारदेवादयः परास्ताः ॥ ११८ ॥

आद्यविषयविषयकत्वसंगतिं ध्वनयन्नाह— **नन्विति** । जातिपक्षेऽनुपयोगस्य वक्ष्यमाणत्वादाह— **व्यक्तीति** । **दीर्घेति** । व्याख्यानादिति भावः । **अन्येति** । शेषषष्ठ्या समासः । **अन्यस्वरकेति** । यत्स्वरकोच्चारणं तद्भिन्नस्वरत्वावच्छिन्नस्वरकस्येत्यर्थः । **संज्ञा** नदीसंज्ञा । सग्राहकपरिभाषया तत्त्वेऽपि लक्ष्यसंस्कारकत्वास्य बहुलत्वानुपयोगादाह— **असतीति** । शेषपूरणमिदम् । **स्वरूपेणेति** । तत्तद्रूपेणेत्यर्थः । **उच्चारित इति** । अनेनात्र शास्त्र एवमिति सूचितम्, तेन लोके द्वैविध्येऽपि न क्षति

अत्र च ‘अस्थिदधि—’ इत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्धे उदात्तग्रहणं ज्ञापकम् । ‘स्वरूपेणोच्चारितः’ इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादिशब्दोच्चारणे विवक्षैव । ‘उञः’ ‘ऊँ’ इत्यत्राननुनासिक एवोच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणाद्विवक्षा बोध्या । ‘पथिमथ्यृभुक्षाम्—’ इत्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात्तद्विवक्षा । एतदर्थमेव ‘असति यत्ने’ इत्युक्तम् । न चैवम् ‘अहन्यादीनाम्’ ‘नञ्विषयस्य—’ इत्याद्युदात्ततयान्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्, परमास्थिशब्दादावन्तोदात्ते उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात् । ‘चतसर्याद्युदात्तनिपातनं करिष्यते’ ‘वधादेश आद्युदात्तनिपातनं करिष्यते’ ‘पदादयोऽन्तोदात्ता निपात्यन्ते’ ‘सहस्य स उदात्तो निपात्यते’ इत्यादिभाष्यं त्वेकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन । त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कै-

---

अत्र च अस्या परिभाषाया च । आदिना ‘चतुरनडुहोरामुदात्त.’ इत्यादिपरिग्रह । स्यैवोच्चेति । एवो भिन्नक्रम, उच्चारणेनैवेत्यर्थ । स्वरूपेणोच्चारित इति विशेषणस्य फलमाह— स्वरूपेणेति । इति इत्यादौ । व्युत्क्रमेणाह— उदात्तादीति । ‘असति यत्ने’ इत्यस्य यत्नविशेषेऽसतीत्यर्थकस्य फले आह— उञ ऊ इत्यादि । अननुनेति । स्थान्यनुरूपतयेति भाव । एतदर्थमेव एतदुभयार्थमेव । एवम् असति यत्न इति विशेषणोपादाने । उदात्तादय शब्दा धर्मपरा धर्मिपराश्चेति न दोष । ‘भविष्यतीति’ इत्यस्य ‘स्वभिमतचारितार्थ्यात्’ इति शेष । अस्य उदात्तग्रहणस्य पूर्वोक्तस्य यद्वा अस्य न्यायस्य । ‘उदात्तग्रहणस्य’ इति शेष । उदात्त इति । समासस्वरेणेति भाव । अपिरनुदात्तगुणकसमुच्चायक । ‘स्थानित्वेन’ इत्यग्रे ‘स्थान्यनुरूपोच्चारणस्यैव सत्त्वेन यत्नविशेषाभावात्’ इति शेष । एवञ्च केवले अनुदात्त एव स्यादित्युदात्तग्रहणं स्यादिति भाव । नन्वेवमपि निपातनस्थले यत्नविशेषाभावात्तत्परीत्यादिभाष्यासंगतिरत आह— चतेति । नन्वेव ज्ञापकपरभाष्यासंगति, तत्राप्युक्तरीत्या तदुच्चारणस्य विवक्षार्थत्वसम्भवादत आह— त्रैस्वर्येणेति । पाठ इति । अस्य ‘अष्टाध्यायी’

यटादयः। परे तु निपातन नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम्, तद्रूपाद्यत्नात्तत्र तत्रोदात्तादिविवक्षा। 'तिसृचतसृ' इत्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्त उच्चारणीये आद्युदात्तोच्चारणम्, अन्यत्र स्थान्यनुरूपे स्वरे उच्चारणीये तत्तदुच्चारण विवक्षार्थम्। सपूर्णाष्टाध्यायी आचार्येणैकश्रुत्या पठितेत्यत्र न मानम्। क्वचित्पदस्यैकश्रुत्याऽपि पाठः, यथा— दाण्डिनायनादिसूत्रे ऐक्ष्वाकेति। यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्, तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः। विधेयाण्विषये तु 'अप्रत्ययः' इति निषेधान्न गुणाभेदस्तेन सवर्णग्रहणम्। अत एव घटवदित्यादौ मतोर्मस्य नानुनासिको वकारः। अत एव 'तद्वानासाम्' इति सूत्रनिर्देशः। अन्यथा 'प्रत्यये भाषायाम्—' इति

---

इत्यादि। पूर्वग्रन्थ्या सिद्धान्तमाह— परे त्विति। एव सामान्येनोच्चरधर्मयुक्तेषु विशिष्याह— तिसृचतसृत्यत्र द्वन्द्वेति। अत्रापिपाठो ऐसरप्रमादात्। उच्चारणमिति। तस्य 'विवक्षार्थम्' इत्यत्रान्वय। अन्यत्र यथादौ। सम्पूर्णेति। अन्वयेण सपूर्णा सा वैयटादय इति सूचितामर्थं तत्राह— संपूर्णेति। अधिप्रेतमे। पठितेत्यत्र मान ध्वनयन्, सपूर्णादिपदोक्तिफलमाह— क्वचिदिति। यद्यपि तत्र द्वन्द्वेन पाठोऽनीत्यर्थ। यदि वैयटोक्तोऽर्थ स्यात्तर्हि तत्राशङ्कैवायुक्ता स्यात्। यद्यपि तत्र द्वन्द्वेन समासान्तोदात्तत्वे तन्निमित्तशेषनिघातेन निर्देशानाद्युदात्तस्य, नाप्यन्तोदात्तस्य निर्देश इति शङ्का अयुक्तैव, तथापि तदीयविग्रहवाक्याभिप्रायेण शङ्कादिसत्त्वमिति भाव। पाणिनेस्तथा पाठेऽप्यध्येतृणा तथा पाठाभावात्तदज्ञानेन निपातनेनापि कथ सिद्धिरत आह— यद्यपीति। ननु व्यक्तिपक्षेऽनणर्थ स्वीकृतैतत्परिभाषाया अनूद्यमानेऽणि प्रवृत्तानुनासिक्योपायान्तरादप्रत्त्वाद्ग्रहणाभावेऽपि विधेयेऽणि प्रवृत्त्यापत्ति। 'अप्रत्यय' इति तु सूत्रस्थैव निषेधोऽन आह— विधेयाणीति। 'अप्रत्यय' इत्यस्य योगविभागेन सवनिषेधपरत्वात्। एतेन अनुदित्त्यैव सिद्धेऽण्ग्रहणेनाप्सु गुणभेदश्च न ज्ञाप्यत इत्यनियमित्यपास्तम्, विधेये प्राप्त्यभावेन अनुवादे दोषाभावेन च तज्ज्ञापने फलाभावादिति भाव। अत एव विधेयाण्येतदप्रवर्तनादेव। अत्र मान सूत्रयन्निष्टापत्तिं तत्र परिहरति— अत एव तद्वानिति। नियमित्यनेन पक्षे तत्सिद्धयभाव सूचित। अन्यथा निरनुनासिक एवेति

नित्यमनुनासिकः स्यात् । जातिपक्षे तु नास्योपयोग इति बोध्यम् । ' यॄ ' इत्यादौ दीर्घमात्रवृत्तिजातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः ॥ ११९ ॥

ननु ' सर्वनामानि ' इत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादत आह—

**बाधकान्येव निपातनानि ॥ १२० ॥**

तत्तत्कार्ये नाप्राप्ते निपातनारम्भात् । ' पुराणप्रोक्तेषु— ' इति निपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम् । पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये । इयं सर्वादिसूत्रे भाष्ये स्पष्टा । ' अबाधकान्यपि निपातनानि ' इति तु भाष्यविरुद्धम् ॥ १२० ॥

---

न्दुशेखरे स्पष्टम् । अवतरणे 'व्यक्तिपक्षे' इत्युक्ते फलमाह— **जातीति** । तेनैवेष्टसिद्धेरिति भाव । अस्य उक्तन्यायस्य । नन्वेवम् ' यॄ ' इत्यादौ सर्वग्रहणापत्तिरत आह— **यॄ इत्यादावि**ति । वृद्धिसूत्रे भाष्ये स्पष्टेयम् । ' देवदत्तो मुण्ड्यपि ' इत्यादिन्यायश्चास्य मूलमिति भ्रान्तोक्त तु न युक्तम्, अन्यदिदमुण्डमिति दृष्टान्तस्यापि लोके सत्त्वेनानौ द्वैविध्यापत्ते । एतेन आश्रीयमाणो गुणो भेदको भवतीति परिभाषान्तरमित्यपास्तम्, फलाभावात् । तदाह— **इत्यन्यत्रेति** ॥ ११९ ॥

संज्ञाप्रसङ्गादाह— **नन्विति** । इत्यत्र 'सूत्रे' इति शेष । इत्यादावित्यपपाठः । **साधुत्वमिति** । पूर्वपदात्—' इति सूत्रेणेति भाव । **नाप्राप्त इति** । तथा च येननाप्राप्तिन्यायमूलकत्वमस्या इति भाव । परिभाषान्तरसाधक सीरदेवाद्युक्तमतिप्रसङ्ग निराचष्टे— **पुरेति** । **पुरातनेति** । 'सायम्—' इति व्युत्पन्नस्येत्यर्थ । 'प्राप्तोऽपि' इति पाठ । 'प्राप्नोति' इति पाठे 'यद्यपि तथापि' इति शेषपूरणेन व्याख्येयम् । **पृषोदेति** । बाधकस्य पुराणेति निपातनस्य पक्षे बाधनार्थं तत्र तस्यापि निपातनमिति भाव । उभयत्रानिपातनलाघवादाह— **पुराणेतीति** । एतेन 'पुरातनीर्निदीर्धत' 'पुरातनमुनेर्मुनिताम्' इति माघभारविप्रयोगौ प्रामादिकाविति भागवृत्तिसारदेवाद्युक्तमपास्तम् । केयटदर्शिताद्युक्तिं खण्डयति— **अबाधेति** । **भाष्येति** । 'बाधकान्येव हि— इत्यादिना तत्रोक्तेरिति भाव । अत एव पुरुषोत्तमदेवादिभिरप्येवमेवोक्तम् । एतेन 'निना नया

ननु उखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात्पूर्वमभ्यासह्रस्वत्वाप्रवृत्तौ ह-लादिःशेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह—

## पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १२१ ॥

एवं च ह्रस्वस्यापि ह्रस्वत्वे कृते 'लक्ष्ये लक्षणस्य—' इति न्यायेन न पुनर्ह्रस्वः। तदुक्तम् 'इको झल्' इति सूत्रे भाष्ये— 'कृतकारि खल्वपि शास्त्रं पर्जन्यवत्' इति। सिद्धेऽपि ह्रस्वादिकार्यमित्यर्थः। न च 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इत्यत्र न मानमिति वाच्यम्, 'समो वा लोपमेके' इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वि-

---

णाम्—' इति 'निपातनादेव सिद्धे पक्षे त्रीणामिति प्राप्तस्यावर्तेन 'त्रेस्त्रय' इति सूत्रेण ज्ञापितां तामेवाश्रीयुर्वन्सीरदेवप्राप्त्यादि' परास्त ॥ १२० ॥

संज्ञाप्रसङ्गात्संज्ञोरेश्यत्र विधिविषयोक्तिरिति, निपातनप्रसङ्गात्तदुक्तिरिति वा सूचय-न्नाह— ननूक्तेति। द्विवचनादाविति भावः। पूर्वं वक्ष्यमाणात्। एवं च परिभाषासत्त्वे च। कृत इति। अस्य 'ततो हलादि शेषादौ' इति शेषः। इयं च शब्दान्तरेण भाष्या-रूढेत्याह— तदुक्तमिति। दृष्टान्तेन लोकसिद्धत्वमस्या दर्शितम्। मेघो न्यूने पूर्णे चोप-रेऽनूपरे च वर्षति, तद्वत्। एतेन जलेऽपि वर्षतीति सीरदेवाद्युक्तमपास्तम्; अपूर्णे जले फलसत्त्वात्। ननु कृतादिशब्दबलादन्यशास्त्रकृतेऽन्यशास्त्रप्रवृत्तिरित्यर्थस्यान्यशास्त्रकृतमेव करोतीत्यर्थस्य वा लाभान्न प्रकृतसिद्धिः, अनिष्टापत्तिः, लक्ष्ये लक्षणस्येति न्यायविरोधापत्ति-श्चात आह— सिद्धेऽपीति। स्वत सिद्धेऽपीत्यर्थः। एतेन खट्वाढकमित्यादौ दीर्घ-सिद्धिः फलमित्यपि सीरदेवाद्युक्तमपास्तम्। अत्र ज्ञापकमपि 'प्रवाहणस्य ढे' इत्युत्तर-पदस्यादेर्वृद्धिविधानम्। तद्धि प्रवाहणेयीमानिनीत्यत्र 'वृद्धिनिमि—' इति पुंवत्त्वप्रतिषे-धार्थम्। अमानिनीत्यनुवृत्तौ 'जातेश्च' इत्यनेन न सिद्धिरित्यपि बोध्यम्। प्रसङ्गात्ता प्रतिपादयितुं शङ्कते— न चेति। न मानमिति। तथा च पुनरपि ह्रस्वापत्त्या 'पर्जन्यवत्—' इति परिभाषा निष्फलैव स्यादिति भावः। 'रयो रे' इति द्विवचनं तत्र मानमिति खण्डनकृदुक्तस्यसाङ्गत्यं ध्वनयन्नाह— सम इति। ननु वार्तिकं दृष्ट्वा सूत्रकृतो न प्रवृत्तिरिति सूत्रमते तस्या वैयर्थ्येनाज्ञापकत्वेऽप्येकराकारप्रयोगसिद्ध्यर्थमावश्यकवार्ति-केनैव सिद्धया तस्य वैयर्थ्यमिति वार्तिकमते ज्ञापकत्वमिति वार्तिकारूढत्वेऽपि न भाष्या-

त्वेन च त्रिसकारस्य सिद्धौ 'समः सुटि' इति सूत्रस्यैव मानत्वात् 'संप्रसारणाच्च' 'सिचि वृद्धिः—' इत्यादौ भाष्ये स्पष्टमुक्तत्वाच्च। अत्र विकारकृतो लक्ष्यभेदो नेति 'सिचि वृद्धिः—' इति भाष्यात्प्रतीयत इत्यन्यत्र विस्तरः ॥ १२१ ॥

ननु स्यन्दूधातोः स्यन्स्यतीत्यादौ सकारादिविशेषापेक्षत्वादात्मनेपदनिमित्तत्वाभावनिमित्तत्वात् 'न वृद्भ्यश्चतुर्भ्यः' इति निषेधस्य बहिरङ्गत्वेनान्तरङ्गत्वादूदिल्लक्षणस्येड्विकल्पस्यापत्तिरत आह—

## निषेधाश्च बलीयांसः ॥ १२२ ॥

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः। चतुर्भ्य इति तु स्पष्टा-

---

र्थत्वमिति भ्रममपाकुर्वन्नाह— संप्रेति। तथा च तावतापि प्रामाण्यमेवेति भाव। ननु लक्ष्ये लक्षणस्येति न्यायस्य प्रामाणिकत्वेऽपि प्रकृते विकारकृतलक्ष्यभेदादप्राप्तावुक्तदोषस्तदवस्थ एवात आह— अत्रेति। 'लक्ष्ये—' इति प्रोक्तन्याय इत्यर्थः। 'विकारकृत' इति पाठ। 'विकारागमकृत' इत्यपपाठ, आगमकृतलक्ष्यभेदाङ्गीकारात् तद्भाष्यात्तदलाभाच्च। भाष्यादिति। तत्र हि उदवोढामित्यादावोत्त्वात्परत्वात् 'वदव्रज—' इति वृद्धौ वर्णपदसामर्थ्येनौत्त्वेनेष्ट साधितम्। अन्यथा पुनर्वृद्ध्यापत्त्या भाष्यासंगति स्पष्टैव। प्रतीयत्ते निर्धीयते। तदसागत्यादि चान्यत्र स्पष्टमित्याह— इत्यन्यत्रेति। उद्योताद्यर्थ. ॥ १२१ ॥

तत्प्रसङ्गादेवाह— नन्विति। धातोरिति। प्रकृतिविकृतिभावसम्बन्धे षष्ठी। इत्यादावित्ति। अस्य आपत्तिरित्यत्रान्वय। 'सकेति। सकारादित्वरूपो यो विशेषस्तदपेक्षत्वादित्यर्थ। ननु तत्रापि वलादित्वापेक्षत्वेन समत्वमत आह— आत्मन इति इति केचित्। वस्तुतस्तु 'तीत्यादावात्मनेपदनिमित्तत्वाभावनिमित्तत्वाच्च वृद्भ्य' इ पाठ। तत्र पूर्वनिमित्तकत्वस्योभयत्र तुल्यत्वादाह— आत्मनेपदेति। तथा चाधिव निमित्तकत्वेनात्र तत्त्वं बोध्यम्। धाश्चेति। चो ह्यर्थे, स चात्र हेतौ प्रसिद्धत्वसूचक ॥ चानुपदमेव व्यक्तीभविष्यति। अन्तरिति। अन्तरङ्गादुपजीव्याच्चेत्यर्थ। अपि परादिसमुच्चायक। तथा चानया अन्तरङ्गमपि विकल्पं बाधित्वा तत्र निषेध इति भाव ननूक्तफलस्य चतुर्ग्रहणसामर्थ्यादेव सिद्धिरत आह— चतुर्भ्य इतीति। ननु परिभा-

र्धमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं संगच्छते । अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः । अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः इति मञ्जूषायां विस्तरः । अत एव 'द्वन्द्वे च' 'विभाषा जसि' इति चरितार्थम् । विप्युन्मूलनाय प्रवृत्तिरस्या बीजम् । 'न लुमता—' 'कमेर्णिङ्' इत्यनयोर्भाष्ये स्पष्टम् ॥ १२२ ॥

नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह—

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ १२३ ॥

---

पार्ष्णिकारेण सौत्रपदद्वयान्यार्थत्वं नोचितमत आह— **अत एवेति** । तस्य स्वार्थत्वाद्वैयर्थ्यात्; सुतादिभ्यो यथाप्राप्तं तसयेति वचनव्यवस्थया सर्वेभ्निषेधसिद्धेरिति भावः । एवमन्ततस्तस्य प्राबल्यमुपजीव्योपजीव्यासत्साधयति लक्ष्यदर्शनद्वारा— **अत एवेति** । उपजीव्यतोऽपि तत्प्राबल्यादेवेत्यर्थः । **अन्यथा** एतत्परिभाषायास्तथार्थाभावे । स्वमते तस्य त्वेन प्राबल्यस्याभावादाह— **मीमांसेति** । नानूयाजेष्वित्यादौ पर्युदास एव, न प्रसज्यप्रतिषेधः, विहितप्रतिषिद्धत्वेन विकल्पापत्तेरिति हि तद्दंकम् । **सः** विकल्पः । **मञ्जूषायां** नङ्वादे । तद्धे ज्ञापकमपि ध्वनयन्नाह— **अत एवेति** । तत्रापि निषेधप्राबल्येन विकल्पालाभादेवेत्यर्थः । **द्वन्द्वे चेति** । अस्य 'इति हलेऽपि' इति, 'इत्यग्निमम्' इति वा शेषः । द्वितीये तदनुवृत्तिसूचनार्थमात्रं तदुद्देश. । अन्यथोक्तरीत्या द्वन्द्वे चेत्येतावतैव विकल्पलाभे तदसंगतिः स्पष्टैव । न च नियमार्थं तदिति वाच्यम्, विधिनियमसंभवे विधेरेव ज्यायस्त्वादिति भावः । अस्या लोकसिद्धत्वमाह— **विप्युन्मूलेति** । प्राप्तस्य विधेर्निवर्तनायेत्यर्थः । यस्य यदुन्मूलनाय प्रवृत्तिस्तस्य तत्त्वं ततो लोके प्रसिद्धताभिस्यपबादन्यायेनैवैतद्विषयेऽन्तारात्यसंभव इति भावः । तसिलादिषु जातीयदेशीययोर्ग्रहणमप्यत्र लिङ्गम्; अन्यथा 'पुंवत्कर्मधारय' इति सिद्धे तद्ग्रहणं स्पष्टमेवेत्यपि बोध्यम् । **न लुमतेति** । तत्र हि 'उत्तरपदत्वे च—' इत्यस्य प्रत्याख्यानावसरे 'असर्वनामस्थाने' इति प्रतिषेधोऽन्यथा प्राप्नोतीत्युक्तम् । 'कमेर्णिङ्' इत्यत्रापि णिङोऽनुबन्धयोः सावकाशत्वेन प्रतिषेधबलीयस्त्वात्प्रतिषेधः प्राप्नोतीत्युक्तम् ॥ १२२ ॥

निषेधप्रसङ्गादाह— **नन्विति** । स्वार्थिके दोषाभावादाह— **अत्यन्तेति** । तत्रार्थस्यैवाभावादिति भावः । स्वार्थिके सत्येऽप्यत्यन्तस्वार्थिकेऽन्वयव्यतिरेकयोरभावा-

यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः। स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः। महासंज्ञाबला-द्यर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम्। 'सुपि स्थः' इत्यादिसूत्रेषु भाष्ये स्पष्टैषा ॥ १२३ ॥

## योगविभागादिष्टसिद्धिः ॥ १२४ ॥

इष्टसिद्धिरेव, न त्वनिष्टापादनं कार्यमित्यर्थः। तत्तत्समानविधिकद्वि-तीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ॥ १२४ ॥

## पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ १२५ ॥

तत्र तत्र अन्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापितमिदम् ॥ १२५ ॥

---

स्वार्थस्यापि प्रत्यायकत्वमपि दुर्वचमत आह— यस्यार्थ इति। तत्त्वेनाभिमत इत्यर्थः। अनेन विकारागमयोर्नानया तत्त्वमिति सूचितम्। यत्र हि प्रकृतेः पृथगर्थस्तत्रैवास्याः प्रवृत्तिः। न हि विकारादिरहिता प्रकृतिरर्थवतीति बोध्यम्। प्रकृत्येति। अन्वयव्यतिरेकयोः सत्त्वादिति भावः। इत्यस्य प्रत्ययपदार्थस्य। अपिना प्रत्ययार्थं बोधयति यः, स प्रत्यय इत्यस्य परिग्रहः। तथा च प्रत्ययशब्दे तन्त्रेणार्थद्वयम्। तस्य अत्यन्तस्वार्थिकत्वावच्छि-न्नस्य। नन्वेवं स्त्रीत्वार्थाभावात्स्वार्थ इत्यनुपपन्नमत आह— स्वार्थ इति। स्वशब्द आत्मीयवाची, नात्मवाचीति भावः। अस्या न्यायसिद्धत्वमाह— महेति। प्रत्यय इति महेत्यर्थः। एतेन 'यावादिभ्यः कन्' इत्याद्युदाहरन्तः शेखरदेशादयः परास्ताः। सुपि स्थ इति। तत्र हि आखुत्थ इत्याद्यर्थं योगविभागेन विहितः प्रत्ययो भाव एव, न कर्मा-दावनेन न्यायेनेत्युक्तम् ॥ १२३ ॥

ननु योगविभागप्रसङ्गादाह— योगेति। 'सर्वं वाक्यम्—' इति न्यायेनाह— इष्टेति। एतद्व्यवच्छेद्यमेवाह— न त्विति। तत्तदिति बोध्यान्यपि। द्वितीयेति। कर्मणि क्तः। यदि विभक्तस्य सर्वविषयत्वं स्यात्, तर्हि तस्य वैयर्थ्यं स्पष्टमेव। विभक्त-स्य, मु, सर्व, न., सामान्ये, बोधकाभावादेकयोगत्वम् ॥ १२४ ॥

ननु विकल्पप्रसङ्गादाह— पर्यायेति। एतेनाद्यत्र शास्त्रीति सूचितम्। अस्या मानमाह— तत्र तत्रेति। बहुषु सूत्रेष्वित्यर्थः। विभाषा वेति सूत्रेति। इत्या-दिविविधसूत्रनिर्देशेत्यर्थः। अन्यथा सर्वत्र वेत्येव सिद्धे तन्निर्देशवैयर्थ्यं स्पष्टमेवेति भावः॥

**ज्ञापकसिद्धं न सर्वत्र ॥ १२६ ॥**

स्पष्टमेव पठितव्येऽनुमानाद्बोधनमसार्वत्रिकत्वार्थमित्यर्थः। तेन ज्ञापकसिद्धपरिभाषया अनिष्टं नापादनीयमिति तात्पर्यम्। भाष्येऽपि ध्वनितमेतत् ङ्याप्सूत्रादौ। ज्ञापकेति न्यायस्याप्युपलक्षणम्। न्यायज्ञापकसिद्धानामपि केषांचित्कथनमन्येषामनित्यत्वबोधनायेति भावः। यथा— 'तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रम्, ज्ञापकसिद्धं च तत्र अनल्विधाविति ॥ १२६ ॥

ननु द्रोग्धा द्रोग्धा ध्रोटा द्रोढेत्यादौ घत्वादीनामसिद्धत्वात्पूर्वं द्वित्वे, एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह—

**पूर्वत्रासिद्धीयमद्वित्वे ॥ १२७ ॥**

---

बोद्धज्ञापकप्रसङ्गादाह— **ज्ञापकेति**। अस्या बीजमाह— **स्पष्टमेवेति**। ज्ञापकशब्दार्थमाह— **अनुमानादिति**। तेन तदसार्वत्रिकत्वेन। अस्या भाष्याभिमतत्वमाह— **भाष्येऽपीति**। ङ्याप्सूत्रादौ भाष्येऽपीत्यर्थः। आदिना 'स्वं रूपम्—' इत्यादिपरिग्रहः। नन्वेवमपि न्यायसिद्धाना सार्वत्रिकत्वापत्तिरेवात आह— **ज्ञापकेतीति**। ननु स्पष्टोक्तौ गौरवमित्यनुमानाद्बोधनं लघुभूतमिति कथमसार्वत्रिकत्वमत आह— **न्यायेति**। प्रारम्भे तथा प्रयोगस्तु साभिप्राय इत्युक्तम्। **केषांचित्** अर्थानाम्। **अन्येषां** परिभाषार्थानाम्। अस्योदाहरणमाह— **यथेति**। **इति न्यायेति**। यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वाऽऽसनादीनि लभते, तद्वदत्रापि सिद्धिरित्यर्थः। इदं च स्वं रूपमिति शास्त्रविषये बोध्यम्। **ज्ञापकेति**। 'अदो अभि—' इत्यत्रत्यत्वग्रहणेत्यर्थः ॥ १२६ ॥

विकल्पप्रसङ्गात्तथातिदेशप्रसङ्गाच्चाह— **नन्विति**। इत्यादौ 'भाष्ये' इति शेषः। **घत्वादीनामिति**। आदिना ढत्वादिपरिग्रहः। **पूर्वमिति**। तथा च द्रोहृता द्रोहृतेति स्थितिर्बोध्यः। **त्यस्याप्येति**। अपिर्भिन्नक्रमः। इत्यस्यापत्तिरपीत्यर्थः। आदिना पाक्षिकेष्टसिद्धिसमुच्चयः। अयं भावः— यदि 'एकस्या आकृते—' इत्यस्याः संचारः अर्थान्तरसंभावनाया द्वित्वाभावसंभावनायाः सत्त्वात्, तदेष्टसिद्धिः। यदा अनित्यत्वादिनानाश्रयणं तदापत्तिरिति। एतेन तत्र संचारं कुर्वन्भ्रान्तः परास्तः। **पूर्वत्रेति**। यत्पूर्वत्रा-

द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः । 'पूर्वत्रासिद्धम्' इत्यधिकारभवं शास्त्रमस्या लिङ्गम् । यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषः, तत्रैवेयम् । कृष्णर्द्धिरित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः । 'सर्वस्य द्वे' इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२७ ॥

ननु गोष्वश्वेषु च स्वामीत्यादिवत् गोष्वश्वानां च स्वामीत्यपि स्यात्, 'स्वामीश्वर' इति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह—

**एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्या-**
**स्तृतीयस्याश्च न भविष्यति ॥ १२८ ॥**

---

सिद्धीयं शास्त्रम्, तत्र 'अद्वित्वे' इत्युपतिष्ठत इत्यर्थः । एवं सति पूर्वत्रासिद्धमित्यधिकारादेकवाक्यतया तत्रत्यार्थमाह— **द्वित्वेति** । परिभाषाया उक्तार्थं ध्वनयन्, तदानर्थक्यं परिहरन्, तन्नियमादाह— **पूर्वत्रेति** । लक्षणया तस्य तत्परत्वं गहादित्वाच्छ इति भावः । एतेन द्वित्वे कार्ये पूर्वत्रासिद्धमिति सूत्रं न प्रवर्तत इति परिभाषार्थ इति सीरदेवाद्युक्तमपास्तम्, उदक्षरत्वात् । परिभाषाणां फलवत्त्वनियमादाह— **यत्र चेति** । **कृष्णर्द्धिरिति** । अस्य 'तथा च' इत्यादि । एतेन तत्र संचारं कुर्वन्भ्रान्तः परास्तः । इयं द्वित्वाश्रयवर्णस्यान्यस्य वासिद्धत्वं यत्र कार्ये, तत्र सर्वत्र प्रवर्तते, अप्रवृत्तौ मानाभावात् । उद्द्योतादिग्रन्थास्त्वेकदेशिन इति न दोषः । अनित्या चेयम्, 'उभौ साभ्यासस्य' इति लिङ्गात् । तेन प्रणिनायेत्यादिसिद्धिः । वाक्क्वाणिति भाष्योक्तलक्ष्यसिद्धयेऽर्थान्तरमप्यस्या स्वीकार्यम्, तदाह— **इत्यन्यत्रेति** । शेखरादावित्यर्थः । **स्पष्टेयमिति** । उक्तप्रयोगसिद्ध्यर्थमेव तत्र वार्तिकत्वेन पाठेत्यर्थः । एतेन 'न मु ने' इति योगविभागेन सिद्धेयमित्यपास्तम्, तस्य भाष्यादावदर्शनात् । यत्तु— अशं आयजन्त कृतसर्वकार्यकेत्यर्थं 'सर्वस्य द्वे' इत्यनत्यसर्वग्रहणमत्र ज्ञापकमिति सीरदेवादयः, तन्न, तस्यान्यार्थत्वस्य भाष्य एव स्पष्टत्वादिति दिक् ॥ १२७ ॥

उक्तोपयोगित्वादिवाह— **नन्विति** । **इत्यादिवदिति** । आदिना गवामश्वानां च स्वामीत्यादिपरिग्रहः । **विधानादिति** । प्रयोगभेद इवैकप्रयोगेऽपि तयोर्दुर्वारत्वादिति भावः । **एकस्या इति** । 'यतोऽत्र' इति शेषः । यत एकस्या आकृतेः स्वरूपस्य प्रयोगश्चरितः कृतः, अतो द्वितीयस्यास्तृतीयस्याश्च नेत्यर्थः । चचतुर्थ्यादिसमुच्चायकः । अत्र बीज

यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना, तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः । 'कृञ्चानुप्रयुज्यते—' इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२८ ॥

ननु विव्याधेत्यादौ परत्वाद्धलादिःशेषे वस्य संप्रसारणं स्यादत आह—

**संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२९ ॥**

तदाश्रयम् 'संप्रसारणाच्च' इति पूर्वरूपम् । वस्तुतः 'लिट्यभ्यासस्य—' इति सूत्रे उभयेषांग्रहणस्योभयेषां संप्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति 'लिट्यभ्यासस्य—' इति सूत्रे भाष्ये स्पष्टम् । फलान्तरान्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा । 'णौ च संश्चङोः' इत्यादौ संश्चङोरित्यादि विषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ १२९ ॥

---

ध्वतयमतिप्रसङ्गाभावमाह— **यत्रेति** । अस्ति चात्र गोत्वस्थाना चेयुक्तेऽश्वाना स्वामी गोषु तिष्ठतीत्यर्थान्तरस्य तादृशी प्रतीतिरिति भाव । तथा च लोकसिद्धप्रतिपत्तिलाघवमूलकोऽयं न्याय इति बोध्यम् । तदाह— **इत्यन्यत्रेति** । उद्द्योतादावित्यर्थः । **भाष्य इति** । तत्र हि सूत्राक्षेपे लिट्परस्यैवानुप्रयोगो यथा स्यादन्यपरस्य मा भूदित्युत्तरमनया सखण्ड्य, अन्यथा सिद्धान्तितम् । कैयटेन वेदप्रसिद्धत्वमप्यस्यात्तत्रोक्तम् । एतेनैनामवदन्सीरदेवादि परास्त ॥ १२८ ॥

द्वित्वप्रसङ्गादाह— **नन्वित्यिति** । **परत्वादिति** । अस्य 'संप्रसारणात्' इत्यादि' । तदाश्रयत्वस्यातिप्रसक्तत्वादाह— **संप्रेति** । **रणमेवेति** । अन्यथा वच्यादीना ग्रहादीना चानुवृत्त्यैव सिद्धे किं तेनेति भाव । इदं विव्याधेत्यादिरूपम् । **फलान्तरेति** । ष्यङ्लोपेयङ्यण्निवृत्तिरूपेत्यर्थं । भृष्टो जुहुवतु शुशुवतुरित्यादौ नित्यत्वादिना तत्सिद्धिरिति भाव । भाष्ये न्यूनता परिहरति— **णौ चेति** । एतेनोभयेषां ग्रहणेनेयं ज्ञापिता । तद्धि वव्रश्चेत्यादौ हलादि शेष बाधित्वा संप्रसारणं यथा स्यादित्येवमर्थमिति सीरदेवाद्युक्तम्, सहिवहोरितिसूत्रस्यावर्णग्रहण ज्ञापकमूटवानिति व्यावर्तक हि तदिति न्यासकृदाद्युक्तं चापास्तम्, भाष्यविरोधात् । तदाह— **इत्यन्यत्रेति** । उद्द्योतादावित्यर्थ । वस्तुतोऽ-

यत्तु—

**क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १३० ॥**

तेन 'निसमुपविभ्यो ह्वः' इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः ॥ १३० ॥

तथा—

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १३१ ॥**

तेन 'दाधाध्वदाप्' इत्यत्रौपदेशिकधातोरेव ग्रहणमिति ; तन्न, तयोर्निर्मूलत्वात् भाष्याऽव्यवहृतत्वाच्च । 'न च विकृतिः प्रकृतिं गृह्णाति' इति 'ग्रहिज्या—' इतिसूत्रस्थभाष्येणाद्यायास्तिरस्कारान्च । 'निसमुपविभ्यो ह्वः' इत्यादौ ह्वोऽनुकरणे सौत्रः प्रयोगः । आत्मविषय एवात्मनेपदम्, प्रयोगस्थानामिवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये । अन्यथापि

---

न्यासविकारेषु बाध्यबाधकभावाभावेनेष्टानुरोधेन कार्यप्रवृत्त्येष्टसिद्धया व्यधादौ न दोष इत्यपि बोध्यम् ॥ १२९ ॥

अथ तदुक्तं काश्चित्खण्डयति— **यत्त्विति** । **सिद्धिरिति** । तथा च निह्वयत इत्यादावात्मनेपदसिद्धिः ॥ १३० ॥

अन्यामाह— **तथोपदेशिकेति** । उपदेशे भव औपदेशिकः । अध्यात्मादित्वाट्ठञ् । एवमग्रेऽपि । **ग्रहणमिति** । तेनाधीगित्यस्य सिद्धिर्दामलिङित्यादौ च नेति भावः । तन्नादौ साधारणदोषमाह— **तयोरिति** । ननु तयोर्मूलमस्ति । तत्र द्वितीये मूलं 'आदित—' इत्यादौ श्व्यादिग्रहणं यथाश्यावेत् सीरदकादिभिक्तम् । तद्धि श्वन इत्यादावनया 'युक'— इत्यस्याप्रवृत्तौ सार्थकम् । न हि तत्रोपदेशग्रहणस्यानुवृत्तिः, तीर्णमित्यादेरनयैव सिद्धेः । तथा 'न ध्यो लिटि' इति विकृतनिर्देश आद्ये ज्ञापक इति कथं निर्मूलत्वमत आह— **भाष्येति** । नन्वेवमप्यप्रतिषिद्धमनुमतमिति न्यायेनानुमतत्वमास्तामतो विशेषदोषमाद्य आह— **न चेति** । न हीत्यर्थः । नन्वेवम् 'निस—' इत्यादौ का गतिरत आह— **निसेति** । नन्वशितीति प्रत्ययप्रतिषेधेऽपि पक्षान्तरेकवाक्यतया शितप्रत्ययो-

तत्र तन्त्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्तिककृतश्चासंमता ; 'इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते— यत्रास्यैतद्रूपमिति । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते । कः ? उपदेशो नाम ' इति घसङ्गासूत्रभाष्येण प्रायोगिकासंभवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासंमता च । भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण । 'दादेः—' इति सूत्रे दादिपदस्यौपदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः ॥ १३१ ॥

यदपि— नन्वजर्घा बेभिदीतीत्यादौ तत्तद्ग्रहणप्रयुक्ता विकरणा यङ्लुकि स्युः । तथा यङ्लुकि बेभेदितेत्यादौ 'एकाच—' इतीण्निषेधः

स्यादत आह—

---

यस्यैव तेऽऽत्रविधानाल्लक्षणवत्त्वसपन्नत्वमात्रस्य सीरदेवाद्युक्त दुर्वचमत आह— सौत्र इति । एतेन 'न ध्यो लिटि' इत्यस्य ज्ञापकत्वमपास्तम् । सिद्धान्तमाह— आरम्भेति । तेनास्वैनानुकरणादिति भाव । अत्र हेतुमाह— प्रयोगेति । एत च फलाभावानय । मात भाव । अन्याया तमाह— अस्यापीति । औपदा—कोत प्राग्भावापेक्षय । भाष्यासमत यमाह— इह हीत्यादिना । यत्रास्यैतदिति । यत्रास्यैतद्रूपमनुबन्धयुक्त तत्र घसत्यस्यार्थः । एव चोपदेश एव घसत्रादि, प्रयोग तु स्था नकारानन्वयादिति बोध्यम । तद्ग्रहणम् औपदेशिकग्रहणम् । भाष्ये न्यूनता निराचष्टे— भाष्य इति । शब्दमात्रग्रहणेऽपि 'स्व रूपम्—' इत्यनेन रूपाश्रयणादिति भाव । नन्वेवम् 'दादे—' इत्यत्र का गतिरत आह— दादेरिति । दीक्षिताद्युक्तप्रकारस्यासंगत्यादाह— दादीति । इद च शेखरादौ स्पष्टम् । एतेन आद्यया 'दाधा घ्वदाप्' इत्यत्र देङ्धेञोर्ग्रहणात्प्रणिदयते प्रणिधयतीति सिद्धि फलमिति सीरदेवाद्युक्तम्, अन्यथा अनित्या, 'उपदेशेऽच्—' इत्यत्रोपदेशग्रहणादिति भ्रान्तोक्त चापास्तम् । तदाह— इत्यन्यत्रेति । उद्योतादावित्यर्थ ॥ १३१ ॥

अन्यामपि कैयटदीक्षिताद्युक्ता खण्डयति— यदपीति । यङ्लुकश्छन्दस्त्वेन अदादिगणनात् भाषायामसार्वत्रिकत्वात्तत्र भाष्योक्तलक्ष्याण्याह— अजर्घा इति । आदिना चेच्छिदीतीत्यादिपरिग्रह । विकरणा इति । शप्श्यनादय इत्यर्थ । यङ्लुकि ।

शितपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १३२ ॥

अनुबन्धनिर्देशो द्विधा— स्वरूपेण ङित इत्यादिपदेन च । 'हन्ति याति वाति' 'सनीवन्त—' इति सूत्रे भरेति 'दीङो युडचि', 'अनुदात्तङित:' 'दिवादिभ्यः श्यन्' 'एकाच उपदेशे' इत्युदाहरणानि । द्वित्वम्, 'सनाद्यन्ताः —' इति 'भूवादयः' इति च धातुत्वं च भवत्येव, 'गुणो यङ्लुकोः' इत्यादिभिर्निषेधानित्यत्वकल्पनात् । तेन भष्भावोऽप्यजर्घा इत्यादौ भवति । अत एव 'श्वीदितः—' इति सूत्रे कैयटे 'यत्रैकाज्ग्रहणं किंचित्' इति पाठः । 'एकाच उपदेशेऽनुदात्तात्' इति सूत्रे एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते । अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति ; तदपि न, भाष्यानुक्तत्वात् एकाज्ग्रहणस्य वधिव्याप्त्यर्थमावश्यकत्वाच्च । न च वधिः स्थान्युपदेश एकाजेवेति वाच्यम्, साक्षादुपदेशसंभवेनैतद्विषये स्थान्युपदेशाग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च ।

लक्ष्यविशेषणम् । अत एव तथैव दोषान्तरमाह— **तथा यङिति** । गणकार्यानित्यत्वेन तत्परिहरमित्याशयः । **निषेध इति** । उपदेश एकाच्त्वस्य सत्त्वादिति भावः । 'यत्' इति यत्रेत्यर्थेऽव्ययम् । यद्वा यत् शब्दस्वरूपम् । यत्रेत्यस्य सर्वत्र संबन्धः । **इत्युदेति** । क्रमेणेति भावः । नन्वेवं तत्र द्वित्वादिकं न स्यादत आह— **द्वित्वमिति** । 'सनाद्यन्ता—' इत्यस्य प्रत्याख्यानादाह— **भूवादेति** । 'इति च धातुत्वं च' इति पाठः । **गुणो यङिति** । अन्यथाभ्यासाभावेन तद्वैयर्थ्यं स्पष्टमेव । आदिना 'दीर्घोऽकितः' इत्यादिपरिग्रहः । **निषेधेति** । एतत्परिभाषाबोध्यनिषेधेत्यर्थः । अनित्यत्वस्य फलान्तरमाह— **तेनेति** । एतदनित्यत्वेनेत्यर्थः । **भष्भावोऽपीति** । अपिरुक्तफलादिसमुच्चायकः । **अत एव** एतदनित्यत्वादेव । 'किंचित्' इत्यस्य सर्वत्रान्वयः । तथा च केषांचिदेव तत्राप्रवृत्तिर्न तु सर्वेषामिति भावः । **अनुमत्या** तद्द्वारा । **अन्यथा** अस्या अभावे । **तद्वैयर्थ्यम्** एकाज्ग्रहणवैयर्थ्यम् । ननु [illegible] आह— **एकाजिति** । तस्यादन्तत्वात् । तथा च निर्मूलेयमिति भावः । **न चेति** । तथा च तेन तस्या[illegible]या वैयर्थ्येन तस्य ज्ञापकत्वं मुख्यमेवेति भावः । **साक्षादिति** । मुख्यत्वादिति भावः ।

किंचोत्तरार्थमेकाज्ग्रहणम्। अत एव जागरितवानित्यादावुपदेश उगन्तत्व-मादाय 'श्र्युकः क्किति' इतीण्निषेधो न। तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्ण-मित्यादाविण्निषेधायेत्याकरे स्पष्टम्। न च भाष्ये यङ्लोपे बेभिदितेत्यादा-विट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणाद्धात्वादित्यर्थे 'सनीट्प्रतिषेधो वक्तव्यो बिभित्सति' इति दोषोपन्यासवत् यङ्लुकि दोषानुपन्यासेन तत्रे-डिष्टः। 'यङ्लोपे' इत्यादि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम्। किंच तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्, इड्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात्; अन्यथैका-ज्ग्रहणं किमर्थमिति प्रश्नस्य, उत्तरत्र जागर्त्यर्थमिह वध्यर्थमित्युत्तरस्य च

---

उपेति।' अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वात्तथ्यानुरोधाच्च। तथा च तद्घावर्त्यो वधिरेवेति न ज्ञापकत्वमिति भाव'। तत्र दोषान्तरमाह— किं चेति। उपदेशो तात्कालिकम्। ननूपदेशग्रहणाय तत्र नानुवृत्तिरेव मानाभावादिति तत्र न तत्रा-वृत्तिरत आह— तत्रोपेति। 'श्र्युकः—' इत्यनेनेत्यर्थः। वृत्तिश्चेति। चस्त्वर्थे। अत एव पूर्वमवतरणे 'चर्यावर्यावित्' इत्युक्तम्। प्रवृत्त्यर्थमिति। अस्य 'अङ्गीक्रियमाणे' इति शेषः। दोषानुपेति। 'यङ्लुकीट्प्रतिषेधो वक्तव्यः' इति दोषेत्यर्थः। तत्र यङ्लुकि। इडिष्ट इति। स च सिद्धान्तार्थे 'श्तिपा शपा—' इति निषेधं विनानुपपन्न इतीयमावश्यकीति भाव'। ननु तद्भाष्यं यङ्लुग्विषयमेवेति तत्र दोषोपन्यास एवेति तदिराद्ध्यर्थं तदर्थस्यवाङ्गीकारेण सिद्धान्तार्थाभावेन तदप्राप्त्या निषेधानावश्यकत्वमेवेति न तदभावप्रयुक्तभवादिष्टसिद्धिरत आह— यङ्लोप इति। उपेति। उपक्रमो लोपपदेन, अग्रे स्थानिवत्त्वेन व्यवायेन समाधानमुपसंहारः, तद्बलेनेत्यर्थः। न यङ्लुग्विषय-मिति। न तन्मात्रविषयमित्यर्थः। ननु तद्विषयत्वमप्युच्यते लोपत्वस्य व्यापकत्वादिति नोपक्रमविरोधः, लोपमात्रविषयत्वान्नोपसंहारविरोधोऽपि, अत आह— किं चेति। तस्येति। उपक्रमभाष्यस्य तद्विषयकत्वेऽप्यङ्गीकृत इत्यर्थः। पत्तिरिति। तथा च न तद्विषयकत्वमिति प्रागुक्तार्थसिद्धिरिति भावः। नन्वेवमपि छन्दस्यभिधानमेवेति तत्र का गतिरत आह— छन्देति। तत्र यङ्लुकि। दोषानुपेति। दोषानुपन्यासकृतपरिभा-षाङ्गीकारापत्तिरूपदोषाभावादित्यर्थः। अत्र बीजमाह— अन्यथैकाजिति। उपक्रमरा-

भाष्ये निरालम्बनतापत्तेः । न च आर्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम् । एवं च बिभित्सतीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येवोत्तरखण्डेऽस्तित्ववत् । तत्र 'दयतेः—' इति सूत्रे भाष्ये स्पष्टम् । एवं च प्रकृतभाष्यासंगतिरिति वाच्यम्, आक्षेपे आक्षिप्तस्यान्वये च मानाभावात् । अङ्गत्वं तु विशिष्ट एवेति 'एकाचो द्वे—' इति सूत्रे भाष्ये स्पष्टम् । निरूपितं च तन्नाधिक्षेपे शब्देन्दुशेखरे । धातुत्वं तूत्तरखण्ड एव । अत एव 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये, न तु प्रसिद्धमजर्घा इति । अजर्घा येभिदीतीत्यादौ भम्भयन्नादयस्तु 'चर्करीतं च' इत्यस्यादादौ

---

नङ्गीकार इत्यर्थः । उत्तरत्र 'श्युकः किति' इत्यत्र । ननु तर्हि तत्रैव कर्तव्यमत आह— तत्रेति । यङ्लुग्व्यावृत्त्यर्थत्वेनोक्तरीत्या साफल्ये प्रश्नादेर्निरालम्बनत्वमिति भावः । एवं च तस्य साहशतद्विशेषणत्वे च । दृष्टान्तासिद्धिं परिहरति— तत्रेति । तत्रास्तित्ववेत्यर्थः । स्पष्टमेतत् 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि—' इति परिभाषाखण्डनावसरे मूल एव । ततः किमत आह— एवं चेति । तत्र तत्त्वादिर्निषेधसिद्धौ चेत्यर्थः । असंगतिरिति । एवं चैकदेश्युक्तित्वेन नोक्तार्थे साधकत्वमुक्तभाष्यस्येति भावः । आक्षेप इति । फलाभावात्; यथा पीनत्वानुपपत्त्याऽनुमीयमानरात्रिभोजनस्य पीनत्वोपपत्तिः फलम्, न तथा तत्र सूत्रे तदनुमानेनार्धधातुकत्वोपपत्तिर्भवति; किं चार्धधातुकस्योत्पत्तौ धात्वपेक्षत्वेऽपि ज्ञाने तदनपेक्षत्वादिति भावः । अन्वये चेति । अनतिप्रसङ्गाय वृत्त्युपस्थितस्यैव प्रायेण शाब्देऽन्वयप्रतियोगित्वाङ्गीकारादिति भावः । नन्वेवमप्यङ्गस्येत्यस्याधिकारादेकाचोऽङ्गादित्यर्थेन प्रागुक्तरीत्योत्तरखण्डे तस्य सत्त्वेन बिभित्सतीत्यादावदोषेण भाष्यासङ्गतिरेवात आह— अङ्गत्वं त्विति । 'द्विष्प्रयोगो द्विर्वचनम्' इति सिद्धान्तेन आद्ये प्रत्ययविधानावधित्वप्रत्यभिज्ञया तदादिग्रहणसत्त्वेन समुदाय एव तत्त्वम्, निरर्थकेऽप्यङ्गत्वदर्शनेनाङ्गसंज्ञायामर्थवत्परिभाषाया अप्रवृत्ते. 'यस्मात्' इत्यनेनोद्देश्यतावच्छेदकशब्दानुपूर्व्यावच्छिन्नस्यैव ग्रहणाच्च । तदाह— निरूपितं चेति । नन्वेवं धातुत्वमपि समुदाय एवेत्येव कुतो न स्वीकृतमत आह— धातुत्वं त्विति । अभ्यासस्य नैरर्थक्यात् । इदमपि तत्रैव निरूपितमत्र प्राक्प्रतिपादितं च । अत्रान्यद्भाष्यमपि प्रमाणयति— अत एवेति । तस्योत्तरखण्डीयत्वादेवेत्यर्थः । भाष्ये 'दादेः—' इतिसूत्रस्थे । नन्वेवमजर्घा

पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति । छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः । भाषायां तु तादृशानामभाव एव । श्तिप्शवादिनिर्देशास्तु 'भवतेरः' इत्यादिसूत्रस्थतन्निर्देशवद्धार्थसाधका इत्यन्यत्र विस्तरः ॥ १३२ ॥

ननु 'जभोऽचि' 'रधेश्च' 'नेट्यलिटि' इत्येव सूत्र्यताम्; किं द्वी रधिग्रहणेनेत्यत आह—

पदगौरवाद्योगविभागो गरीयान् ॥ १३३ ॥

प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव । परं तु भाष्यासंमतेयम् । 'टाड्डसि—' इतिसूत्रस्थभाष्यविरुद्धा च । तत्र चेनादेशे इकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः ॥ १३३ ॥

---

इत्यादौ विकरणाः कुतो नात आह— अजर्घा इति । पाठेनेति । अस्य 'बोधितया' इति शेषः । चर्करीतमिति यङ्लुकः संज्ञा, सामर्थ्यात्तदन्तग्रहणम् । संग्राहकवाक्यं चैतत् । तथा चानेन यङ्लुगन्तत्वावच्छिन्नस्य तत्त्वं बोध्यते । यदि ते स्युः, तर्हि तथा बोधनासङ्गतिरेव । तस्मात्तदन्ताच्छबेव तेन बोध्यत इति भावः । नन्वेवमन्यत्र दोषः स्यादेवात आह— छान्देति । नन्वेवमपि भाषायां स्युरत आह— भाषायां त्विति । तादृशानामिति । परिभाषाविषयाणामित्यर्थः । अनेन वैयाचित्तता सूचिता । नन्वेवं श्तिबादिनिर्देशानर्थक्यमत आह— श्तिप्शवेति । भवतेर इति । प्रयोगदृष्ट्यनुकरणात् श्तिप् । निपातनाच्छप् । अत्र लिटो निमित्तत्वेन यङ्लुकि न प्राप्तिरिति तन्निर्देशः साधुत्वद्वारा अदृष्टार्थ एव यथा, एवमन्यत्रापीति भावः । तन्निर्देशेति । शबादिनिर्देशेत्यर्थः ॥

धातुप्रसङ्गात्पदप्रसङ्गाच्चाह— नन्विति । सूत्र्यतां निसृष्टां क्रियतामिष्टानुवृत्तये । वाक्यमिति । तथा च पदगौरवापेक्षया प्रतिपत्तिगौरवे प्रकर्षेण योगविभागेन भिन्नवाक्ये गौरवाधिक्यं स्पष्टमेवेति भावः । परं त्विति । तदनुक्तत्वादिति भावः । पूर्ववदाह— टाङसीति । द्वितीयको हर्थे । योगेति । 'आङि चापः' इत्यत्रेति भावः । एतेन 'प्रतिपदविधानाद्योगविभागो गरीयान्' इति सीरदेवाद्युक्तं परिभाषान्तरमपास्तम् । द्वी रधिग्रहणं तु एकदेशानुवृत्तिबोधकपरिभाषाया अनित्यत्वज्ञापनद्वारा तत्रत्यस्य क्वचिदित्यस्य बोधनार्थमिति बोध्यम् ॥ १३३ ॥

## अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥ १३४ ॥

'एओङ्' 'ऐऔच्' इति सूत्रयोर्ध्वनितैषा भाष्ये । तत्रानेकपदघटितसूत्रे प्रायेण पदलाघवविचार एव, न तु मात्रालाघवविचार इति 'ऊकालोऽच्—' 'अपृक्त एकाल्—' इत्यादिसूत्रेषु भाष्ये ध्वनितम् । तत्र हि सूत्रे अल्ग्रहणहल्ग्रहणयोर्विशेषविचारे, संज्ञाया हल्ग्रहणम्, 'ण्यक्षत्रिय—' इति सूत्रे अणिञोरिति वाच्यमिति त्रीणि पदानि; अल्ग्रहणे तदेकम्, स्वादिलोपे हल्ग्रहणम्, ण्येतिसूत्रे अणिञोरिति न वाच्यम् अपृक्तेति वाच्यमिति त्रीण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम् । 'अचि श्नु—' इति सूत्रे इण इत्येव सिद्धे य्वोरिति संमृय ग्रहणात्पूर्वेणेण्ग्रहणं न; तत्र

---

गौरवप्रसङ्गादाह— अर्धेति । वैयाकरणा अर्धमात्रालाघवेनापि पुत्रोत्सवं मन्यन्ते, किमुताधिकलाघवेनेत्यर्थः । एओङिति । तत्र हि 'एच इग—' इत्यस्य प्रत्याख्यानाय अर्धैकारार्धौकारौ यदि स्याताम्, तर्हि तावेव लाघवादयमुपदिशादित्युक्तम् । ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि प्रदेशेषु ग्रहणं सिध्यति । नन्वेवं मात्रिकयोरेव गुणसंज्ञा स्यात्तात्परत्वादिति चेत्, न, तत्र दीर्घयोरेव स्वरूपेण निर्देशादिति कैयटः । एवमपि तत्र ह्रस्वपाठेऽर्धमात्रालाघवं भवतीति तदाकूतम् । मात्रापदलाघवयोर्व्यवस्थामाह— तत्रेति । तयोर्मध्य इत्यर्थः । एवव्यवच्छेद्यमाह— न त्विति । आदिना 'प्रत्ययस्य लुक्श्लुलुपः' 'ए ओङ्' 'ऐ औच्' इत्यादिसूत्रपरिग्रहः । तत्रान्यध्वनितमुपपादयति— तत्र हीति । 'अपृक्त एकाल्—' इति सूत्रे हीत्यर्थः । 'उक्तम्' इत्यत्रान्वयः । 'वाच्यमिति त्रीणि' इति पाठः । अवान्तरपदत्वाभिप्रायमिदम् । अल्ग्रहण इति । अस्य 'संज्ञायाम्' इत्यादि । तदेकम् अल्ग्रहणमेकम् । त्रीण्येवेति । अपृक्तशब्दस्य संज्ञाशब्दत्वाभावान्तरपदभेद इति भावः । 'ऊकालोऽच्—' इत्यत्र ह्रस्वसंज्ञावचनसामर्थ्याद्दीर्घप्लुतयोः पूर्वसंज्ञा न भविष्यतीति समाधानं समर्थयितुम्, 'यावदज्ग्रहणं तावद्ध्रस्वग्रहणम्' इति संज्ञाया अभावे निर्दिश्यप्रदेशेषु एच इगिति षड्ग्रहणानि, संज्ञाकरणे पुनरष्टावित्युक्तम् । 'प्रत्ययस्य लुक्—' इति सूत्रे 'स एषोऽन्वर्थः कर्तायपरशाब्ययोर्विशिष्टनिर्देशः कर्तव्यः । प्रत्ययग्रहणं वा कर्तव्यम्' इत्युक्तम् । 'ए ओङ्' इत्यादौ वर्णैकदेशानां वर्णग्रहणेन ग्रहणपक्षे दीर्घप्रासक्त्यविध्यभावाय 'दीर्घात्' इति तुग्विधायकं ज्ञापकमित्युक्तम् । अन्यथा ह्रस्वस्येत्यत्र अच इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यादेव तुङ्नेति ज्ञापकपर्यन्तधावनासंगतिरेवेति बोध्यमिति भावः । प्रायशत्युक्तस्य फलमाह— अचीति । समृयेति ।

१

विभक्तिनिर्देशे संमृत्य ग्रहणे च सार्धास्तिस्रो मात्राः, इण इति तिस्रो मात्राः, इति लण्सूत्रे भाष्योक्तेः, तथा 'ओतः श्यनि' इति सूत्रे 'शितीति वक्तव्यम्' तत्रायमप्यर्थः— 'ष्ठिवुक्लमु—' इति सूत्रे शितीति न कर्तव्यं भवति' इति भाष्ये 'न केवलं मात्रालाघवं यावदयमप्यर्थः' इति कैयटोक्तेः—श्रायंणेति शिवम् ॥ १३४ ॥

इति

श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टकृतः

परिभाषेन्दुशेखरः समाप्तः ।

---

आदेशेन तौ निवर्त्येत्यर्थः । 'ग्रहणं न' इति पाठः । तदेवोपपादयति— **तथेति** । 'अचि—' इति सूत्र इत्यर्थः । तयोर्मध्य इति यार्थः । 'ग्रहणे च' इति पाठः । **इति तिस्र इति** । पदच्छेदाभिप्रायेणेदम् । अत एवोक्तम्— **विभक्तिनिर्देश इति** । संहितायां तु सार्धमात्राद्वयमेवेति बोध्यम् । **तथेति** । तथा इति भाष्ये इति कैयटोक्तेरि-त्यन्वयः । **अर्थः** प्रयोजनम् । **यावदिति** । पदगौरवलाघवमर्पात्यर्थः । क्लृप्तसूत्रभाष्यं तु पदलाघवपक्षेणापि सुयोजमिति नात्र तदुक्तम् । एवम् 'शाजनोर्जा' इत्यादिसूत्रभाष्य-मप्यत्र गमकं बोध्यमित्यन्यत्र विस्तर इति सर्वमनवद्यमिति शिवम् ॥ १३४ ॥

इति

श्रीमत्पायगुण्डोपाख्यमहादेवसुतवेणीगर्भजवैद्यनाथभट्टकृतपरिभाषेन्दु-

शेखरकाशिका परिपूर्णा ।

# ॥ श्रीमुनित्रयमन्दिरस्थाः ॥

॥ अन्ये ग्रन्थाः ॥

परिभाषेन्दुशेखरः गदासहितः । रू २—८—०

परिभाषाभास्करः —परिभाषेन्दुशेखरखण्डनरूपः । रू १—०—०

चन्द्रिका—शब्देन्दुशेखरव्याख्या । रू ०—१२—०

कल्पलता—[illegible] । रू [illegible]—०—०

पाणिनितन्त्रवादनक्षत्रमाला—श्रीमदप्पय्यदीक्षितविरचिता । अत्र कौस्तुभ-खण्डनान्तरे— न धातुलोपे— तत्र कौण्डिन्य— विप्रतिषेधे— इको गुणवृद्धी विषयका विमर्शा अतिप्रौढा अवश्यज्ञेयाश्च सन्ति— ग्रन्थसंख्या च प्रायेण ३००० रू १—८—०.

व्याकरणक्रोडपत्रप्रथमभागः — अत्र [illegible] ह्रस्वपदत्व इति वार्त्तिकार्थविचारानुषङ्गिकसूत्रप्रत्याख्यानविचारादिकं चास्ति (ग्रन्थ-संख्या प्रायेण २१००)—रू १—०—०.

व्याकरणक्रोडपत्रद्वितीयभागः — अत्र [illegible] चास्ति (ग्रन्थसंख्या प्रायेण २१००) रू १—०—०

शांकरी—लघुशब्देन्दुशेखरव्याख्या । रू ०—१२—०

शांकरी— कारकशेखरव्याख्या रू ०—८—०

व्याकरणग्रन्थरत्नावली—प्रतिमासं प्रचार्यमाणा सचित्रकम् । अस्याम् सुसमा व्याकरणग्रन्थाः प्रकाश्यन्ते । [illegible] । अत्र गदाचन्द्रिकाबृहच्छब्दरत्नादिकं प्रकाश्यते । एकस्याः संचिकाया मूल्यम्— रू ०—६—६

कारकशब्दरत्नप्रभा—[illegible] । रू ०—४—०

कारकशब्दबोधप्रकरणम्—[illegible]कृतम् । रू ०—२—०.

साहित्यरत्नमञ्जूषा—[illegible] प्रबन्धः । अत्र चत्वारो भागाः, प्रथमे [illegible], द्वितीये तेभ्य एव पद्यानि तृतीये [illegible] चतुर्थे [illegible] । [illegible] । एतादृशपुस्तकावश्यकता सर्वेषामपि सम्मता । रू १—०—०

**स्तोत्राणि—** श्रीमन्निगमान्तमहादेशिकानुगृहीतानि सर्वाणि सन्ति । रू १—०—०

विक्रमार्कचरितम्—([illegible] मुद्रितम्) रू ०—६—०

गद्यत्रयम्— (भगवद्रामानुजविरचितम्) रू १—०—० रघुवंशविमर्शः रू १—०—० वररुचिचरितम् रू ०—४—० तिलकमञ्जरीसंग्रहः प्रथमभागः रू ०—८—० चक्रवर्तिचत्वारिंशत् रू ०—[illegible]—०

भर्तृहरिसुभाषितसारसंग्रहः —रू ०—२—६

☞ सर्वेषामपि प्रापणव्ययः पृथक्

Chef Manager,